### जटाजूट

स धूर्जटिजटाजूटो जायतां विजयाय वः । यत्रैकपलितभ्रान्तिं करोत्यद्यापि जाह्नवी ॥ १२० ॥ चूडापीडकपालसंकुलगलन्मन्दाकिनीवारयो विद्युत्प्रायललाटलोचनपुटज्योतिर्विमिश्रत्विषः । पान्तु त्वामकठोरकेतकशिखासंदिग्धमुग्धेन्दवो भूतेशस्य भुजंगवल्लिवलयस्रङ्नद्धजूटा जटाः ॥ १२१ ॥ गङ्गावारिभिरुक्षिता फणिफणैरुत्पल्लवाग्रान्चिता रक्तैः कोरकिता सितांशुकलया भैरवपुष्पश्रियः । आनन्दाश्रुपरिस्रुताक्षिहुतभुग्धूमैर्मिलद्दोहदा नाल्पं कल्पलता फलं ददतु वोऽभीष्टं जटा धूर्जटेः ॥ १२२ ॥

### गङ्गा

पर्वतभेदि पवित्रं जैत्रं नरकस्य बहुमतङ्गहनम् । हरिमिव हरिमिव हरिमिव सुरसरिदम्भः पतन्नमत ॥ १२३ ॥ द्रवचिद्रूपापि प्रकटजडरूपा भगवती यदीयाम्भोबिन्दुर्वितरति च शम्भोरपि पदम् । पुनाना धुन्वाना निखिलमपि नानाविधमघं जगत्कृत्स्नं पायादनुदिनमपायात् सुरधुनी ॥१२४॥ चूडाशीतकरस्तनन्धयसुधानीरैन्ध्रगन्धस्पृशः क्रीडाकङ्कणपन्नगेश्वरफणापीताध्वशिष्टा मुहुः । अङ्कासीनगिरीन्द्रजास्तनतटीहारावलीलोलना संतापं शमयन्तु वो हरजटागङ्गातरङ्गानिलाः ॥ १२५ ॥ याते याति यदङ्गसंगमवशाच्छ्रीशम्भुरूपं भवे गौरी रुष्यति तुष्यति त्वहिपतिर्विन्ध्याटवी शोचति । चन्द्रस्तम्यति कुप्यते हरिरपि ब्रह्मा परं कम्पते सा गङ्गा निखिलं कलङ्कनिचयं भङ्क्त्वा तरङ्गैर्नयेत् ॥ १२६ ॥ शार्ङ्गी ब्रह्मकमण्डलोरधिगतैर्यं प्रापि तीर्थाङ्किता यैर्मृत्युंजयतामनायि गरलग्रस्तो जटाजूटगैः । येभ्योऽशिक्षत माधुरीं मृदुजटाजूटे मठे चन्द्रमास्तानीमानि पयांसि गौतमि तव श्रेयांसि यच्छन्तु नः ॥ १२७ ॥ यन्नाम्नः प्रथमाक्षरं विजयते मानौ द्वितीयाक्षरं नित्यं नृत्यति सत्कवीन्द्रवदने भूत्वान्त्यवर्णद्वयम् । रामो रावणमाजघान समरे शम्भोः शिरःशालिनी सा सर्वाक्षरमालिनी भवतु मे भाग्याय भागीरथी ॥ १२८ ॥ मुक्ताभा नृकपालशुक्तिषु जटावल्लीषु मल्लीनिभा वह्नौ लाजनिभा दृशोर्मणिनिभा भोगोत्करे भोगिनाम् । नृत्यावर्तविवर्तनेरितपयःसमूर्च्छनोच्छालिताः खेलन्तो हरमूर्ध्नि पान्तु भवतो गङ्गापयोबिन्दवः ॥ १२९ ॥ एषा धर्मपताकिनी तटसुधासेनावसंवासिनी शुष्यत्पातकिनी भगीरथतपःसाफल्यहेवाकिनी । प्रेमारूढपिनाकिनी गिरिसुतासाकेकेरयालोकिनी पापाडम्बरडाकिनी त्रिभुवनानन्दाय मन्दाकिनी ॥१३०॥ स्वच्छन्दोच्छलदच्छकच्छकुहरच्छातेतराम्बुच्छटामूर्च्छन्मोहमहर्षिहर्षविहितस्नानाह्निकाह्नाय वः । भिन्द्यादुद्यदुदारदर्दुरदरीदीर्घादरिद्रद्रुमद्रोहोद्रेकमहोर्मिमेदुरमदा मन्दाकिनी मन्दताम् ॥ १३१ ॥ शैवालश्रेणिशोभां दधति हरजटावल्लयो हन्त यस्यास्तद्वासोल्लासवेल्लद्दरशफरतुला यत्र धत्ते कलावान् । उन्मीलद्भोगिभोगावनिसुभगसिताम्भोजसंभाविताम्भा गङ्गा नङ्गारिसङ्गा महति तत्र विधौ मङ्गलान्यातनोतु ॥ १३२ ॥ दृष्टा सकृष्टदाहा श्रवणपथगता पुण्यपुञ्जावगाहा स्पृष्टा संसारपाथोनिधिपतितधरोद्धारधुर्या वराहा । पीतास्तापोपशान्तिप्रजननपटवस्ते सुधावारिवाहाः कल्याणं कल्पयन्तां कलिकलुषहरा विष्णुपद्याः प्रवाहाः ॥ १३३ ॥ तावत्कर्णाध्वयाता जनजनकलुषाधूनने गन्धवाहा दृष्टा किं हव्यवाहाः सकृदघदहने स्वर्गतौ पुण्यवाहाः । स्पृष्टाः संसारहाहारवकटुकमहाम्भोधिमग्ने धराहाः पीताः पीयूषधाराधिकतरमधुराः पान्तु गोदोदवाहाः ॥ १३४ ॥

### शशिलेखा

पूर्णनखेन्दुद्विगुणितमञ्जीरं प्रेमशृङ्खला जयति । हरशशिलेखा गौरीचरणाङ्गुलिमध्यगुल्फेषु ॥ १३५ ॥ जयति परिमुषितलक्ष्मा भयादनुपसर्पतेव हरिणेन । इह केसरिकरजाङ्कुरकुटिला हरमौलिविधुलेखा ॥१३६॥ श्रीकण्ठस्य कपर्दबन्धनपरिश्रान्तोरगग्रामणीसंदष्टा मुकुटायतंसकलिकां वन्दे कलामैन्दवीम् । या बिम्बप्रतिपूरणाय परितो निष्पीड्य सदंशिकायन्त्रेणेव ललाटलोचनशिखिज्वालाभिरावर्त्यते ॥१३७॥

### लोचनम्

जयति ललाटकटाक्षः शशिमौलेः पक्ष्मलः प्रियाप्रणतौ । धनुषि स्मरेण निहितः सकण्टकः केतकेषुरिव ॥ १३८ ॥ अन्तर्नाडीनियमितमरुल्लङ्घितब्रह्मरन्ध्रं स्वान्ते शान्तिप्रणयिनि समुन्मीलदानन्दसान्द्रम् । प्रत्यग्ज्योतिर्जयति यमिनः स्पष्टलालाटनेत्रव्याजव्यक्तीकृतमिव जगद्व्यापि चन्द्रार्धमौलेः ॥ १३९ ॥ सानन्दा गणनायके सपुलका गौरीमुखाम्भोरुहे सक्रोधा कुसुमायुधे सकरुणा पादानते वज्रिणि । सस्मेरा गिरिजासखीषु सनया शैलाधिनाथे वहन्भूमीन्द्र प्रदिशतु शर्म विपुलं शम्भोः कटाक्षच्छटा ॥ १४० ॥ एकं ध्याननिमीलनान्मुकुलितं चक्षुर्द्वितीयं पुनः पार्वत्या वदनाम्बुजस्तनतटे शृङ्गारभारालसम् । अन्यद्दूरविकृष्टचापमदनक्रोधानलोद्दीपितं शम्भोर्भिन्नरसं समाधिसमये नेत्रत्रयं पातु वः ॥ १४१ ॥ पक्ष्मालीपिङ्गलिम्नः कण इव तडिता यस्य कृत्स्नः समूहो यस्मिन्ब्रह्माण्डमीषद्विघटितमुकुले कालयज्वा जुहाव । अर्चिर्निष्टप्तचूडा-

१ केशादी जरसा यच्छौक्ल्यं तत् २ निर्यद्घनदमाला ३ निबिड ४ तिर्यग्दृष्ट्या ५ अनूपसदृश कश्चिन्नपादेशप्रदेशः ६ वल्वान् ७ पङ्क्ति ८ नश्यत् ९ क्षपिति

१ व्यक्तीभवत् २ अक्षीणानाम्, महतामित्यर्थः ३ सान्द्रस्निग्ध ४ मा यम् ५ जटाजूट ६ कबरिका ७ शान्तिमति ८ व्याघ्रम् ९ अभोगानि

शशिगलितसुधाधोरक्षाकारिकोण तार्तीय यत्पुरारस्सदस्तु मदनप्लोषण लोचन च ॥ १४२ ॥

कण्ठ

पातु वो नीलकण्ठस्य कण्ठ श्यामाम्बुदोपम । गौरीभुजलता यत्र विद्युल्लेखेव राजते ॥ १४३ ॥ पातु व शितिकण्ठस्य तमालश्यामलो गल । ससत्त्वपार्वतीबाहुसुवर्णनिकषोपल ॥ १४४ ॥ कस्तूरीतिलकन्ति भालफलके देव्या मुखाम्भोरुहे रोलम्बन्ति तमालबालमुकुलोत्तंसन्ति मौलि प्रति । या कर्णे विकचोत्पलन्ति कुचयोरसे च कालागुरुस्थासन्ति प्रथयन्तु ताम्तव शिव श्री कण्ठकण्ठत्विष ॥ १४५ ॥ कस्तूरीयन्ति भाले तदनु नयनयो कज्जलीयन्ति कर्णप्रान्ते नीलोत्पलीयन्त्युरसि मरकतालङ्कृतीयन्ति देव्या । रोमालीयन्ति नाभेरुपरि हरिमणीमेखलीयन्ति मध्ये कल्याण कुर्युरेते निजगति पुरजित्कण्ठभासा विलासा ॥ १४६ ॥

शिरोमालिका

पित्रो पार्श्वमसेनागतगिरितनयोपुनर्नोतिर्मातक्षुभ्यद्रूपाभुजगश्वसनगुरुमरुद्वीक्षनेनाभितापात् । म्विधन्मौलीन्दुखण्डस्तुतबहुलसुधासेकसञ्जातजीवा पूर्वाधीत पठन्ती हरतु विधिशिरोमालिका शूलिनो व ॥ १४७ ॥

गणा

सप्यानाण्डवडम्बरप्रणयिना देवस्य चण्डीपतेर्भ्रष्टापीडविशीर्णमुण्डचयनव्यग्रा गणा पान्तु व । यैरौत्सुक्यनगीकृतैर्महगणाद्राहौ गृहीते हठात्सुधाचन्द्रमसोमिथ स्मितधृतोजात कपस्खालनम् ॥ १४८ ॥

नन्दी

कण्ठालङ्कारघण्टाघणघणरणितैर्ध्मानरोदं क्वाह कैण्ठेकाणाधिरोहोचितघनसुभगभावुकस्निग्धपृष्ठ । साक्षाद्धर्मो धनुष्मान् घनलकुदनिर्घूतकैलासकूट कूटस्थो व ककुद्माञ्जिविहततरतम सोमनृत्या विनिर्णेयात् ॥ १४९ ॥

ताण्डवम्

देवा दिक्पतय प्रयात परत स्त्र मुखताम्भोमुचे पाताल व्रज मेदिनि प्रविशत क्षोणीतल भूधरा । ब्रह्मन् भय दूरमानमुन्नत नायस्व नो नृत्यत शम्भो सङ्कटमित्युदित्यवतु व प्रेक्षोत्थरणा नन्दिन ॥ १५० ॥ दोर्दण्डद्वयलीलया चलगिरिभ्राम्यच्चतुर्बाहुव्यानोद्गीतजगद्गमलद मरालोल्लसणाभ्योगम् । मुञ्जापिञ्जजटाटवीपरिसरोद मौर्मिमाडाचन्द्र चारु महेश्वरस्य भवना नि श्रेयसे ताण्डवम् ॥ १५१ ॥ सप्यानाण्डवडम्बरन्यसनिनो भगस्य चण्डभ्रमिव्यानृत्यद्भुजदण्डमण्डलभुवो झञ्झानिला पान्तु व । येषामुच्छलता जवेन झगिति व्यूहेषु भूमीभृतामुड्डीनेषु बिडौजसा पुनरसौ दम्भोलिरालोकित ॥ १५२ ॥ यस्या मौलिमिलत्सुधांशुकल्या सपूर्णनिम्बायित भालवस्थितलोचनेन सहसैवालातचक्रायितम् । आवर्तायितमाकपर्दममरस्रोतस्वतीधारया पातु त्रीणि जगन्ति खण्डपरशो सा ताण्डवाङ्गभ्रमि ॥ १५३ ॥ पादस्याविर्भवन्तीमवनतिमवने रक्षत स्वैरपातै सङ्कोचेनैव दोष्णा मुहुरभिनयत सर्वलोकातिगानाम् । दृष्टिं लक्ष्येषु नोग्रा ज्वलनकणमुच वध्नतो दाहभीतेरित्याधारानुरोधात्त्रिपुरविजयिन पातु वो दु खनृत्तम् ॥ १५४ ॥ मूर्धव्याघूयमानध्वनदमरधुनीलोलकल्लोलजालोद्भूताम्भ क्षोददम्भात्प्रसभमभिनम क्षिप्तनक्षत्रलक्षम् । ऊर्ध्वन्यस्ताङ्घ्रिदण्डभ्रमिभवरभसोद्यद्भ्रमत्स्वप्रवेशभ्रान्तब्रह्माण्डखण्ड प्रवितरतु शिव शाम्भव ताण्डव व ॥ १५५ ॥ शर्वाणीपाणितालैश्चलवलयझणत्कारिभि श्लाघ्यमान स्थाने समाव्यमान पुलकिततनुपा शम्भुना प्रेक्षकेण । खेलत्पिञ्छालि केकाकलकलकलित क्रौञ्चभिद्बर्हियूना हेरम्बाक्रान्दबृहितैरलितमनमस्ताण्डव त्वा धिनोतु ॥ १५६ ॥ पायादायासखेदस्मितफणिफणारत्ननिर्यत्ननिर्यच्छायामायापतङ्गद्युतिमुदितवियद्वाहिनीचक्रवाकम् । अश्रान्ताभ्रान्तचूडातुहिनकरकरानीकनालीकनालच्छेदामोदानुधावद्घिरमिव रागे धूर्जटेस्ताण्डव [redacted] ॥ १५७ ॥ उच्चैरुत्तालखेलद्भुजवनपवनोद्धूतशैलौघपातस्फारोदञ्चत्पयोधिप्रकटितमुकुटस्वर्धुनीसङ्गमानि । जीयासुस्ताण्डवानि स्फुटविकटजटाकोटिसङ्घट्टभूरिभ्रश्यन्नक्षत्रचक्रव्यतिमितसुमनोवृष्टिपातानि शम्भो ॥१५८॥ देवस्त्रैगुण्यभेदात्सृजति वितनुते संहरत्येष लोकानस्यैव व्यापिनीभिस्तनुभिरपि जगद्व्याप्तमष्टाभिरेव । धन्यो नाप्नेति पश्यन्निव चरणगत पातु पुष्पाञ्जलिर्व शम्भोर्नृत्यावतार वलयमणिफणाफूत्कृतैर्विप्रकीर्ण ॥ १५९ ॥ चञ्चद्देवेन्द्रमुक्तस्खलितदशदिशाकीर्णकोटीरकोटय सगायत्सर्वैधूर्त्य सरभसविनमत्सिद्धगन्धर्वघाट्य । विक्षिप्यद्भ्रमपक्ष्यो निगल्गितगतपतासनोच्चरत्क्षोदव्यक्तलैलासकल्पत्रिपुरविजयिन पान्तु मामारभट्य ॥ १६० ॥

अर्धनारीश्वर

मन्दारमालाकुलितालकायै कपालमालाङ्कितशेखराय । दिव्याम्बरायै च दिगम्बराय नम शिवायै च नम शिवाय ॥ १६१ ॥ एक स्तनस्तुङ्गतर परस्य वार्तामिव

१ षडानन- २ षाडनम्, मधुरध्वय ३ पूरैन ४ यथा दृष्टयो ५ ज्वर- ६ हृदन मरदौस्न्य् ७ दरिभूर ८ निःक्षन्, निरीक्षणतया त्रिशरीर्ष्यै- ९ अवनमिवहन- १० दुन्दुभूर- ११ करतु १२ वत- [redacted] मातुनर्मनिर्देह-

१ इन्द्रेण २ वक्त्रम् ३ पूर्वम्या- ४ यथेष्ट सेवने- ५ अनिरानपत्रदत्तगुरुत्वमानाम् ६ आधारस्य पृथिव्यादेरनुरोधादनुग्रहाद् ७ कथा ८ पार्वती. ९ अचितम् १० बहुपक्ष- ११ षडानन १२ अश्रान्ते भ्रमम् १३ गर्जितम् १४ पुष्पधनम्, मेरविर्भ्रमालेति भाव- १५ अनायासम् १६ गुरुसरित् १७ वाग १८ ताण्डवमारभन्तम्

प्रष्टुमगान्मुखाग्रम् । यस्या प्रियार्धस्थितिमुद्वहन्त्या सा पातु व पर्वतराजपुत्री ॥ १६२ ॥ यस्योपवीत गुण एव फणाकृतेकरक्षोरुह कुचपटीयति वाममागे । तस्मै ममास्तु तमसामवसानसीम्ने चन्द्रार्धमौलिशिरसे म-हसे नमस्या ॥ १६३ ॥ स्वेदार्द्रवामकुचमण्डनपत्रमङ्ग-सगोपिदक्षिणकराङ्गुलिभस्मरेणु । स्त्रीपुनपुसकपदव्यति-लङ्घिनी व शमोस्तु मुखयतु प्रकृतिश्चतुर्थी ॥ १६४ ॥ सभोगानतिरिच्यमानविभवो यद्विप्रलम्भो रसस्तद्दिव्य मि-थुन परस्परपरिस्यूत नमस्कुर्महे । एकस्या प्रतिबिम्बसभृत-विपर्यासे मुहुर्दर्पणे मव्याङ्गस्थितिकौतुक शमयति स्वामी स यत्नापर ॥ १६५ ॥ आश्लेषाधरबिम्बचुम्बनमुखालाप-स्मितान्यासता दूरे तावदिद मिथो न सुलभ जात मुख-लोकनम् । इत्थ व्यर्थकृतैकदेहघटनोपन्यासयोरावयो केय प्रेमविडम्बनेत्यवतु व खेरोऽर्धनारीश्वर ॥ १६६ ॥ स्वच्छन्दैकस्तनश्रीरमयदलमिलन्मौलिचन्द्र फणीन्द्रप्राची-नावीतवाही सुखयतु भगवानर्धनारीश्वरो व । यस्याध विश्वदाहव्यसननिसृमरज्योतिरर्धे कृपोद्धाप्य चान्योन्य-वेगप्रहतिसिमसिमाकारि चक्षुस्तृतीयम् ॥ १६७ ॥

## पार्वती

हरकण्ठमहानन्दमीलिताक्षीं नमाम्युमाम् । कालकूट-विषस्पर्शजातमूर्च्छागमामिव ॥ १ ॥ पार्वतीमोषधीमेका-मपर्णां मृगयामहे । शूली हालाहल पीत्वा यया मृत्युजयो-ऽभवत् ॥ २ ॥ अपर्णैव लता सेव्या विद्वद्भिरिति मे मति । यया धृत पुराणोऽपि स्थाणु सूतेऽमृत फलम् ॥ ३ ॥ मृणालव्यालवलया वेणीबन्धकपर्दिनी । हरानुकारिणी पातु लीलया पार्वती जगत् ॥ ४ ॥ जन्मान्तरीणरमणस्याङ्गसङ्ग-समुत्सुका । सलज्जा चान्तिके सख्या पातु न पार्वती सदा ॥ ५ ॥ तपस्वी का गतोऽवस्थामिति स्मेराननाविव । गिरिजाया स्तनौ वन्दे भवभूतिसिताननौ ॥ ६ ॥ चिरमा-विष्कृतप्रीतिर्मातय पान्तु वो द्विपाम् । वलयज्यारवोन्मि-श्राश्चर्या कोदण्डकृतय ॥ ७ ॥ चण्डीजङ्घाकाण्ड शिरसा चरणस्पृशि प्रिये जयति । शर्करपर्व तर्जितो वीरस्तम्भ स्मरस्येव ॥ ८ ॥ उन्नालनाभिपङ्करुह इव येनावभाति शम्भु-रपि । जयति पुरुषायितायास्तदानन शैलकन्याया ॥ ९ ॥ अङ्कनिलीनगजाननशङ्काकुलबाहुलेयहृतवसनौ । सस्मितहर-करकलितौ हिमगिरितनयास्तनौ जयत ॥ १० ॥ कण्ठो-चितोऽपि हुकृतिमात्रनिरस्त पदान्तिके पतित । यस्याश्च-न्द्रशिरा स्मरमहनिभो जयति सा चण्डी ॥ ११ ॥ विरश्चि-नारायणनन्दनीयो मान विनेतु गिरिशोऽपि यस्या । कृपा-कटाक्षेण निरीक्षणानि व्यपेक्षते सावतु वो भवानी ॥ १२ ॥ शिरसि धृतसुरापगे स्मरारावरुणमुखेन्दुरुचिर्गिरीन्द्रपुत्री । अथ चरणयुगानते स्वकान्ते स्मितसरसा भवतोऽस्तु भूतिहेतु ॥ १३ ॥ तद्व प्रमार्ष्टु विपद प्रणतार्तिहन्त्र्या न्यस्त पद महिषमूर्धनि चण्डिकाया । वैरी यदीयनखराशु-परीतशृङ्ग शक्रायुधाङ्कितनवाम्बुधरभ्रमोऽभूत् ॥ १४ ॥ श्रुत्वा षडाननजनुर्मुदितान्तरेण पञ्चाननेन सहसा चतु-राननाय । शार्दूलचर्म भुजगाभरण समस्त दत्त नि-शम्य गिरिजाहसित पुनातु ॥ १५ ॥ पञ्चास्यपञ्च-दशनेत्रपिधानदक्षा दाक्षायणीमृदुकरा कृतिन पुनन्तु । द्वौ वल्कौ कथमकेति च यादय तावष्टादशोऽपि घटयन्स्तुति-मौनमुद्राम् ॥ १६ ॥ आनन्दमन्थरपुरदरमुक्तमाल्य मौलौ हठेन निहित महिषासुरस्य । पादाम्बुज भवतु वो विजयाय मञ्जु मञ्जीरशिञ्जितमनोहरमम्बिकाया ॥ १७ ॥ ब्रह्मादयो-ऽपि यदपाङ्गतरङ्गभङ्ग्या सृष्टिस्थितिप्रलयकारणता भजन्ति । लावण्यवारिनिधिवीचिपरिप्लुतायै तस्यै नमोऽस्तु सतत हरवल्लभायै ॥ १८ ॥ ज्याकृष्टिबद्धखटकामुखपाणिपृष्ठप्रेङ्खन्-नखांशुचयसवलितोऽम्बिकाया । त्वा पातु मञ्जरितपल्लवकर्ण-पूरलोभभ्रमद्भ्रमरविभ्रमभृत्कटाक्ष ॥ १९ ॥ पौलस्त्यपीनभुज-सपदुदस्यमानकैलाससभ्रमविलोलदृश प्रियाया । श्रेयासि वो दिशतु निह्नुतकोपचिह्नमालिङ्गनोत्पुलकमाश्रितमिन्दुमौले ॥ २० ॥ दिश्यान्महासुरशिर सरसीप्सितानि प्रेङ्खन्नखा-वलिमयूखमृणालनालम् । चण्ड्याश्चलद्बहुलनूपुरचञ्चरीक-झाकारहारि चरणाम्बुरुहद्वय व ॥ २१ ॥ रचयति सहसा यचित्रमेतत्प्रपञ्च प्रशमयति च तद्वत्केवलं चित्रकौतुकेन । अवि-दितमपरैस्तच्चण्डमुण्डादिनादादनुजदलनदक्ष शर्वसर्वस्वम-व्यात् ॥ २२ ॥ प्रचण्डचण्डमुण्डयोर्महाबलैकखण्डिनी स्वनेक-रुण्डमुण्डयुग्मणे बलैकदायिनी । क्वचिच्छक्तिकारिणी रमावि-लासदायिनी मुदेऽस्तु कालिका सदा समस्तपापहारिणी ॥२३॥

१ वक्षुरीभवति २ यज्ञोपवीतम् ३ प्रसारी ४ पवनसवर्धिनीम्, पक्षे,–पवनपुत्रीम् ५ पत्रादितान्, पक्षे,–तनयां पार्वतीम् ६ शल्योद्वान्, पक्षे,–निराशुरी ७ मृत्युनाशक, पक्षे,–प्रत नाम्ना प्रसिद्ध शिव ८ स्मत गुणविशेषणतया तुच्छविषयता सुखस्याप्येतादृशस्यस्य प्रतिपादनादिति भाव

१ स्तनयो कुम्भिकुम्भभाम्यादिति भाव २ कथ मां विहाय नमेव सगोप्य वसुवाल स्तन्य प्रयच्छतीति धियेति भाव ३ कार्ति केय ४ गजाननविषयाभ्रमिति भाव– ५ आलिङ्गनार्होऽपि, पक्षे,–अथच द्वारतया कण्ठलग्नयोग्योऽपि ६ न तु नरत्वेना दिना, पक्षे–बाणादिना ७ प्रणामार्थमिति भाव, पक्षे,–वेगव शादिति भाव ८ हस्तविन्यासविशेष ९ इन्दुमौले प्रियाया पार्वत्या १० शर्वस्य शिवस्य सर्वस्व पार्वतीरूपम्

पुरारितनुहारिणी दुरितसङ्घसंहारिणी भज मतिविवर्धिनी प्रबन्धदाननोमर्दिनी । तुषारगिरिनन्दिनी मुनिहृदन्तरालम्बिनी कुमारमुखचुम्बिनी हरनितम्बिनी पातु वः ॥ २४ ॥ ब्रह्मादिस्थिरगणितगुणैर्हन्त विश्वं प्रसूय व्यक्तं धत्ते प्रहसनकरी या कुमारीति संज्ञाम् । मोहध्वान्तप्रसरविरतिर्निश्चमूर्तिं मम ताद्दाद्या शक्तिः स्फुरतु मम सा दीपनद्देहगेहे ॥ २५ ॥ औत्सुक्येन कृतत्वरा सहभुवा व्यावर्तमाना ह्रिया तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताभिमुख्यं पुनः । दृष्ट्वाऽग्रे वरमात्तसाध्वसरसा गौरी नवे संगमे संरोहत्पुलका हरेण हसताश्लिष्टा शिवायास्तु वः ॥ २६ ॥ आदौ प्रेमकषायिता हरमुखव्यापारलोला शनैर्व्रीडाभारविघूर्णिता मुकुलिता भ्रूभेदभव्याजतः । पश्चात्संमिलिता दृशा मरभमव्यावर्तनव्याकुला पार्वत्याः परिणीतिमङ्गलविधौ दृष्टिः शिवायास्तु वः ॥ २७ ॥ प्रत्यासन्नविवाहमङ्गलविधौ देवार्चनव्यग्रया दृष्ट्वाऽग्रे परिणेतुरेव लिखितां गङ्गाधरस्याकृतिम् । उन्मादस्मितरोषलज्जितधिया गौर्या कथंचिच्चिरादुद्दिश्यैव नान्यये विनिहितः पुष्पाञ्जलिः पातु वः ॥ २८ ॥ रामा याचय मेदिनीं धनपतेर्बीजं बलाल्लाङ्गलं प्रेतेशान्महिषं तवास्ति वृषभः फालं त्रिशूलं तव । शक्ताऽहं तव चान्नदानकरणे स्कन्दोऽस्ति गोरक्षणे खिन्नाऽहं हर भिक्षया कुरु कृषिं गौरीवचः पातु वः ॥ २९ ॥ हे हेरम्ब किमम्ब रोदिषि कथं कर्णौ लुठत्यग्निभूः किं ते स्कन्द विचेष्टितं मम पुरा संख्या कृता चक्षुषाम् । नैतत्तेऽप्युचितं गजास्य चरितं नासां मिमीतेऽम्ब मे तावेवं सहसा विलोक्य हसितव्यग्रा शिवा पातु वः ॥ ३० ॥ मातस्तातजटासु किं सुरसरित्किं शेखरे चन्द्रमाः किं भाले हुतभुग्लुठत्युरसि किं नागाधिपः किं कटौ । इत्थं किं जघनद्वयान्तरगतं यद्दीर्घमालम्बते श्रुत्वा पुनरबोधबालवचनं स्मितमुखी लज्जावती पातु वः ॥ ३१ ॥ घूमव्याकुलदृष्टिरिन्दुकिरणैराह्लादिताक्षी पुनः पश्यन्तीव षण्मुखं नतमुखी भूयो ह्रिया प्रेक्षणम् । सेर्ष्या पादनखेन्दुदर्पणगते गङ्गां दधानं हरं सव्रीडाकुलिता करग्रहविधौ गौरी शिवायास्तु वः ॥ ३२ ॥ गोनर्दाय नियोजितागदरसा सर्पाय मन्त्रौषधिं कण्ठस्थाय विषाय वीर्यमहतः पाणौ मणिं बिभ्रती । भर्तुर्भूतगणाय गानमेरैतानिर्दिष्टमध्याक्षरा रक्षताद्रिसुता विवाहसमये प्रीतौ च भीतौ च वः ॥ ३३ ॥ स्वेदस्यन्दिनसान्द्रचन्दनचयं दोर्वल्लिबन्धश्रमादूर्ध्वश्वासपरिस्खलत्स्मरकथं संदष्टदन्तच्छदम् । सीत्काराञ्चितलोचनं सपुलकं श्रान्तेषु नृत्यत्करं पार्वत्याः सुरतं मुदे रसवतामास्तां मृडानीपते ॥ ३४ ॥ स्वेदस्ते कथमीदृशः प्रियतमे त्वन्नेत्रवह्नेर्विभो वक्त्राद्वेपितमेतदिन्दुवदने भोगीन्द्रभीतेस्तव । रोमाञ्चः कथमेष देवि भगवन्गङ्गाम्भसा सीकरैरित्थं भर्तरि भावगोपनपरा गौरी चिरं पातु वः ॥ ३५ ॥ शम्पाकस्य रजः प्रमृज्य चरणे न्यस्तो मया यावको निर्मृज्य स्तनकुड्मले च भसितं पत्राङ्कुरो निर्मितः । स्वच्छन्दं विहरेति जल्पितगिरं मालाकृतमालीजनं दृष्ट्वा केनकृमाभ्रती कुटिलया दाक्षायणी पातु वः ॥ ३६ ॥ वक्त्रं शीतकरोऽधरो मधुरसः कामप्रदो विग्रहः श्वासो गन्धवहः सरोरुहमुखस्त्याणि स्मिताभा शुचिः । वक्षः पीनपयोधरं गधिकरणं पृथ्वी नितम्बस्थलीत्यष्टौ धूर्जटिमूर्तयः स्मरभयाद्दुर्गाश्रिताः पान्तु वः ॥ ३७ ॥ पादाग्रस्थितया मुहुः स्तनभरेणानीतया नम्रतां शम्भोः सस्पृहलोचनत्रयपथं यान्त्या तदाराधने । ह्रीमत्या शिरसीहितः सपुलकस्वेदोद्गमोत्कम्पया विश्लिष्यन्कुसुमाञ्जलिर्गिरिजया क्षिप्तोऽन्तरे पातु वः ॥ ३८ ॥ कैलासालयभाललोचनरुचा निर्वर्तितालक्तकव्यक्तिः पादनखद्युतिर्गिरिभुवः सा वः सदा त्रायताम् । सर्धाव बधसमृद्धयेन सुदृढं रूढा यया नेत्रयोः कान्तिः कोकनदानुकाररसा सद्यः समुत्सार्यते ॥ ३९ ॥ लग्नं केलिकचग्रहश्लथजटालम्बेन निद्रान्तरे मुद्राङ्कं शितिकन्धरेन्दुशकलेनान्तः कपोलस्थलम् । पार्वत्या नखलक्ष्मशङ्कितसखीनर्मस्मितव्रीडया प्रोन्मृष्टं करपल्लवेन कुटिलाताम्रच्छवि पातु वः ॥ ४० ॥ सव्रीडा दयिताननेसकरुणा मातङ्गचर्माम्बरे सत्रासा भुजगे सविस्मयरसा चन्द्रेऽमृतस्यन्दिनि । सेर्ष्या जह्नुसुतावलोकनविधौ दीना कपालोदरे पार्वत्या नवसंगमप्रणयिनी दृष्टिः शिवायास्तु वः ॥ ४१ ॥ भिक्षुः क्वास्ति बलेर्मखे पशुपतिः किं नास्त्यसौ गोकुले मुग्धे पन्नगभूषणः सखि सदा शेते च तस्योपरि । आर्ये मुञ्च विषादमाशु कमले नाहं प्रकृत्या चला चेत्थं वै गिरिजासमुद्रसुतयोः संभाषणं पातु वः ॥ ४२ ॥ हे गङ्गाधरपत्नि पन्नगवधु किं कुत्रास्त्यसौ नर्तको वृन्दारण्यभुवि प्रसर्पकुतुकी मात्राल्पियम्य हृदे । भिक्षुः क्व गतोऽस्ति

१ शर्मीरवती २ मन्दं ३ निरतिशय ४ परस्त्ररागात् ५ कुबेरात् ६ बलभद्रात् ७ यमात् ८ कृषक ९ रक्षणे १० गोनासादिसर्पविषनिवृत्त्यर्थं गोनाम सर्पविशेषः ११ कृष्णा १२ यार्थ्यौ कृतवस्त्रम् पुष्पोत्तमश्च सर्वैर्देवैः १३ मूर्धाग्रविनिर्मिता भागेष्वनेकधा-

१ चुम्बितानित्यर्थे २ निमीलितं ३ रोमहर्षणम् ४ साभिप्राय ५ रम्भारस ६ भस्म ७ उदकम्, पक्षे-अधिररस ८ शरीरम् धवधानरूपम् ९ कमलानां निवम्, पक्षे स्वार्थे, पाणिरश्मे,-सरोजानां सदृशी कान्तिरस्य १० अग्नि ११ स्तनौ, पक्षे-मेघौ १२ स्थानम् धाराधरे मेघानां स्थानमिति प्रसिद्धम् १३ इष्ट १४ रचोरत्न १५ गोरस, पक्षे,-निमग्नौ निरन्तरस्य निवम् १६ चपला, पक्षे,-लक्ष्मी-

यज्ञमदने क्वासौ विषादी बकीकोडे स्यादिति पद्मजागिरिजयोर्वाग्भङ्गय पान्तु व ॥ ४३ ॥ वेणीवन्धकपर्दिनी सिततनु श्रीखण्डपांसूत्करैर्वेतक्येकदलेन्दुमूर्द्धसिलता व्यालोपवीतिन्यपि । प्राक्पाणिग्रहणाद्विनोदरभसा सख्या पुरो लीलया धूर्जाटानुकृतिं हरस्य दिशतु श्रेयांसि व पार्वती ॥ ४४ ॥ यस्याङ्घ्रिद्वितय नमन्ति विबुधा स त्र्येकक सर्ववित्त मृत्युजयमामनन्ति मुनय सोऽप्यापि यातिव्रता (?)। इत्याकर्ण्य कथा रहस्यपि यया पत्युर्निवाहात्पुरा भङ्क्त्वाङ्गानि विजृम्भित गिरिभुवो मोट्टायित पातु व ॥ ४५ ॥ सध्यारागवती स्वभावकुटिला गङ्गा द्विजिह्व फणी वक्राङ्गेमलिन शशी कपिमुखो नन्दी च मूर्खो नृप । इत्थ दुर्जनसकटे पतिगृहे वस्तव्यमेतत्कथ गौरीत्थ नृकपालपाणिकमला चिन्ताञ्चिता पातु व ॥ ४६ ॥ भिक्षार्थी म क यात सुतनु बलिमखे ताण्डव क्वाद्य भद्रे मन्ये वृन्दावनान्ते क नु स मृगशिशुर्नैव जाने वराहम् । बाले कच्चिन्न दृष्टो जरठवृषपतिर्गोप एवास्य वेत्ता लीलासलाप इत्थ जलनिधिहिमवत्कन्ययोस्त्रायता व ॥ ४७ ॥ दीप्तक्षुद्वेगयोगाद्रुदनलहलहज्जम्बजिह्वाप्रलीढब्रह्माण्डक्षौद्रबिन्दुप्रबलतरभयजाठराग्निस्फुलिङ्गाम् । कालीं कङ्कालशेषामतुलगलचलन्मुण्डमालाकरालीगुञ्जात्सरादिनेत्रामजिननिवसना नौमि पाशासिहस्ताम् ॥ ४८ ॥ उद्दाहारोपिताङ्गीक्षतनिजपदयो संगतामिन्दुमौलावानम्रे या सुधाशोर्व्यधित किल कला सूणमेवान्नपूर्णाम् । सत्त्वानामक्षतानाममृतहगनलोपाधित पक्वभावात्तानीवरन्नपूर्णा प्रणतजनतते पूर्णतामातनोतु ॥ ४९ ॥ जङ्घाकाण्डोरुनालो नखकिरणलसत्केसराली-कराल प्रत्यग्रालक्तकाभाप्रसरकिसलयो मञ्जुमञ्जीरभृङ्ग । भर्तुर्नृत्तानुकारे जयति निजतनुस्वच्छलावण्यवापीसभृताम्भोजशोभा विदधदभिनभो दण्डपादो भवान्या ॥ ५० ॥ विद्राणे रुद्रवृन्दे सवितरि तरले वज्रिणि ध्वस्तवज्रे जाताशङ्के शशाङ्के विरमति मरुति त्यक्तवैरे कुबेरे । वैकुण्ठे कुण्ठितास्त्रे महिषमतिरुष पौरुषोपघ्ननिघ्न निर्विघ्न निघ्नती व शम यतु दुरित भूरिभावा भवानी ॥ ५१ ॥ वक्ष पीठे निरीक्ष्य स्फटिकमणिशिलामण्डलस्वच्छमासि स्वा छाया साम्यसूयात्वमियमिति मुहु सत्यमाश्वासितापि । वामे मे दक्षिणेऽस्याश्चवसि कुनलय नाहमित्यालपन्ती दत्तास्लेषा सहास मदनविजयिना पार्वती च पुनातु ॥ ५२ ॥ रामार्चिताङ्घ्रिरभिरामाकृति कृतविरामा सुपर्वविपदा कामार्तिहृत्सफलकामा निदेशरतकामादिनिर्जरवधू । भीमा हरस्य नुतभामा जैपासदृशमा माननीयचरिता सा मामनत्वखिलसामादृतस्तुतिरसामान्यभुक्तिसुखदा ॥ ५३ ॥ बालीयुतश्रवणपालीयुगा ललितचूलीविराजिबकुला केलीगतानुगमरालीकुला मधुरमालीमिरादृतकथा । नालीकदक्कुसुमनालीकपाणिरिह कालीयशासिसहजा तालीदलाभतनुमाली सदा भवतु काली मुदाय मम सा ॥ ५४ ॥

१ जीर्ण २ पलायिते ३ पौरुषोपघ्नानां पराक्रमिणां निघ्न आयत्त यस्य ताम् ४ प्रभूतप्रभावा ५ प्रतिबिम्बम् ६ सेर्ष्या ७ वर्षे ८ दैत्यक्रान्तदेवपत्नीनाम्

---

## षण्मुखः

शैलराजतनयास्तनयुग्मव्यापृतान्यधुगलस्य गुहस्य । शेषवक्त्रकमलानि मल वो दुग्धपाननिधुराणि हरन्तु ॥ १ ॥ विकसत्स्मरनारीनेत्रनीलाब्जखण्डान्यधिवसति सदा य सयमाध इतानि । न तु रुचिरकलापे वर्तते यो मयूरे वितरतु स कुमारो ब्रह्मचर्यश्रिय व ॥ २ ॥ अर्चिष्मन्ति विदार्य वक्त्रकुहराण्यासृक्कितो वासुकेरङ्गुल्या विषकर्बुरान्गणयत सस्पृश्य दन्ताङ्कुरान् । एक त्रीणि च सप्त पञ्च षडिति प्रध्वस्तसख्याक्रमा वाच क्रौञ्चरिपो शिशुत्वविकला श्रेयासि पुष्णन्तु व ॥ ३ ॥

---

## हरिहरौ

जाह्नवी मूर्ध्नि पादे वा काल कण्ठे वपुष्यथ । कामारिं कामतात वा कचिद्देव भजामहे ॥ १ ॥ गाङ्गयामुनयोगेन तुल्य हारिहर वपु । पातु नाभिगत पद्म यस्य तन्मध्यग यथा ॥ २ ॥ अबलाढ्यविग्रहश्रीरमर्त्यनतिरक्षमालयोपेत । पद्मकमोदितमुख पायात्परमेश्वरो मुहुरनादि ॥ ३ ॥ पन्नगधारिकराग्रो गङ्गोमालक्षितोऽङ्गदोऽप्रभुज । शशिखण्डशेखर उमापरिग्रहो मुहुरनादिरवतु त्वाम् ॥ ४ ॥ गवीशपत्रो नगजार्तिहारी कुमारतात शशिखण्डमौलि । लङ्केश-

१ स्त्री २ क्रोध अमुरवधकालोत्पन्न इत्यर्थ ३ अरुणेत्यर्थ ४ कर्णभूषणविशेष ५ केशपाश ६ सखीभि ७ कमलनयनौ ८ पुष्पशरहस्ता ९ कालीय सपस्त शास्तीति स कृष्णस्तत्सहजा भगिनी यशोदोदरे दुर्गाप्रादुर्भावस्य भागवते प्रसिद्धत्वात् १० पार्वत्यर्धाङ्गीकरणात्, पक्षे,-बलाढ्यो विग्रह ११ देवसपूजित, पक्षे,-मृत्युलोकसपूजित तस्य रक्षणात् १२ अक्षमाला जपमाला, पक्षे,-क्षमाल्य पृथ्वी १३ पद्मानन, पक्षे,-चक्रेण मोदित मुख यस्य स १४ परमेश्वर शिव, रमेश्वरो, विष्णु १५ न विद्यते आदिर्यस्य स, पक्षे,-आद्यवर्णरहित १६ गवीशो वृषो वाहन यस्य, पक्षे,-आद्याक्षरस्य लोपात् वीशो गरुडो वाहन यस्य १७ पार्वतीदु:खनाशक पक्षे,-गजेन्द्रपीडाहारक १८ कार्तिकेयपिता, पक्षे,-मदनपिता १९ चन्द्र शिरसि यस्य, पक्षे,-मयूरपिच्छानि शिरसि यस्य २० रावणपूजितचरणकमल, पक्षे,-यो ब्रह्मा, ईश शिव, एताभ्यां पूजितपादपद्म

स्वेदाम्बुपूरमनुपूरयतु प्रिय व ॥ १८ ॥ श्रेय सदा दिशतु सालसपक्ष्मपाते निद्रायिते अपि दृशा भृगुसुनमन्य । सरा- हसाननचरणाम्बुजजातहर्षो लक्ष्मीमुखेक्षणपर परमेश्वरो व ॥ १९ ॥ सकलभुवनरम्यैर्नैरमिन्दो सरोजैरुचितमिति मत्वा य स्वपादारविन्दम् । घटयितुमिव मायी योजयत्या- ननेन्दौ वटदलपुटशायी मङ्गल व कृषीष्ट ॥ २० ॥ क्वच- कुचचुचुकाग्रे पाणिषु व्यापृतेषु प्रथमजलधिपुत्रीसंगमेऽनङ्ग- धाम्नि । ग्रथितनिबिडनीवीबन्धनिर्मोचनार्थं चतुरधिक- कराश पातु वश्चक्रपाणि ॥ २१ ॥ विरमति महाकल्पे नामा- पथैकनिकेतनस्त्रिभुवनपुर शिरसा यस्य प्रतिक्षणमामम् । किमधिकरण कीदृक्कस्य व्यवस्थितिरित्यसावुदरमविशद्दृष्टु तस्मै जगन्निधये नम ॥ २२ ॥ लक्ष्मीपाणिद्वयविरचित मूलसूर्धश्रुतीना व्यक्त वन्दे चरणकमलद्वन्द्वमाद्यस्य पुस । यत्रैकस्य व्यधित बलिना पाद्यतोयैर्वितीर्णैरार्द्रस्यैव प्रणति- तरल क्षालन पद्मयोनि ॥ २३ ॥ अनादृतचमूपतिप्रहित- हस्तमस्वीकृतप्रणीतमणिपादुक किमिति विस्मितान्त पुरम् । अवाहनपरिष्क्रिय पतगराजमारोहत करिप्रवरबृंहिते भग- वनस्त्वराथै नम ॥ २४ ॥ दृक्पात कमलासनेऽस्तु भवतो ध्यान मनाग्धीरते श्रीकण्ठोऽयमित मुरारिमिति नतास्ताक्ष्यैण विनापिन । प्रेयसा क तदासन क च रत कण्ठ क चेत्युल्लसद्धास्यानासितमानसो विजयते सुप्त- प्रबुद्धो हरि ॥ २५ ॥ निर्ममेन मयाम्भसि स्मरभयदोलि समालिङ्गिता केनालीकमिद तवाद्य कथित राधे मुधा ताम्यसि । इत्युत्स्वप्नपरम्परासु शयने श्रुत्वा वच शार्ङ्गिण सव्याज शिथिलीकृत कमलया कण्ठग्रह पातु व ॥ २६ ॥ य शैवा समुपासते शिव इति ब्रह्मेति वेदा- न्तिनो बौद्धा बुद्ध इति प्रमाणपटव कर्तेति नैयायिका । अर्हन्नित्यथ जैनशासनरता कर्मेति मीमासका सोऽय वो विदधातु वाञ्छितफल त्रैलोक्यनाथो हरि ॥ २७ ॥ येनोत्थाप्य समूलमन्दरगिरिश्छत्त्रीकृतो गोकुले राहुर्येन महाबल सुररिपु कार्यादशेषीकृत । कृत्वा त्रीणि पदानि येन वसुधा बद्धो बलिर्लीलया सोऽय पातु युगे युगे युग- पतिस्त्रैलोक्यनाथो हरि ॥ २८ ॥ मुग्धे मुञ्च विषादमत्र बलभिल्कम्पो गुरुस्त्यज्यता मैवार्न मन पुण्डरीकनयने मान्यानिमान्मानय । इत्थ शिक्षयत स्वयवरविधौ धन्वन्तरे- र्वाक्छलादन्यत्र प्रतिषेधमालानि विधिं शृण्वन्हरि पातु व ॥ २९ ॥ नाभीपद्मनसच्चतुर्मुखमुखोद्गीतन्नमाकर्णनप्रो- न्मीलत्कमनीयलोचनकलाखेलन्मुखेन्दुद्युति । सरोष मधु- कैटभौ सकरुणस्नेह सुतामम्बुधे सोल्लासप्रणय सरोज- वसतिं पश्यन्हरि पातु व ॥ ३० ॥ निष्पत्यूहमुपास्महे भगवत कौमोदकीलक्ष्मण कोकप्रीतिचकोरपारणपटु- ज्योतिष्मती लोचने । याभ्यामर्धविबोधमुग्धमधुरश्रीरर्धनिद्रा- यितो नाभीपल्वलपुण्डरीकमुकुल कम्बो सपत्नीकृता ॥ ३१ ॥ भक्तिप्रह्वविलोकनप्रणयिनी नीलोत्पलस्पर्धिनी ध्यानालम्बनता समाधिनिरतैर्नीतेहितप्राप्तये । लावण्यै- कमहानिधी रसिकता लक्ष्मीदृशोस्तन्वती युष्माक कुरुता भवार्तिशमन नेत्रे तनुर्वा हरे ॥ ३२ ॥ चत्वार प्रथयन्तु विद्रुमलतारक्ताङ्गुलिश्रेणय श्रेय शोणसरोजकोरकरुचस्ते शार्ङ्गिण पाणय । मालेयाब्जभुवो लिखन्ति युगपद्ये पुण्यवर्णावली कस्तूरीमकरी पयोधरयुगे गण्डद्वये च श्रिय ॥ ३३ ॥ आकल्प मुरजिन्मुखेन्दुमधुरोन्मीलन्मह- न्माधुरीधीरोदात्तमनोहर सुखयतु त्वा पाञ्चजन्यध्वनि । लीलालङ्घितमेरुनादविभवो य कुम्भकर्णव्ययादायी दान- वदन्तिना दशमुख दिक्चक्रमाक्रामति ॥ ३४ ॥ भ्राम्यन्मन्दरकन्दरोदरदरीव्याघर्तिभिर्वारिधे कल्लोलैरलमाकुल कलयतो लक्ष्म्या मुखाम्भोरुहम् । औत्सुक्यात्तरला त्रपाढिकसिता भीत्या समाकुञ्चिता कोपेन ज्वलिता मुदा मुकुलिता शौरेर्दृश पान्तु व ॥ ३५ ॥ पर्यङ्कीकृतनाग- नायकफणाश्रेणीमणीना गणे सक्रान्तप्रतिबिम्बसवलनया विभ्रद्वपुर्विक्रियाम् । पादाम्भोरुहधारिवारिधिसुतामक्ष्णा दिदृक्षु शतै कायव्यूहमिवाचरन्नुपचिताकूतो हरि पातु व ॥ ३६ ॥ मन्थक्ष्माधरघूर्णितार्णवपय पूरान्तरालोत्तस- ल्लक्ष्मीकन्दलकोमलाङ्गदलनप्रादुर्भवत्सभ्रमा । हर्षोत्क- ण्टकितत्वचो मधुरिपोर्देवासुराकर्षणव्यापारोपरमाय पान्तु जगतीमाबद्धवीप्सा गिर ॥ ३७ ॥ चक्र ब्रूहि विभो गदे जय हरे कम्बो समाज्ञापय भो भो नन्दक जीव पन्नग- रिपो किं नाथ भिन्नो मया । को दैत्य कतमो हिरण्य- कशिपु सत्य भवद्य शपे येनास्त्रेण नखैरिति प्रवदतो विष्णोर्मुख पातु व ॥ ३८ ॥ प्रत्यग्रोन्मेषजिह्मा क्षण- मनभिमुखी रत्नदीपप्रभाणामात्मव्यापारगुर्वी जनितजलल्वा

१ ब्रह्माणि, पक्षे,-लक्ष्म्या आसने २ वायौ, पक्षे,-लक्ष्म्या शब्दे ३ शिव, पक्षे,-लक्ष्म्या कण्ठ- ४ सखी ५ असत्यम् ६ कुप्यसि ७ खेदम्, पक्षे,-शिवम् ८ कल भिनत्तीति तम्, पक्षे,-इन्द्रम् ९ बहु पक्षे,-इन्द्रसमि- १० मुग्धभावम्, पक्षे,- सद्भावेन ११ कमललोचने, पक्षे,-विष्णौ

१ शङ्खस्य २ भक्तिप्रह्वादिविशेषणानि नेत्रपक्षे तनुपक्षे च क्रमेण द्विवचनैकवचनान्तानि ३ 'नीता इहितप्राप्तये' इति तनुपक्षे छेद- ४ पद्मयत ५ अद्यतपुत्रिकाप्रार्थनेन ६ सबद्ध ७ बहुशरीरताम् ८ समुद्रजलप्रवाह- ९ उन्मीलनम् १० कुटिला ११ शैत्यशिर- स्तानामिन्यर्थे-

जृम्भितं शाङ्गमङ्के । नागाङ्कं मोक्तुमिच्छोः शयनमुरुफणाचक्रवालोपधानं निद्राच्छेदाभिताम्रा चिरमवतु हरेर्दृष्टिराकेकरा वः ॥ ३९ ॥ क्षीराब्धीशायवक्षःस्थलनिलयरमाहस्तनालम्ब्यलोलल्लीलाब्जानि सरन्ती मधुरमधुकरी नाभिपद्मे मुरारेः । त्रैलोक्यं लोकमाता द्विगुणमुखशिरोऽमनेन्दर्थमाना शङ्खभ्रान्त्येन दिव्य पय इति विबुधैः शङ्क्यमाना पुनातु ॥ ४० ॥ किंचिन्निर्मुच्यमाने गगन इव मुखे शाटानिश्वासयोर्दैर्घ्यशुर्याणे भ्रमासा फणिपतिशिरसा रत्नदीपाङ्कुरालम् । पायास्ता वो मुरारे शशितपनमये लोचने यद्विभासा लक्ष्म्या हस्तस्यमध्ये विकसति कमलसार्धमभ्येति निद्राम् ॥ ४१ ॥ एतस्य जीवितेशो रमयि सकलजगत्सारमालोकयाम श्यामे चक्षुस्तवास्मिन्नपि निविशवे नाल्पपुण्यस्य पुंसः । कस्मान्नाम्नृतेऽस्मिन्नतिरतिविपुला दृष्टिरावृत वै दैत्यैरित्युच्यमानो मुनिभिरपि हरिः स्त्रैणरूपोऽवताद्वः ॥४२॥ यस्योद्दामबाहुद्रुमगहनवनच्छेदगोष्ठीकुठारं चक्रं निष्क्रान्ततीव्रानलबहलकणाकीर्णधारं विचिन्त्य । जातभ्रासानसाधो दिवसकृतिलसन्मासलानुभयाद्धे मुखत्यपापि राहुः स दहतु दुरितान्याशु दैत्यान्तको वः ॥ ४३ ॥

शङ्खः

भिन्दन्नयतिहृदयानि हरः पुनातु निःश्वासजातमुखरीकृतकोटरो वः । सकालकुलिशहृत्यस्वससि भुसपट्टघोरतरघोषइवाशु शङ्खः ॥ ४४ ॥ पायात्स वः कुमुदकुन्दमृणालगौरः शङ्खो हरेः करतलाम्बरपूर्णचन्द्रः । नादेन यस्य सुरसाटविलासिनीनां काञ्च्यो भवन्ति शिथिलाः जघनस्थलीषु ॥ ४५ ॥

चक्रम्

दृष्टस्य यस्य हरिणा रणमूर्ध्नि मूर्तिर्द्भूतदुःसहमहः प्रसृतां समन्तात् । तल्लोचनस्थितरविप्रतिबिम्बगर्भेवाभाति चक्रमरिचक्रतुदेऽस्तु तद्वः ॥ ४६ ॥ उद्वृत्तदैत्यपृतनापतिकण्ठपीठच्छेदोद्भवद्बहलशोणितशोणधारम् । चक्रं क्रियादभिमतानि हरेरुदारदिग्दाहदारुणतमं श्रियमुद्वहद्वः ॥ ४७ ॥

गरुडः

क्षीरोर्मीङ्गितरत्नमारुतहृताहिनातकान्ताकुचस्फूर्जन्मौक्तिकभूषणः सुगभनि पूर्णेन्दुबिम्बाननः । पद्माधीश्वरपादपद्मयुगलस्पर्शाभिडाम्ब्रानन्नः पायाद्वो विनतासुतो हरिकृपालीलैककाशीकृत ॥ ४८ ॥

शेषः

ब्रह्माण्डकुम्भकारं भुजगाकारं जनार्दनं नौमि । स्फारे यस्य फणाग्रे धरा शरावश्रियं वहति ॥ ४९ ॥

---

१ शेषाङ्कोऽसरार् २ हरः ३ देवाटनम् ४ विस्मितकुञ्चिता ५ मधु ६ महाः-

लक्ष्मीः

जयन्ति जगतां मातुः स्तनकुङ्कुमबिन्दवः । मुकुन्दाश्लेषसंक्रान्तकौस्तुभश्रीविडम्बिनः ॥ १ ॥ पायात्पयोधिदुहितुः कपोलामलचन्द्रमाः । यत्र संक्रान्तबिम्बेन हरिणा हरिणायितम् ॥ २ ॥ देवेऽर्पितवरणस्रजि बहुमाये वहति कैटभीरूपम् । जयति सुरासुरहसिता लज्जाजिह्मेक्षणा लक्ष्मीः ॥ ३ ॥ तल्पीकृताहिरगणितगरुडो हाराभिहतनिधिर्जयति । फणशतपीनश्वासो रमान्धायाः श्रियः केलिः ॥ ४ ॥ खेलननेन हरिणा सस्पृहमाकारवेदिनाकलितम् । जयति पुरुषायितायाः कमलायाः कैटभीध्यानम् ॥ ५ ॥ कमलासनकमलेक्षणकमलारिकिरीटकमलभृद्वाहैः । नुतपदकमला कमला करधृतकमला करोतु मे कमलम् ॥ ६ ॥ किञ्जल्कराजिरिव नीलमगोजलस्य लेखेव काञ्चनमयी निकषोपलस्था । सौदामिनी जलदमण्डलगामिनीव पायादुरःस्थलगता कमला मुरारेः ॥ ७ ॥ दन्तैः कोरकिता स्मितैर्विकसिता भ्रूविभ्रमैः पक्षिता दोर्भ्यां पल्लविता नखैः कुसुमिता लीलाभिरुद्वेल्लिता । उत्तुङ्गस्तनमण्डलेन फलिता भक्ताभिलाषे हिता काचित्कल्पलता सुरासुरनुता पायात्सुधाब्धेः सुता ॥ ८ ॥ उत्तुङ्गस्तनमण्डलोपरिलसत्प्रालम्बमुक्तामणेरन्तर्बिम्बितमिन्द्रनीलनिकरच्छायानुकारिद्युति । लज्जाव्याजमुपेत्य नम्रवदना स्पष्टं मुरारेर्वपुः पश्यन्ती मुदिता मुदेऽस्तु भवतां लक्ष्मीर्विवाहोत्सवे ॥ ९ ॥ आस्ते हृसित पितामह इति नस्त कपालीति च व्यावृत्त गुरुरित्यय दहन इत्याविष्कृता भीरुता । पौलोमीपतिरित्यसूयितमथ व्रीडाविनम्रश्रिया पायाद्वः पुरुषोत्तमोऽयमिति यो न्यस्तः स पुष्पाञ्जलिः ॥ १० ॥ क्रीडाभिन्नहिरण्यशुक्तिकुहरे रक्तात्मनावस्थिता हार हारसुदारकुङ्कुमरसानव्याजमव्याहतौ । वीरश्रीकुचकुम्भसीम्नि स्थितो वीरस्य पद्मानलीलत्कालोचितमाधवभ्रमधुरं मन्दस्मितं पातु वः ॥ ११ ॥ पद्मायाः स्तनहेमसद्मनि मणिश्रेणीसमाकर्षके किंचित्कञ्चुकसंधिसंनिधिगते शौरेः करे तस्करे । सद्यो जागृहि जागृहीति वलयध्वानैर्ध्रुवं गर्जता कामेन प्रतिबोधिनाः प्रहरिका रोमाङ्कुराः पान्तु वः ॥ १२ ॥ यादृग्जानासि जाम्बूनदगिरिशिखरे कान्तिरिन्दोः कलानामित्यौत्सुक्येन पत्यौ स्मितमधुरमुखाम्भोरुहं भाषमाणे । लीलादोलायमानश्रुतिकमलमिलद्भृङ्गसंगीतसाक्षी पायादम्भोधिजाया कुसुमशरकलानाट्यनान्दीनकारः ॥ १३ ॥ उत्तिष्ठन्त्या रतान्ते भरमुरगपतौ पाणिनैकेन कृत्वा धृत्वा चान्येन वासो विगलितकबरीभार-

---

१ हरिणा हरिणायितम्

मये वहन्त्या । भूयस्तत्कालकान्तिद्विगुणितसुरतप्रीतिना शौरिणा व शय्यामालिङ्ग्य नीत वपुरलसलसद्बाहु लक्ष्म्या पुनातु ॥ १४ ॥

## समुद्र

चत्से मा गा विषाद श्वसनमुरुजव सत्यजोर्ध्वप्रवृत्त कम्प को वा गुरुस्ते किमिह बलभिदा जृम्भितेनात्र याहि। प्रत्याख्यान सुराणामिति भयशमनच्छद्मना कारयित्वा यस्मै लक्ष्मीमदाद्य स दहतु दुरित मन्थमुग्ध पयोधिः ॥ १५ ॥

## ब्रह्मा

त वन्दे पद्मसद्मानमुपवीतच्छटाच्छलात्। गङ्गा स्रोत त्रयेणैव य सदैव निषेवते ॥ १ ॥ कुलशैलदल पूर्णसुवर्ण गिरिकर्णिकम् । नमोऽधितिष्ठतेऽनन्तनाल कमलविष्टरम् ॥२॥ कृतकान्तकेलिकुतुकश्रीशीतश्वाससेकनिद्राण । घोरित-विततालिरुतो नाभिसरोजे विधिर्जयति ॥ ३ ॥ अवि-रताम्बुजसगतिसगलद्बहुलकेसरसवलितेन यः । ललित वस्तुविधानसुखोल्लसत्तनुरुहा तनुरात्मभुवोऽवतात् ॥ ४ ॥

## दशावताराः

वेदानुद्धरते जगन्निवहते भूगोलमुद्बिभ्रते दैत्य दारयते बलिं छलयते क्षत्रक्षय कुर्वते । पौलस्त्य जयते हल कलयते कारुण्यमातन्वते म्लेच्छान्मूर्च्छयते दशाकृतिकृते कृष्णाय तुभ्य नम ॥ १ ॥ यस्यालीयत शल्कसीम्नि जलधि पृष्ठे जगन्मण्डल दष्ट्रायां धरणी नखे दितिसुताधीश पदे रोदसी। क्रोधे क्षत्रगणः शरे दशमुख पाणौ प्रलम्बासुरो ध्याने विश्वमसावधार्मिककुल कस्मैचिदस्मै नम ॥ २ ॥ पाठीन कमठ किटिर्नरहरि खर्वाकृतिर्भार्गवो राम कसनिषूदनो दैत्यबल कल्की च नारायण । युष्माक स विभूतयेऽस्तु भगवान्सेतुर्भयाम्भोनिधावुत्ताराय युगे युगे युगपतिस्त्रैलोक्य-नाथो हरि ॥ ३ ॥ वेदा येन समुद्धृता वसुमती पृष्ठे धृताप्युद्धृता दैत्येशो नखरैर्हत फणिपतेर्लोक बलि प्रापित.। क्ष्माऽक्षत्रा जगती दशास्यरहिता माता कृता रोहिणी हिंसा दोषवती धराप्ययवना पायात्स नारायण ॥ ४ ॥

१ खेदम्, पक्षे,–हरम् २ भासम्; पक्षे,–पवनम् ३ महा वेगम् ४ क जल पातीति तथा वरुण, पक्षे,–कम्प: ५ महान्, पक्षे,–बृहस्पति ६ बल प्रसिद्ध, तद्भिदा नाशकेन, पक्षे,–बला ख्यदैत्यनाशकेनेन्द्रेण ७ श्रीकृष्णसंनिधौ ८ वर्जनम् ९ भयनि-वारणव्याजेन १० छाद्मलम् ११ भास्वते १२ स्वह १३ सहे १४ मत्स्य १५ वराह:- १६ बुद्ध:-
३ सु र. भो

## मत्स्य

मग्ने मेरौ पतति तपने तोयबिन्दाविवेन्द्यावन्तर्लीने जलधिसलिले व्याकुले देवलोके। मात्स रूप मुखपुटतटा-कृष्टनिर्मुक्तवार्धि श्रीकान्तस्य स्थलजलगत वेत्यलक्ष्य पुनातु ॥ ५ ॥ वियत्पुच्छोत्तुच्छोच्छलितजलगर्भे निधिरपामपानाथ पाथ. पृथुलवर्दुस्थो वियदभूत् । निधिर्भासामौर्वो दिनेपतिरभूदौर्वदहनश्चलत्काये यस्मिन्स जयति हरिर्मीन वपुषा ॥ ६ ॥ जीयासुः शकुलाकृतेर्भगवत पुच्छ-च्छटाच्छोटनादुद्यन्त शतचन्द्रिताम्बरतल ते बिन्दव सैन्धवा । यैर्व्यावृत्य पतद्भिरौर्वशिखिनस्तेजोजटाल वपु' पानोध्मानवशोदरोचकरुजा चक्रे चिरायोत्सदम् ॥ ७ ॥ दिश्याद्वः शकुलाकृतिः स भगवाञ्श्रेयसीं सपद यस्य स्फूर्जद्तुच्छपुच्छशिखरप्रेङ्खोलनक्रीडने । विष्वग्वार्धिसमु-च्छलज्जलभरैर्मन्दाकिनीसगतैर्गङ्गासागरसगमप्रणयिनी जाता विहायःस्थली ॥ ८ ॥ मायामीनतनोस्तनोतु भवता पुण्यानि पङ्कस्थिति पुच्छाच्छोटसमुच्छलज्जलगुरुप्राग्भार-रिक्तोदधे । पातालार्दमध्यसर्वटतया पर्याप्तकष्टस्थितेर्नेदो द्वारपरायणस्य सतत नारायणस्य प्रभो ॥ ९ ॥ जृम्भा-विस्तृतवक्त्रपङ्कजविधेर्हृत्वा श्रुती सागरे लीन भ्रस्तसमस्त-नक्रनिकर शङ्ख जघानाजिरे । पुच्छोत्क्षिप्तजलोत्करैः प्रति-दिश सतर्प्य यो वै धरा पायाद्वः स मृणालकोमलतनु-र्मीनाभिधानो हरि ॥ १० ॥ हहो मीनतनो हरे किमुदधे किं वेपसे शैत्यत खिन्न किं वडवानलात्पुलकित कस्मा-त्त्वमावादहम्। इत्थ सागरकन्यकासुपशशिव्यालोकनेना धिक्प्रोद्यत्कामजचिह्ननिर्हृतिपर. शौरि शिवायास्तु व ॥ ११ ॥ पुच्छ चेदहमुन्नयाम्यनवधिस्तुच्छो भवेदम्बुधि क्रीडा चेत्कलये मनागपि जले पीडा पर यादसाम्। निसन्दो भृशमामृशन्निति भरब्रह्माण्डभाण्डक्षयक्षोभाकुञ्चित वेष एप भगवान्प्रीणातु मीनाकृति ॥ १२ ॥ चन्द्रादित्यो-

१ वसु २ उदकम् ३ विपुत' ४ दरिद्र' ५ सूर्य ६ वडवा नल, यदा पानीय मीनाकृत्या भगवता स्वपुच्छेनोच्छलितम्, तदा सर्वमपि सामुद्र जल वियति गतम्, तत्र च रविर्वर्तत एव, स वडवानलाकृत्या दृश्यत इत्यर्थ ७ समुद्रे पानीयाभावात्समुद्रस्या काशकस्तना तत्र च वाडवाग्नेः पर्याप्तमेति भाव ८ मत्स्याकृते ९ इतस्तत आलोडनम् १० ऊर्ध्व गच्छन्त ११ तेजोभ्यासम् १२ अग्निसंयोगाभाव १३ अरुचिरोगाणाम् १४ यो निदाघ ज्वरादिरोगाक्रान्तो बहुपानीय पिबति, तस्य पश्चात्पानीयस्यारुचिर्जा-यते तथैवास्य वाडवाग्नेरपीति भाव १५ दोला १६ आकाशस्थली यत सागरजल मत्स्यपुच्छेनोच्छलित गगनेपा सङ्गमवाप ततो गङ्गासागरसंगमतीर्थं नभस्यपि जज्ञ इति भाव १७ उल्लोलनम् १८ भूत्रयम् १९ सकीर्णतया २० वेदान् २१ रणाङ्गणे २२ दत्वा २३ अपत्यनम्

रैनेत्र केमल्मनभवस्कारपृष्ठप्रतिष्ठो भास्वत्कालाग्निजिह्व पृथुलगल्गुहाहृष्टानि शेषविश्व । अद्रि पुच्छोत्थिताभिश्चन्ति सुरनधूनेत्रसंसुचिताभिर्मत्स्यसरिछिनाब्धिर्जल गगनतल्मल क्षालयन्व पुनातु ॥ १३ ॥ य दृष्ट्वा मीनरूप स्फुरदनल-शिखायुक्तसरत्कनेन लालद्विस्तीर्णकर्णक्षुभितजलनिधिं नील जीमूतवर्णम् । श्वासोच्छ्वासानिलौघे प्रचलितगगन पीतवारि मुरारेर्दिग्भ्रोऽभूत्स शङ्खु स भवतु भवता भूतये मीन रूप ॥ १४ ॥ दिग्धूढ न सुरारि रिल शितिदशने पीध्य-माल रटन्त हत्वा तीरे पयोधे करतलकलित पूरयामास शङ्खम् । नादेनाक्षोभ्य विश्व प्रमुदितविबुध ग्रस्तदैत्य स दैत्यैर्दत्तार्घ पद्मयोने प्रहसितवदन पातु वो दत्तवेद ॥१५॥

## कूर्म

निरवधि च निराश्रय च यस्य स्थितमनिवर्तितकौतुक-प्रपञ्चम् । प्रथम इह भवान्स कूर्ममूर्तिर्जयति चतुर्दश-लोकवल्लिकन्द ॥ १६ ॥ भ्राम्यन्महागिरिनिघर्षणलब्धपृष्ठ-कण्डूयनक्षणसुखायितगाढनिद्र । सुष्वाप दीर्घतरघर्घरघोर-घोष श्वासाभिभूतजलधि कमठ स वोऽव्यात् ॥ १७ ॥ नमस्तुभ्यं कूर्म नमदमरकोटीरनिकरप्रसर्पन्माणिक्यच्छवि मिलितमाञ्जिष्ठवपुषम् । जरीजृम्भज्जिम्भैर्घुमणिरमणीयाम्बु लहरीपरीरम्भस्फूर्जद्बलभिदुपलाद्रिप्रतिभटम् ॥ १८ ॥ निष्प्र त्यूहमनल्पकल्पचरितक्रीडोऽस्त्यरक्षागुरु क्रीडाकूर्मकलेवर स भगवान्दिश्यादमन्दा मुदम् । कल्पान्तोदधिमध्यमज्जन धराभ्रान्तसर्पत्सलुठत्पृष्ठे यस्य बभूव सैकतकणच्छाय धरि त्रीतलम् ॥ १९ ॥ पृष्ठभ्राम्यदमन्ददरगिरिग्रावाग्रकण्डू-यनैर्निद्रालो कमठाकृतेर्भगवत श्वासानिला पान्तु व । यत्संस्कारकलानुवर्तनवशाद्वेलाछलेनाम्भसा यातायातमत न्द्रित जलनिधेर्नाद्यापि विश्राम्यति ॥ २० ॥ हर्म्या यस्य विलोकनाय जगतो प्रागीषदुत्तोलितग्रीवाग्रोपरि विस्फुरद्ग्रह गणे छत्रायितायां भुवि । हा धिग्भू स्थिमभूदभूत्तदित रत्किं चेति पर्याकुले हन्यादेष हठादधानि कमठाधीश कठोराणि व ॥ २१ ॥ यो धत्ते शेषनाग तदनु वसुमती स्वर्गपातालयुक्ता युक्ता सर्वै समुद्रैर्हिमगिरिकनकप्रख्यमुख्यै र्नगेन्द्रै । एतद्ब्रह्माण्डमस्मान्तघटसदृश भाति यद्वक्त्रे मुरारे पायाद्व कूर्मदेह प्रकटितमहिमा माधव कामरूपी ॥ २२ ॥

## वराह

नमस्तस्मै वराहाय हेलयोद्धरते महीम् । खुरमध्यगतो यस्य मेरु खुरखुरायते ॥ २३ ॥ पातु वो मेदिनीदोल बालेन्दुद्युतितस्करी । दंष्ट्रा महावराहस्य पातालगृह-दीपिका ॥ २४ ॥ हरेर्लीलावराहस्य दंष्ट्रादण्ड स पातु व । हेमाद्रिकलसा यत्र धात्री छत्रश्रियं दधौ ॥ २५ ॥ स जयति महावराहो जलनिधिजठर चिर निमग्नोऽपि । येनाग्रैरिव सह फणिगणैर्बलादुद्धृता धरणी ॥ २६ ॥ पातु व करटकोलकेशवो यस्य नि श्वसितमारुतोद्धता । उच्छ्रितिप्रपतनैरचीक्लृपत्केलिकन्दुकतुलामिला मुहु ॥ २७ ॥ मेरुकेसरमुदारदिग्दलपत्रमामूललम्बिचलशेषशरीरनालम् । येनोद्धृत कुवलय सलिलात्सलीलमुत्तंसकार्थमिव पातु स वो वराह ॥ २८ ॥ न पङ्कैरालेप कलयति धरित्रीव्ययभयान्मुस्तामादत्तेऽप्युरगनगरभ्रंशभयत । न धत्ते ब्रह्माण्डस्फुट-नभयतो घर्घररव महाक्रोड पायादिति सकलसंकोचित-मुख ॥ २९ ॥ न मृद्नीयान्मृद्वी कथमिव मही पोत्रनिकषैर्मु स्ताभिज्वालाभि कनकगिरिरीयात विलयम् । न शुष्येयु श्वासै सलिलनिधय सप्त च कथं वराहो व पायादिति विपुलचिन्तापरिकर ॥ ३० ॥ पातु त्रीणि जगन्ति संततमकूपा-रात्समभ्युद्धरन्धात्रीं कोलकलेवर स भगवान्यस्यैकदंष्ट्राङ्कुरे । कूर्म कन्दति नालति द्विरसन पत्रन्ति दिग्दन्तिनो मेरु कोशति मेदिनी जलजति व्योमापि रोलम्बति ॥ ३१ ॥ पातु श्रीस्तनपत्रभङ्गिमकरीमुद्राङ्कितोरस्थलो देवो व स जगत्पतिर्मधुवधूवक्त्राब्जचन्द्रोदय । क्रीडाक्रोडतनोर्नवेन्दु-विशदे दंष्ट्राङ्कुरे यस्य भूर्भाति स्म प्रलयाब्धिपल्वलतलो-त्खातैकमुस्ताकृति ॥ ३२ ॥ दृप्यद्दैत्यनितम्बिनीजनमन - संतोषसंकोचन कुर्याद्विश्वमनश्वर स भगवान् क्रोडावतारो हरि । यद्दंष्ट्राङ्कुरकोटिकोटरकुटीकोणान्तरस्थेयसी पृथ्वी मात्यब्दावतक्षेत्रगतैरैव भृङ्गाङ्गना ॥ ३३ ॥ अष्टौ यस्य दिशो दलानि विपुल कोश सुवर्णाचल कान्त केसरजाल-मर्ककिरणा भृङ्गा पयोदावली । नाल शेषमहोरग प्रविततवा-रानिधेर्लीलया तद्व पातु समुद्धरन्भुवलय क्रोडाकृति केशव ॥३४॥ विश्राणोऽभिनवेन्दुकोटिकुटिल दंष्ट्राङ्कुर लीलया क्रो-डाकारधरो हरि स भगवा भूयाद्विभूतिप्रद । यस्योत्क्षिप्तवत

१ गरिष्ठ २ महतो जलम्, महार्णवनिचये ३ सविलय दृष्टिभि ४ व्याकुल ५ तीरात्तरे ६ भ्राम्यन्नाम ७ भव मानम् ८ मुहु- ९ शोभितम् १० अनिर्वचन विरराम् ११ धरा- १२ पृष्ठे- १३ दर्शनार्थमेवभगवान् १४ भाजुभव मध्यान्तरि १५ धृत्वा देव- १६ तदुपरि १७ मुरारे

१ वराह २ अकरोत् ३ यथा कन्दुक क्रीडया शिशुभि रुत्क्षिप्यतेऽवक्षिप्यते च, तथैव भूरपि श्वासवायुप्रेरितोर्ध्वाध पतनै कन्दुकतुल्या गुण्यतीति भाव ४ यथा धरित्र्यां समुद्रे पद्मे त्पत्त्यादि तथैव मूर्तिरूपेण निल्य पाश्वतीति विचार्य ५ समु द्राद् ६ कन्द इवाचरति ७ नालमिवाचरति ८ पत्राणीवाचरति ९ कोशमिवाचरति १० जलमिवाचरति ११ भ्रमर इवाचरति १२ यथा चन्द्रोदयेऽम्भोजानि संकोचमायान्ति तथा हरेरुदये मधुवधू वक्त्राम्भोरुहाणि निष्प्रभाणि भवन्ति भाव १३ भ्रमम् १४ नि धुवनम् १५ उज्ज्वलम् १६ पृथ्वीमण्डलम्, पा.,-वलिनम्

क्षमाकमलिनीमालम्बमानः क्षणं लोलद्बालमृणालनालतुलनां भेजे भुजङ्गेश्वरः ॥ ३५ ॥ मुक्तैर्यास्यति कुत्रचिद्वसुमती दंष्ट्राङ्कुरस्थेयसी कुक्षौ क्षोभमवाप्स्यति त्रिभुवनं रुद्धैरमीभिः क्रमात् । इत्यस्वल्पविकल्पमीलितमतेः कण्ठे लुठन्तो मुहुः क्रोडाकारधरस्य कैटभजितः श्वासानिलाः पान्तु वः ॥ ३६ ॥ भूयादेष सतां हिताय भगवान्कोलावतारो हरिः सिन्धोः क्लेशमपास्य यस्य दशनप्रान्ते नटन्त्या भुवः । तारा हारति वारिदस्तिलकति स्वर्वाहिनी माल्यति क्रीडादर्पणति क्षपापतिरहर्देवश्च ताटङ्कति ॥ ३७ ॥ लीने योनैकदेशे नमसि नयनयोस्तेजसि क्वापि नष्टे श्वासप्रासोपभुक्ते मरुति जलनिधौ पादरन्ध्रार्धपीते । पोनैर्मान्तैकरोमान्तरविवरगता मार्गितश्चक्रपाणेः क्रोडाकारस्य पृथ्वीमकलितविभवा वैभवं वः पुनातु ॥ ३८ ॥ सिन्धुष्वङ्गावगाहः क्षुरनिवरविशत्तुच्छतोयेषु नास्य प्रासा पातालपङ्के न लुठितरुचयः पोनमानोपयोगात् । दंष्ट्राविष्टेषु नास्य शिखरिषु च पुनः स्कन्धकण्डूविनोदो येनोद्धारे धरित्र्याः स जयति विभुताविघ्नितेच्छो वराहः ॥ ३९ ॥ क्वेदानीं दर्पितास्ते घनमदमदिरामोदिनो दिग्द्विपेन्द्रा हे मेरो मन्दराद्रे मलय हिमगिरे साधु च क्ष्माधरत्वम् । शेष श्लाघ्योऽसि दीर्घैः पृथुभुवनभरोच्चण्डशौण्डैः शिरोभिः शशंसोत्प्रासमुच्चैरिति धरणिभृतः पातु युष्मान्वराहः ॥ ४० ॥

## नृसिंहः

सुरासुरशिरोरत्नकान्तिविच्छुरिताङ्घ्रये । नमस्त्रिभुवनेशाय हरये सिंहरूपिणे ॥ ४१ ॥ शत्रोः प्राणानिलाः पंच वयं दश जयोऽत्र कः । इति कोपादिवाताम्राः पान्तु वो नृहरेर्नखाः ॥ ४२ ॥ प्रोज्ज्वलज्ज्वलनज्वालाविकटोरुसटाच्छटः । श्वासक्षिप्तकुलक्ष्माभृत्पातु वो नरकेसरी ॥ ४३ ॥ व्याधूतकेसरसटाविकरालवक्त्रं हस्ताग्रविस्फुरितशङ्खगदासिचक्रम् । आविष्कृतं सपदि येन नृसिंहरूपं नारायणं तमपि विश्वसृजं नमामि ॥ ४४ ॥ दैत्याधिपपञ्जरनिदारणलब्धरन्ध्ररक्ताम्बुनिर्जरसरिद्घनजातपङ्काः । बालेन्दुकोटिकुटिला शुकचञ्चुभासा रक्षन्तु सिंहवपुषो नखरा हरेर्वः ॥ ४५ ॥ दिश्यात्सुखं नरहरिर्भुवनैकवीरो यस्याहवे दितिसुतोद्दलनोद्यतस्य । कोपोद्धतं मुखमवेक्षितुमक्षमत्वं जानेऽभवन्निजनखेष्वपि यत्नतास्ते ॥ ४६ ॥ वपुर्दलनसम्भ्रमात्स्वनखरं प्रविष्टे रिपौ क्व यात इति विस्मयात्पहितलोचनं सर्वतः । धृयेति कराताडनान्निपतितं पुरो दानवं निरीक्ष्य भुवि रेणुवज्जयति जातहासो हरिः ॥ ४७ ॥ चटच्चटिति चर्मणि च्छमिति चोच्छलच्छोणिते धगद्धगिति मेदसि स्फुटरवोऽस्थिनि छागिति । पुनातु भवतो हरेरभरवैरिवक्षःस्थलक्रकचकर्कशकरजपञ्जरक्रकचवापजन्मानलः ॥ ४८ ॥ ससत्वरमितस्ततस्तैर्विहितसहस्राटवीनिकृत्तसुरशत्रुहृत्क्षतजसिक्तवक्षःस्थलः । स्फुरद्वरगभस्तिभिः स्थगितसंसप्तद्युतिः समस्तनिर्गमस्तुतो नृहरिरस्तु नः स्वस्तये ॥ ४९ ॥ चञ्चच्चण्डनखाग्रभेदविगलद्दैत्येन्द्रवक्षःक्षरद्रक्तौघाभ्यक्तसुपाटलोद्भटसटासम्भ्रान्तभीमाननः । तिर्यक्कण्ठकठोरघोषघटनासर्वाङ्गखर्वीभवद्दिग्व्यातङ्कनिरीक्षितो विजयते वैकुण्ठकण्ठीरवः ॥ ५० ॥ दष्टासकर्कटकन्दरललज्जिह्वस्य हव्याशनज्वालाभासुरभूरिकेसरसटाभारस्य दैत्यं द्रुहः । व्यावल्गद्बलवद्धिरण्यकशिपुक्रोडस्थलास्फालनस्फारप्रस्फुटदस्थिपञ्जररवक्रूरा नखाः पान्तु वः ॥ ५१ ॥ सोमार्धायितनिष्पिधानदशनः सन्ध्यायितान्तर्मुखो बालार्कायितलोचनः सुरधनुर्लेखायितभ्रूलतः । अन्तर्नादनिरोधपीवरगलरन्ध्रैकनिर्यत्तडित्तारस्फारसटावरुद्धगगनः पायान्नसिंहः स वः ॥ ५२ ॥ विद्युच्चक्रकरालकेसरसटाभारस्य दैत्यद्रुहः शोणभ्रंहुताशडम्बरभृतः सिंहाकृतेः शार्ङ्गिणः । विस्फूर्जद्घनगर्जितार्जितकृषुम्भातङ्कदर्पोदयाः संरम्भाः सुखयन्तु वः खरनखक्षुण्णद्विपद्वक्षसः ॥ ५३ ॥ दैत्यानामधिपे नखाङ्कुरकुटीकोणप्रविष्टात्मनि स्फारीभूतकरालकेसरसटासंघातघोराकृतेः । सक्रोधं च सविस्मयं च सगुरुव्रीडं च सान्द्रस्मितं क्रीडाकेसरिणो हरेर्विजयते तत्कालमालोकितम् ॥ ५४ ॥ किं किं सिंहस्ततः किं नरसदृशवपुर्देव चित्रं गृहीतो नैतादृक्क्वापि जीवोऽद्भुतमुपनय मे देव सम्प्राप्त एषः । चापं चापं न चापित्यहहहहहहा कर्कशत्वं नखानामित्थं दैत्येन्द्रवक्षःखरनखमुखरैर्जल्पितान्यः स वोऽव्यात् ॥ ५५ ॥ भूयः कण्ठावधूतिव्यतिकरतरलोत्तंसनक्षत्रमालाबालेन्दुक्षुद्रघण्टारणितदशदिशादन्तिचीत्कारकारी । अव्याद्वो दैत्यराजप्रथमयमपुरीयानघण्टानिनादो नादो दिग्भित्तिभेदप्रसरसरभसः कूटकण्ठीरवस्य ॥ ५६ ॥ अन्तःक्रोधोज्जिहानज्वलनभवशिखाकारजिह्वावलीढप्रौढब्रह्माण्डभाण्डः पृथुभुवनगुहागर्भगम्भीरनादः । दृप्यत्पौरीद्रमूर्तिर्मुरजिदवतु वः सुप्रभामण्डलीभिर्धुर्जीनिर्धूमधूमध्वजनिचितमिव व्योम रोमच्छटानाम् ॥ ५७ ॥ पायान्मायामृगेन्द्रो जगदखिलमसौ यत्तनूदर्चि-

१ वराहमुखाभे २ विदारणम् ३ भयात

१ नखा २ करपत्रकम् ३ विस्तीर्णौ ४ व्याकुलै ५ रुधिरम् ६ आच्छादिता ७ सूर्ये ८ नेत्र ९ विदारणम् १० सिक्ता ११ संकीर्ण १२ उल्लङ्घनम् १३ रोमकूपा १४ रक्तीभवन १५ हिरण्यकशिपोरनुचरस्य चोक्तिप्रत्युक्तय १६ किं भवनि लब्धं १७ उच्चैःसामिती १८ उत्पद्यमान १९ सिंह २० अग्नि २१ व्याप्तम्

र्भिर्ज्वालाजालावलीढं बत भुवि सकलं व्याकुलं किं न भूयात् । न स्वाच्छेदाशु तस्याधिकविकटसटाकोटिभिः पाट्यमानादिन्दोरानन्दकं दाक्तदुपरि तुहिनासारसंदोहवृष्टिः ॥ ५८ ॥ आदित्या किं दशैते प्रलयभयकृतः स्वीकृताकाशदेशाः किं वोल्कामण्डलानि त्रिभुवनदहनायोद्यतानीति भीतैः । पायासुर्नारसिंहं वपुरमरगणैर्वीक्षितं शार्ङ्गपाणेर्दृष्टा दृप्तासुरोरःस्थलदरणगलद्रक्तरक्ता नखा वः ॥ ५९ ॥

## वामन

अव्याद्वो वामनो यस्य कौस्तुभप्रतिबिम्बिता । कौतुकालोकिनी जाता जाठरीव जगत्त्रयी ॥ ६० ॥ अङ्घ्रिदण्डो हरेरूर्ध्वमुत्क्षिप्तो बलिनिग्रहे । विधिविष्टरपद्मस्य नालदण्डो मुदेऽस्तु नः ॥ ६१ ॥ खर्वग्रन्थिविमुक्तसंधिविलसद्वक्षःस्फुरत्कौस्तुभं निर्यन्नाभिसरोजकुड्मलपुटीगम्भीरसामध्वनि । पात्रावाप्तिसमुत्सुकेन बलिना सानन्दमालोकितं पायाद्वः क्रमवर्धमानमहिमाश्चर्यं मुरारेर्वपुः ॥ ६२ ॥ हस्ते शस्त्रकिणाङ्कितोऽरुणविभाकिर्मीरितोरःस्थलो नाभिर्मेढ्रं दलिर्विलोचनयुगप्रोद्भूतशीतातपः । वाहैर्मिश्रितवह्निरेवं तदिति व्याशिष्य वान्यैः कैवेस्तारैरध्ययनैर्हरन्बलिमनः पायाज्जगद्वामनः ॥ ६३ ॥ स्वस्ति स्वागतमर्घ्यमेह वद विभो किं दीयतां मेदिनी का माना मम विक्रमत्रयपदं दत्तं जलं दीयताम् । मा देहीत्युशनाब्रवीद्धरिरयं पात्रं किमस्मात्परं चेत्येवं बलिनार्चितो मखमुखे पायात्स वो वामनः ॥ ६४ ॥ स्वामी सन्भुवनत्रयस्य विकृतिं नीतोऽसि किं वामया मह्यं विश्वसृजा त्वयैव न कृतं तद्दीयतां ते कृतम् । दानं श्रेष्ठतमाय तुभ्यमतुलं बन्धाय नो मुक्तये विश्वस्तो बलिना निरुत्तरतया हीतो हरिः पातु वः ॥ ६५ ॥ ब्रह्माण्डच्छत्रदण्डः शतधृतिभवनाम्भोरुहो नालदण्डः क्षोणीनौकूपदण्डः क्षरदमरसरित्पट्टिकाकेतुदण्डः । ज्योतिश्चक्राक्षदण्डस्त्रिभुवनविजयस्तम्भदण्डोऽङ्घ्रिदण्डः श्रेयस्त्रैविक्रमस्ते वितरतु विबुधद्वेषिणां कालदण्डः ॥ ६६ ॥ यस्मादाक्रामतो द्यां गरुडमणिशिलाकेतुदण्डायमानादाश्च्योतन्त्या बभासे सुरसरिदमला वैजयन्तीव कान्ता । भूमिष्ठो यस्य वान्यो भुवनगृहमहास्तम्भशोभां दधानः पातामेतौ पयो-जोदरललिततलौ पङ्कजाक्षस्य पादौ ॥ ६७ ॥ कस्त्वं ब्रह्मन्नपूर्वः क्व च तव वसतिर्याऽखिला ब्रह्मसृष्टिः कस्ते नाथो जनार्दनः क्व च तव जनको नैव तातं स्मरामि । किं तेऽभीष्टं ददामि त्रिपदपरिमिता भूमिरल्पं किमेतत्त्रैलोक्यं भावगर्भं बलिमिदमवदद्वामनो वः स पायात् ॥ ६८ ॥

## परशुराम

कुलाचला यस्य महीं द्विजेभ्यः प्रयच्छतः सीमदृषत्त्वमापुः । बभूवुरुत्सर्गजलं समुद्राः स रैणुकेयः श्रियमातनोतु ॥ ६९ ॥ किं दोर्भ्यां किमु कार्मुकोपनिषदा भर्गप्रसादेन किं किं वेदाधिगमेन भास्वति भृगोर्वंशे च किं जन्मना । किं दानेन ममाद्भुतेन तपसा पीडा कृतान्तोऽपि चेद्विप्राणां कुरुतेऽन्तरित्यनुशयो रामस्य पुष्णातु वः ॥ ७० ॥ नाशिष्य किमभूद्भवः किमभवन्नापुत्रिणी रेणुका नाभूद्विश्वमकार्मुकं किमिति वः प्रीणातु रामत्रपा । विप्राणां प्रतिमन्दिरं मणिगणोन्मिश्राणि दण्डाहतेनाब्धीना स मया यमोऽपि महिषेणाम्भांसि नोद्वाहितः ॥ ७१ ॥ पायाद्वो जमदग्निवंशतिलको वीरव्रतालंकृतो रामो नाम मुनीश्वरो नृपवधे भास्वत्कुठारायुधः । येनाशेषहताहिताङ्गरुधिरैः संतर्पिताः पूर्वजा भक्त्या चाश्वमखे समुद्रवसना भूर्हन्तकारीकृता ॥ ७२ ॥ द्वारे कल्पतरुं गृहे सुरगवीं चिन्तामणीनङ्गदे पीयूषं सरसीषु विप्रवदने विद्याश्चतस्रो दश । एवं कर्तुमयं तपस्यति भृगोर्वंशावतंसो मुनिः पायाद्वोऽखिलराजकक्षयकरो भूदेवभूषामणिः ॥ ७३ ॥ नो संध्या समुपासते यदि तदा लोकापवादाद्भयं सा चेत्स्वीक्रियते भविष्यति तदा राजन्यबीजे नतिः । इत्थं चिन्तयतश्चिरं भृगुपतेर्निश्वासकोष्णीकृतो नेत्रान्तःप्रतिबिम्बशोणसलिलः संध्याञ्जलिः पातु वः ॥ ७४ ॥

## रामचन्द्र

वन्दामहे महेशानचण्डकोदण्डखण्डनम् । जानकीहृदयानन्दचन्दनं रघुनन्दनम् ॥ ७५ ॥ नमो रामपदाम्भोजरेणवो यत्र संततम् । कुर्वन्ति कुमुदप्रीतिमरण्यगृहमेधिनः ॥ ७६ ॥ स्वर्णाजिनशयनो योजितनयनो

१ वचने २ कम्पनम् ३ प्रलय शामरेल्पनि- ४ यतो हरेर्भगवतो हृदये कौस्तुभमणौ प्रतिबिम्बितेति, अतस्तत्प्रतिबिम्बरूपेण बहुधा समस्तापि त्रिभुवनप्रतीतिः भाव- ५ यतो हरेर्नाभौ कमलं वर्तते, अतस्तत्र वसतस्तस्य ब्रह्मण उपरिस्थया कमलनालभूत्या पदं भवतीति भाव- ६ स्त्री ७ शुक्रस्य ८ मह्यं ९ शुक्राचार्यः १० नाभिप्रदेश्य दारकस्य ११ त्रिषु लोकेषु पदन्यासे यस्य तस्य १२ मरकतमणिनिर्मितध्वजस्तम्भायमानात् १३ शान्ती १४ वनमाला १५ भाव- स्तम्भस्थिति भाव-

१ यदा ब्राह्मणेभ्यो भूर्दत्ता, तदा तेषां स्वस्वभूमिसीमार्थं कुलपर्वता दत्ता इति भाव- २ यदा याचकेभ्यो दानं दीयते, तदा दानारम्भान्नानाविधजलोत्सर्गः जलं दीयते अतस्तेनैवावदानं कृतं येन समुद्रा उत्सर्गजलत्वमापुर्भूवन्निति भाव २ धनुर्वेदविद्याज्ञानरहस्येन ४ यतो महतामनुपरक्षिता सेव्य स्यात्, यद्यपकारं कस्यचित्करोति उपकारेण, परं मया ब्राह्मणानां निवारिता न भवति, अत श्रीशंभुप्रसादेन किमिति ५ यद्यपि तपस्तु अल्पमपि साध्यते परं यदि मया तत्तपश्चर्यां न्यासार्थं, तदानेन तपसा किमिति भाव ६ शत्रवः ७ ब्राह्मणेभ्यो देयमन्नेन शिक्षितेभ्यः 'भारतभागे भिक्षा स्यादग्रं ग्रासचतुष्टयम् । अग्रं चतुर्गुणं प्राहुस्तत्कारं द्विगुणं' इत्युक्तत्वात् ८ ए-

दशास्यदिग्भागे । मुहुरवलोकितचाप कोऽपि दुराप स नीलिमा शरणम् ॥ ७७ ॥ अधिपञ्चवटीकुटीरवर्तिस्फुटितेन्दीवरसुन्दरोरुमूर्ति । अपि लक्ष्मणलोचनैकसरथ भजत ब्रह्म सरोरुहायताक्षम् ॥ ७८ ॥ कनकनिकषभासा सीतया लिङ्गिताङ्गो नवकुवलयदामश्यामवर्णाभिराम । अभिनव इव विद्युन्मण्डितो मेघखण्ड शमयतु मम ताप सर्वतो रामचन्द्र ॥ ७९ ॥ परिणयविधौ भङ्क्त्वानङ्गद्विषो धनुरभ्रतो जनकसुतया दत्ता कण्ठे स्रज हृदि धारयन् । कुसुमधनुषा पाशेनेव प्रसह्य वशीकृतोऽवनतवदनो राम पायाद्त्रपाविनयान्वित ॥ ८० ॥ उत्फुल्लामलकोमलोत्पलदलश्यामाय रामामन कामाय प्रथमाननिर्मलगुणग्रामाय रामात्मने । योगारूढमुनीन्द्रमानससरोहसाय ससारविध्वसाय स्फुरदोजसे रघुकुलोत्तसाय पुसे नम ॥ ८१ ॥ यो रामो निजघान वक्षसि रणे त रावण सायकैर्हृद्यस्य प्रतिवासर वसति सो तस्मा स्वय राघव । यस्यास्ते भुवनावली परिवृता द्वीपे सम सप्तभि· स श्रेयो विदधातु नस्त्रिभुवनत्राणैकचि तापर ॥८२॥ राज्य येन पटान्तलग्नतृणवत्यक्त गुरोराज्ञया पाथेय परिगृह्य कार्मुकवर घोर वन प्रस्थित । स्वाधीन· शशिमौलिचापविषये प्राप्तो न वै विक्रिया पायाद्व स विभीषणाग्रजनिहा रामाभिधानो हरि ॥ ८३ ॥ कारुण्यामृतनीरमाश्रितजनश्रीचातकानन्दद शार्ङ्गाखण्डलचापमम्बुजभवाभीन्द्रादिबर्हीष्टदम् । चारुस्मेरमुखोल्लसज्जनकजासौदामिनीशोभित श्रीरामाम्बुदमाश्रयेऽखिलजगत्ससारतापापहम् ॥ ८४ ॥ भूमौ मूलवदालवालवदपाराशिर्लतावद्दिशो मेघा पल्लववत्प्रसूनफलवन्नक्षत्रसूर्येन्दव । स्वामिन्व्योमतर क्रमे मम कियान्छुत्वेति गा मारुते सीतान्वेषणमादिशन्दिशतु वो राम सलज्ज श्रियम् ॥ ८५ ॥ एतौ द्वौ दशकण्ठकण्ठकदलीकान्तारकान्तिच्छिदौ वैदेहीघनकुम्भकुङ्कुमरज सान्द्रारुणाङ्काङ्कितौ । लोकत्राणविधानसाधुसननप्रारम्भयूपौ भुजौ दैयास्तामुरुविक्रमौ रघुपते श्रेयासि भूयासि व· ॥ ८६ ॥ बालक्रीडनमिन्दुशेखरधनुर्भङ्गावधि प्रहता ताते कानन सेवनावधि कृपा सुग्रीवसख्यावधि । आज्ञा वारिधिवन्धनावधि यशो लङ्केशनाशावधि श्रीरामस्य पुनातु लोकवशता जानक्यपेक्षावधि ॥ ८७ ॥ कल्याणानां निधान कलिमलमथन पावन पावनाना पाथेय यन्मुमुक्षो सपदि परपदप्राप्तये प्रस्थितस्य । विश्रामस्थानमेक कविवरवचसा जीवन सज्जनाना बीज धर्मद्रुमस्य प्रभवतु भवतां भूतये रामनाम ॥ ८८ ॥ कल्याणोल्लाससीमा कलयतु कुशल कालमेघाभिरामा काचित्साकेतधामा भवगहनगतिक्लान्तिहारिप्रणामा । सौन्दर्यह्रीणकामा धृतजनकसुतासादरापाङ्गधामा दिक्षु प्रख्यातभूमा दिविषदभिनुता देवता रामनामा ॥ ८९ ॥ योऽर्द्धा योद्धावधीत्तान्सपदि पलभुज सपराये परा ये येनोयेनाश्रिताना स्तुतिरवनमितेशानचापेन चापे । लङ्कालकारहर्ता ककुभि ककुभि य कान्तया सीतयासीदूनो दूनोऽथ हृष्ट स विभुरवतु व स्वे समार्य समार्य ॥ ९० ॥ ऋक्षाणा भूरिधाम्ना श्रितमधिपतिना प्रस्फुरद्भीमतार स्फार नेत्रोनलेन प्रसभनियमितोच्चापमीनध्वजेन । रामायत्त पुरारे कुमुदशुचि लसन्नीलसुग्रीवमङ्ग श्रावङ्क वापि सैन्य दशवदनशिरश्छेदहेतु श्रियेऽस्तु ॥ ९१ ॥ यत्तीर्थानामुपास्त्या गलितमलभरं मन्यते स्व स्वमेव नाभ्यासीज्जज्ञिरे यन्मम चरणरज पादपूतान्यमूनि । पादस्पर्शेन पुनर्न्झटिति निघटितग्रावभावामहल्या कौसल्यासूनुरूर्ध्व व्यपनयतु स व· श्रेयसा च श्रिया च ॥ ९२ ॥

## सीता

उन्मृष्ट कुचसीम्नि पत्रमकर दृष्ट्वा हठाल्लिङ्गनात्कोपो मास्तु पुनर्लिखाम्यमुमिति स्मेर रघूणा वरे । कोपेनारुणितोऽश्रुपातदलित प्रेम्णा च विस्तारितो दत्तो मैथिलकन्यया दिशतु न क्षेम कटाक्षाङ्कुर ॥ ९३ ॥

## हनूमान्

अशेषलङ्कापतिसैन्यहन्ता श्रीरामसेनाचरणैककर्ता । अनेकदु खाहतलोकगोप्ता त्वसौ हनूमास्तव सौख्यकर्ता ॥ ९४ ॥ कृतकोपे यस्मिन्नमरनगरी मङ्गलरवा नैवातङ्का लङ्का समजनि यत्र प्रध्वति सति । सदा सीताकान्तप्रणतिमतिविख्याततमहिमा हनूमानव्याद्व कपिकुलशिरोमण्डनमणि ॥ ९५ ॥

## रामकृष्णौ

जात कैकेयीदरो येन द्रोग्धापि करुणात्मना । पूतनामारणख्यात स मेऽस्तु शरण प्रभु ॥ ९६ ॥

१ समूह २ सीता ३ विभीषणस्याग्रजन्मा रावणस्त हन्तीति स ४ वाचम्

१ निश्चितम् २ राक्षसान् ३ युद्ध ४ रावण ५ भाग्येन ६ आशा ७ निरञ्जित ८ दु खितमना ९ दक्षसभास्वामी १० ऋक्षाणां भल्लूकानामधिपतिना जाम्बवता, पक्षे,—नक्षत्राणामधिपतिना चन्द्रेण ११ भीमस्तारो वानरविशेष , पक्षे,—भीमा तारा नेत्रकनीनिका १२ नेत्रा नायकेन नलेन नलनाम्ना वानरेण, पक्षे,—नेत्रानलेन तृतीयनेत्राग्निना १३ उच्चा आपो यस्मिन्स उच्चापो मीनध्वज समुद्र , पक्षे,—उद्धतचापो मीनध्वज काम १४ रामा यत्त रामचन्द्राधीनम्, पक्षे,—रामाया पार्वत्या अधीनम् १५ कुमुद नाम्ना वानरेण शुचि, पक्षे,—कुमुदपुष्पवच्छुचि शुभ्रम् १६ नील सुग्रीवश्च वानरा, पक्षे,—नील नीलवर्णा शोभना ग्रीवा १७ दशवदनशिरश्छेदहेतुरिति सैन्यपक्षे स्पष्टम्, अन्यत्र शिवप्रसादनार्थं रावणेनात्मन शिरासि छिन्नानीति प्रसिद्धि १८ सेवनया १९ पत्रमकरम् २० नवमया २१ उदरो भयरूप यस्य, पक्षे,—भाग्यसर्पं २२ पूतनाम्ना पवित्रनाम्ना रणे ख्यातश्च, पक्षे,—पूतनाया राक्षस्या मारणेन ख्यात

मर्दितरासगक्मौ सरयूयमुनाविहारिणौ देवौ । अर्पितविप्रकुमारौ हरिर्वेतिहरिकेतनप्रियौ वन्दे ॥ ९७ ॥ यः पूतनामारणलब्धकीर्तिः काकोदरो येन विनीतदर्पः । यशोदयालंकृतमूर्तिरव्यात्पतिर्यदूनामथवा रघूणाम् ॥ ९८ ॥

कृष्ण

इन्दीवरदलश्याममिन्दिरानन्दकन्दलम् । वन्दारुजनमन्दारं वन्देऽहं यदुनन्दनम् ॥ ९९ ॥ देव पायादपायान्नः स्मेरेन्दीवरलोचन । संसारध्वान्तविध्वंसहंसकंसनिषूदन ॥ १०० ॥ पातु वो जलदश्यामः शार्ङ्गज्याघातकर्कशः । त्रैलोक्यमण्डपस्तम्भश्चत्वारो हरिबाहवः ॥ १०१ ॥ दर्पणार्पितमालोक्य मायास्त्रीरूपमात्मनः । आत्मन्येवानुरक्तो वः शिवं दिशतु केशवः ॥ १०२ ॥ हृदय कौस्तुभोद्भासि हरेः पुष्णातु वः श्रियम् । राधाप्रवेशरोधाय दत्तमुद्रमिव श्रिया ॥ १०३ ॥ देहि मत्कन्दुकं राधे परिधाननिगूहितम् । इति विस्रंसयन्नीवीं तस्याः कृष्णो मुदेऽस्तु नः ॥ १०४ ॥ चण्डचाणूरदोर्दण्डमण्डलीखण्डमण्डितम् । अव्याद्वो बालवेषस्य विष्णोर्गोपतनोर्वपुः ॥ १०५ ॥ मीमांसार्णवसोमं लसदर्कं तर्कपद्मस्य । वेदान्तविपिनसिंहं वन्दे गोविन्दसाभिधं ब्रह्म ॥ १०६ ॥ अवलोकितमनुमोदितमालिङ्गितमङ्गनाभिरनुरागे । अधिवृन्दावनकुञ्जं मरकतपुञ्जं नमस्यामः ॥ १०७ ॥ मकरीविरचनभङ्ग्या राधाकुचकलशपीडनव्यसनी । ऋजुमपि रेखां लुम्पन्यत्यवेषो हरिर्जयति ॥ १०८ ॥ कठिनतरदामवेष्टनलेखासंदेहदायिनो यस्य । राजन्ति वलिविभङ्गाः स पातु दामोदरो भवतः ॥ १०९ ॥ खिन्नोऽसि मुञ्च शैलं बिभृमो वयमिति वदत्सु शिथिलभुजः । भरभुग्नविनतबाहुषु गोपेषु हसन्हरिर्जयति ॥ ११० ॥ नीरं नवनीतं रिपुदिति पृष्टे यशोदया कृष्णः । इयदिति गुरुजनसंसदि करधृततरुणीपयोधरः पातु ॥ १११ ॥ राधामधुसूदनयोरनुदिनमुपचीयमानस्य । प्रणयतरोरिव कुसुमं मिथोऽवलोकस्मितं पायात् ॥ ११२ ॥ श्रुतिमपरे स्मृतिमपरे भारतमपरे भजन्तु भवभीताः । अहमिह नन्दं वन्दे यस्यालिन्दे परं ब्रह्म ॥ ११३ ॥ तत्र येन तथापि पश्यन्ति तद्गोपबालानाम् । लोचनयुगले यासामञ्जनमासीन्निरञ्जनं ब्रह्म ॥ ११४ ॥ मदमयमदमयपुरगं यमुनामवनीयं वीर्यधारी यः । मम रतिमदनविरहविनिहतमनसः स श्रियात्कृष्णः ॥ ११५ ॥ स्तनभरत जननीमुखाम्बुजं विलोक्य मन्दस्मितमुज्ज्वलाङ्गम् । स्पृशन्तमन्यं स्तनमङ्गुलीभिर्वन्दे यशोदाङ्कगतं मुकुन्दम् ॥ ११६ ॥ भुजप्रकाण्ड इवोर्ध्वगामी स पातु वः कंसरिपोः कृपाणः । यः पाञ्चजन्यप्रतिबिम्बभङ्ग्या धाराम्भसः फेनमिव व्यनक्ति ॥ ११७ ॥ विहाय पीयूषरसं मुनीश्वरा ममाङ्घ्रिराजीवरसं पिबन्ति किम् । इति स्वपादाम्बुजपानकौतुकी स गोपबालः श्रियमातनोतु वः ॥ ११८ ॥ विलिख्य सख्याः कुचकुम्भसीम्नि पत्रावलिन्यासमिषेण राधाम् । लीलारविन्देन तया सरोषं पायढिट कोऽप्यभिहन्यमानः ॥ ११९ ॥ स पातु वो यस्य हतावशेषास्तत्तुल्यवर्णाञ्जनरञ्जितेषु । लावण्ययुक्तेष्वपि वित्रसन्ति दैत्याः स्वकान्तानयनोत्पलेषु ॥ १२० ॥ कुञ्चिताधरपुटेन पूरयन्वंशिकां प्रचलदङ्गुलिक्रमम् । मोहयन्निखिलवामलोचनाः पातु कोऽपि नवनीरदच्छविः ॥ १२१ ॥ अतसीकुसुमोपमेयकान्तिर्यमुनातीरकदम्बमध्यवर्ती । नवगोपवधूविनोदशाली वनमाली वितनोतु मङ्गलं वः ॥ १२२ ॥ गायन्तीनां गोपसीमन्तिनीनां स्फीताकाङ्क्षामक्षिलोलम्बमालाम् । निश्वासवल्यामारम्वक्षारविन्दे धुन्वन्नव्याद्देवकीनन्दनो वः ॥ १२३ ॥ पुञ्जीभूतं प्रेम गोपाङ्गनानां मूर्तीभूतं भागधेयं यदूनाम् । एकीभूतं गुप्तवित्तं श्रुतीनां श्यामीभूतं ब्रह्म मे संनिधत्ताम् ॥ १२४ ॥ आनन्दमादधतमायतलोचनानामानीलमावलितकंधरमात्तरश्मि । आपादमामुकुटमाकलितामृतौघमाकारमाकलयतामुपमान्तरं न ॥ १२५ ॥ त्वां पातु नीलनलिनीदलदामकान्ते कृष्णस्य पाणिसरसीरुहकोशबन्धः । राधाकपोलमकरीलिखनेषु योऽस्य कर्णावतंसकमलं विपुलीचकार ॥ १२६ ॥ उत्फुल्लमानसरसीरुहचारुमध्यनिर्यन्मधुव्रतभरद्युतिहारिणीभिः । राधाविलोचनकटाक्षपरम्पराभिर्दृष्टो हरिस्तव सुखानि तनोतु कामम् ॥ १२७ ॥ गोवर्धनोद्धरणहृष्टसमस्तगोपनारीस्तुतिश्रवणलज्जितमानसस्य । स्मृत्वा वराहवपुरिन्दुकलाप्रकाशदंष्ट्रोद्धृतक्षिति हरेरवतु स्मितं वः ॥ १२८ ॥ अभिनवनवनीतप्रीतमाताम्रनेत्रं विकचनलिनलक्ष्मीस्पर्धि सानन्दवक्त्रम् । हृदयभवनमध्ये योगिभिर्ध्यानगम्यं नवगगनतमालश्यामलं कंचिदीडे ॥ १२९ ॥ अभिनवनवनीतस्निग्धमापीतदुग्धं दधिकणपरिदिग्धं मुग्धमङ्गं मुरारेः । दिशतु भुजगभृत्कच्छेदितापिच्छगुच्छच्छविनवशिखिपिच्छालाञ्छितं वाञ्छितं वः ॥ १३० ॥ पयस्तल्पोत्सङ्गे राधापयोधरमण्डले नवजलधरश्यामामात्मद्युतिं प्रतिबिम्बिताम् । असितसिचयभ्रान्त्या तन्वा त्वा मुहुर्मुहुरुत्क्षिपन्जयति जनितव्रीडाहासप्रियाहसितो हरिः ॥ १३१ ॥

१ अर्जुन- २ पूतनया मारणेन कृष्णा कीर्तिर्येन, पक्षे,-निधनेन, रौ कृष्णा कीर्तिर्येन येन ३ काकिव सर्पः, पक्षे,-शूद्र काक- ४ यशोदया मातृकृष्णो दत्तो यस्य, पक्षे,-यशसा दया चालंकृतमूर्तिर्यस्य ५ धारयाम

१ कृष्ण

ललितगमना नायो राजन्मनोजनितान्तभा सुरतिसदृशस्ता
सन्मुखयो भवानपि तद्वने। वनमुनमितो गेहादेको न
गच्छतु मा विनेत्यसकृदुदित॰ पुन पित्रा जयत्यनघो हरि
॥ १३२ ॥ देव पायात्पयसि विमले यामुने मज्जतीना याच-
न्तीनामनुनयपदैर्वञ्चितान्यशुकानि । लज्जालोलैरलसवलितै-
रुन्मिषत्पञ्चबाणैर्गोपस्त्रीणा नयनकुसुमैरञ्चित केशवो न
॥१३३॥ वृन्दारण्ये तपनतनयातीरवानीरकुञ्जे गुञ्जन्मञ्जुभ्रमर
पटलीकाकलीकेलिभाजि । आभीराणा मधुरमुरलीनादस-
मोहिताना मध्ये क्रीडन्नवतु नियत नन्दगोपालबाल ॥१३४॥
शिरश्छाया कृष्ण क्षणमकृत राधाचरणयोर्भुजावल्लिच्छाया
मियमपि तदीयप्रतिकृतौ । इति क्रीडाकोपे निभृतमुभयो-
रप्यनुनयप्रसादौ जीयास्तामपि गुरुसमक्ष स्थितनतो ॥१३५॥
अवेमव्यापाराकलनमेतुरीस्पर्शमचिरादनुन्मीलत्तन्तुप्रकरघट-
नायासमसकृत्। विषीदत्पाञ्चालीविपदपनयैकप्रणयिन पटाना
निर्माण पतंगपतिकेतोरवतु न ॥ १३६॥ कपोले पत्राली पुल-
किनि विधातु व्यवसितः स्वय श्रीराधाया॰ करकलितवर्तिर्म-
धुरिपु । अभूद्वक्रेन्दौ यन्निहितनयन कम्पितभुजस्तदेतत्सा-
मध्ये तदभिनवरूपस्य जयति ॥१३७॥ जयश्रीविन्यस्तैर्महित
इव मन्दारकुसुमै स्वय सिन्दूरेण द्विपरणमुदा मुद्रित इव ।
भुजापीडक्रीडाहतकुवलयापीडकरिण प्रकीर्णासृग्बिन्दुर्जयति
भुजदण्डो मुरजित ॥ १३८ ॥ सुपर्ण स्वर्णाद्रौ रचितम
णिरङ्के जलधिजामुखाम्भोजे भृङ्गो निगमविलसत्पञ्जरशुक ।
त्रिलोकीकस्तूरीतिलककमनीयो प्रजवधूविहारी श्रीकृष्णो
दिशतु भवता शर्म सततम् ॥ १३९ ॥ क यासि खलु
चौरिके प्रमुषित स्फुट दृश्यते द्वितीयमिह मामक वहसि
कन्दुक कञ्चुके । त्यजेति नवगोपिकाकुचयुग प्रमथ्नन्बलाल्ल-
सत्पुलकपञ्जरो जयति गोकुले केशव ॥ १४० ॥ मेघैर्मे-
दुरमम्बर वनभुव श्यामास्तमालद्रुमैर्नक्त भीरुरय त्वमेव
तदिम राधे गृह प्रापय । इत्थ नन्दनिदेशतश्चलितयो
प्रत्यध्वकुञ्जद्रुम राधामाधवयोर्जयन्ति यमुनाकूले रह केलय
॥ १४१ ॥ कौन्तेयस्य सहायता करुणया गत्वा विनीता-
त्मनो येनोल्लङ्घितसत्पथ कुरुपतिश्चक्रे कृतातीतिथि ।
त्रैलोक्यस्थितिसूत्रधारतिलको देव सदा सपदे साधूनामसु-
राधिनाथमथन स्ताद्देवकीनन्दन ॥ १४२ ॥ आताम्रे नयने
स्फुरन्कुचभर श्वासो न विश्राम्यति खेदाम्भ कणदन्तुर
तव मुख हेतुस्तु नो लक्ष्यते। धिङ्को वेद मन स्त्रिया
इति गिरा रुष्टा प्रिया मीषयस्तस्यास्तत्क्षणकातरेक्षणपरिस्पृष्टो
हरि पातु व ॥ १४३ ॥ ससक्तानिव पातुमौपनिषदव्या-
हारमाध्वीरसानुन्माष्टुं व्रजसुन्दरीकुचतटीपाटीररेणूनिव ।
उन्मील मुरलीनिनादबहुलामोदोपसीदद्भवीजिह्वालीढमलीक-
बल्लवशिशो पादाम्बुज पातु व ॥ १४४ ॥ कृष्णो गोरस-
चौर्यमम्ब कुरुते किं कृष्ण मात सुरापान न प्रकरोमि राम
किमिद नाह परस्त्रीरत । कि गोविन्द वदत्यसौ हलधरो
मिथ्येति ता व्याहरन्गोपीगोपकदम्बक विहसय मुग्धो मुकु
न्दोऽव्यतु ॥ १४५ ॥ मातस्तर्णकरक्षणाय यमुनाकच्छ
न गच्छाम्यह कस्माद्धत्स पिनष्टि पीवरकुचद्वन्द्वेन
गोपीजन । भ्रूसज्ञाविनिवारितोऽपि बहुशो जल्पन्यशो-
दाग्रतो गोपीपाणिसरोजमुद्रितमुखो गोपीपति पातु व॰
॥ १४६ ॥ कासि त्व वद चौर्यकारिणि कुत कस्त्व
पुरो यामिक किं नूपे मुषितौ सुवर्णकलशौ भूपस्य केन
त्वया । कुत्र स्त प्रकटौ तवाञ्चलतटे कुत्रेति तत्पश्यता-
मित्युक्ते धृतबल्लवीकुचयुगस्त्वा पातु पीताम्बर ॥ १४७ ॥
कृष्ण त्व पठ किं पठामि ननु रे शास्त्र किमु ज्ञायते तत्त्व
कस्य विभो स कश्चिद्भुवनाधीशश्च तेनापि किम् । ज्ञान
भक्तिरथो विरक्तिरनया कि मुक्तिरेवास्तु ते दध्यादीनि
भजामि मातुरुदित वाक्य हरे पातु व ॥ १४८ ॥ कृष्ण
त्व नवयौवनोऽसि चपला प्रायेण गोपाङ्गना कसो भूपति-
रब्जनालमृदुलग्रीवा वय गोदुह । तद्याचेऽञ्जलिना भवन्त-
मधुना वृन्दावन मद्विना मा यासीरिति नन्दगोपवचसा
नम्रो हरि पातु व ॥ १४९ ॥ कस्त्व कृष्णमवेहि मा
किमिह ते मन्मन्दिराशङ्कया युक्त तन्नवनीतभाजनपुटे
न्यस्त किमर्थे कर । कर्तु तत्र पिपीलिकापनयन सुप्ता
किमुद्बोधिता बाला वत्सगतिं विवेक्तुमिति सजल्पन्हरि पातु
व ॥ १५० ॥ स्वामी मुग्धतरो वन घनमिद बालाहमेका-
किनी क्षोणीमावृणुते तमालमलिनच्छाया तम सहतिः ।
तन्मे सुन्दर कृष्ण मुञ्च सहसा वर्त्मेति गोप्या गिर श्रुत्वा

१ गोपीपक्षे,-ललित गमन यासा ता, कृष्णपक्षे ललिते गे गाने मनो यस्य स २ स्त्रिय, पक्षे,-नास्त्यार्य श्रेष्ठो यस्मात्स ३ राजता मनोजेन मदनेन नितान्ता भा कान्तिर्यासा ता, पक्षे,-राज मनोजनि' शोभमानमदनस्ता तो म्लानो यस्यास्तादृशी भा यस्य स ४ शोभायमानया रत्या कामपत्न्या सदृश, पक्षे,-सुष्ठु रतौ रमणे योग्य ५ सन्ति शोभनानि मुखान्याननानि यासा ता, पक्षे,-सत्सु प्रशस्तेषु बैरिचतुरेषु मुख्य ६ स्वच्छे ७ स्नान कुर्वतीनाम् ८ वेमा वस्त्रव्यूतिदण्डस्तद्व्यापाररहितम् ९ तुरी तन्तुवायाना यन्त्रविशेष, तत्स्पर्श विना १० पतगा पक्षिणस्तेषा पतिर्गरुड स केतुर्ध्वज यस्य कृष्णस्येत्यर्थ ११ विक्षिप्ते १२ पूजित १३ चिनित १४ रक्तबिन्दु १५ व्याप्तमित्यर्थ- १६ रात्रौ

१ एका तक्रीडा २ युधिष्ठिरस्य ३ मारित- ४ कृपबाल। ५ नगररक्षक

ता परिरभ्य सन्मथकृच्छ्रसक्तो हरि पातु व ॥ १५१ ॥ मार किं यदुनाथ देहि चंपक किं तेन पातु पयस्तचास्त्यच कन्गालि तन्निशि निशा का याघकारोदये । आमील्याक्षि युग निशाप्युपगता देहीति मातु पुनर्वक्षोजाम्बरकर्षणोद्यत-कर कृष्ण स पुष्णातु न ॥ १५२ ॥ अर्धोन्मीलितलोचनस पिनन पर्यासमेक स्तन सद्य प्रस्नुतदुग्धदिग्धमपर हस्तेन समार्जन । मात्रा चाङ्गुलिलालितस्य चिबुके स्मेरायमाणे मुखे विष्णो क्षीरकणाम्बुधामधवला दन्तद्युति पातु व ॥ १५३ ॥ गच्छाम्यच्युत दर्शनेन भवत किं तृप्तिरुत्पद्यते किं त्वेव विजनस्थयोर्हतजन समाधयत्यन्यथा । इत्यामन्त्रणभङ्गि-सूचितवृथावस्थानखेदालसामाश्लिष्य पुलकाङ्कुराञ्चिततनुर्गोपी हरि पातु व ॥ १५४ ॥ रामो नाम बभूव हु तदबला सीतेति हु तो पितुर्वाचा पञ्चवटीवने निवसतस्तामाहरद्रावण । कृष्णेनेति पुरातनीं निजकथामाकर्ण्य मात्रेरिता सौमित्रे क्व धनुर्धनुरिति प्रोक्ता गिर पातु व ॥ १५५ ॥ कोऽय द्वारि हरि प्रयाह्युपवन शाखामृगस्यात्र किं कृष्णोऽह दयिते बिभेमि सुतरा कृष्णादह वानरात् । राधेऽह मधुसूदनो व्रज लता तामेव पुष्पान्वितामित्थ निर्वचनीकृतो दयितया ह्रीणो हरि पातु व ॥ १५६ ॥ पीठे पीठनिषण्णबालकगले तिष्ठन्स गोपालको यन्त्रान्त स्थितदुग्धभाण्डमतराभियान्छाद्य घण्टारवम् । वक्त्रोपान्तकृताञ्जलि कृतशिर कम्प पिबन्य पय पायादागतगोपिकानयनयोर्गण्डूषफूत्कारकृत् ॥ १५७ ॥ पद्मे लनयन स्मरामि सतत भावो भवत्कु तले नीले मुह्यति किं करोमि महिते क्रीतोऽस्मि ते विभ्रमे । इत्युत्स्वप्नवचो निशम्य सरुषा निर्भर्त्सितो राधया कृष्णस्तत्परमेव तमपदि-श ञ्चोदावित पातु व ॥ १५८ ॥ दृष्ट्या केनापि गोरेणुग-हृतया[12] किंचिन्न दृष्ट मया तेनात्र स्खलितास्मि नाथ[13] पतिता किं नाम नालम्बसे । एकस्त्व विषमेषु[14] खिन्नमनसा सर्वाबलाना गतिर्गोप्यैव गदित सलेशमवताद्गोष्ठे हरिर्वश्चिरम् ॥ १५९ ॥ येन भाग्यवती तवोरसि मणी प्रेष्ठेऽमरेण विना कृत्वाम्भा

प्रथम विना क्व सहजो वर्णो भवेत्तादृश । क्षीरूप कथमस्य लिङ्गनियमा पृच्छामि बध्वाकृतिं मुग्धे त्वत्प्रतिबिम्बमित्यपल-पन्राधा हरि पातु व ॥ १६० ॥ या दृष्ट्वा यमुना पिपासु रनिश व्यूहो गवा गाहते विद्युत्वानिति नीलकण्ठनिवहो या द्रष्टुमुत्कण्ठते । उत्तसाय तमालपल्लवमिति च्छिन्दन्ति या गोपिका कान्ति कालियशासनस्य वपुष सा पावनी पातु व ॥ १६१ ॥ श्रीमद्गोपवधूसहस्रपरिष्वङ्गेषु तुङ्गस्तन-व्यामर्दाङ्गलितेऽपि चन्दनरजस्यङ्गे वहन्सौरभम् । कश्चिज्जागरजातरागनयनद्वन्द्व प्रभाते श्रिय बिभ्रत्कामपि वेणुनाद-रसिको जाराग्रणी पातु व ॥ १६२ ॥ कण्ठालिङ्गनमङ्गल घनकुचाभोगोपभोगोत्सव श्रोणीसङ्गमसौभग च सतत मद्भेयसीना पुर । प्राप्तु कोऽयमितीर्ष्ययेव यमुनाकूले बलाच्चय गोपीनामहरद्दुकूलनिचय कृष्ण स पुष्णातु न ॥ १६३ ॥ कृष्णेनाम्ब गतेन रन्तुमसकृन्मृद्भक्षिता स्वेच्छया सत्य कृष्ण क एवमाह मुसली मिथ्याम्ब पश्याननम् । व्यादेहीति विकासिते च वदने दृष्ट्वा समस्त जगन्माता यस्य जगाम विस्मयपद पायात्स व श्रीपति ॥ १६४ ॥ अम्ब भ्राम्यसि तिष्ठ गोरसमह मथ्नामि मन्थानक प्रालम्ब्य स्थितमीश्वर सस्मर दीनाननो वासुकि । मासूय कमलालया सुर-गण सानन्दमुपह्वय रुद्धु प्रैक्षत य स योऽस्तु शिवदो गोपालबालो हरि ॥ १६५ ॥ कालिन्द्या पुलिनेषु केलि-कुपितामुत्सृज्य रासे रस गच्छन्तीमनुगच्छतोऽश्रुकलुषा कस-द्विषो राधिकाम् । तत्पादप्रतिमानिवेशितपदस्योद्भूतरोमोद्गते-रक्षुण्णोऽनुनय प्रसन्नदयितादृष्टस्य पुष्णातु व ॥ १६६ ॥ कस ध्वसयते सुर तिरयते हस तथा हिंसते बाण क्षीणयते बक लघयते पौण्ड्र तथा लुम्पते । भौम क्षामयते बलाद्बल-भिदो दर्प पराकुर्वते क्लिष्ट शिष्टगण प्रणम्रमवते कृष्णाय तुभ्य नम ॥ १६७ ॥ रासोल्लासभरेण विभ्रमभृतामाभीर-वामभ्रुवामभ्यर्णे परिरभ्य निर्भरमुर प्रेमान्धया राधया । साधु त्वद्वदन सुधामयमिति व्याहृत्य गीतस्तुतिव्याजादुद्भट-चुम्बित स्मितमनोहारी हरि पातु व ॥ १६८ ॥ साकूत-स्मितमाकुलाकुलगलद्धम्मिल्लमुल्लासितभ्रूवल्लीकमलीकदर्शित-भुजामूलार्धदृष्टस्तनम् । गोपीना निभृत निरीक्ष्य ललित काचिच्चिर चिन्तयन्नन्तर्मुग्धमनोहरो हरतु व

१ पानपात्रम् २ दक्षन्नगतयो ३ दशना ४ यथा माता रघुवंशकथानक पुरातन कथ कथयति, तथा यशोदापि राम इति कश्चिज्जनो नीतिमान् अभू तत्कथा कृष्णोऽपि हुंकार ददाति ५ वानर, पाठे०-कृष्ण ६ कृष्णनामा पाठ०-कृष्णनामा ७ भ्रमर, पाठ०-मधुसूदननामा ८ मन्मथजातो दन्तक्षत, विकार इति प्रसिद्ध ९ हे रम्भे पाठ०-अयस्पृष्टे १० पूर्णे ११ गोपी स्वपि दो तान अन्यान्कन्दनकथाप्रमथा, पाठ०-भ्रष्टा पराभवेभूति [illegible] १२ गुरुगुरुम् पाठ०-समविषमम् १३ पतितम् पाठ०-पतनप्रसाद् १४ विषमेषु पञ्चशरत्वेन विषमबाणाम्, पाठ०-विषमेषु संकटेषु विषमवृत्त १५ स्त्रीणाम् पाठ०-वनितानाम् १६ मधुवनम् १७ गोपालानाम् १८ अपराधी इति हरि, रमणीहृदये-

१ कन्दर्प २ विकासय ३ समुद्रमथने दम्भूतस्य मम प्रकारस्तु पत भवता प्रश्न आगत इति भावेन धोप ४ मम सदृशी काचिदुत्पत्स्यतीत्यप्युक्तया ५ अमृतप्राप्तिमविष्यतीति धिया ६ विरूपकेशो भविष्यतीति बुध्या ७ रागम् ८ शङ्करा ९ गोपिकानाम् १० समीरम् ११ प्रकटम् १२ कृष्णे तृणा- १३ तृण्य भादिनिमित्तेनेत्यर्थ १४ गोप्यभावम्

क्लेश नैन केशव ॥ १६९ ॥ तिर्यक्कण्ठविलोलमौलितरलोत्तंसस्य वशोऽधरप्रीतस्याङ्गुतावधानललनालक्षैर्न संलक्षिता । समुग्ध मधुसूदनस्य मधुरे राधामुखेन्दौ सुधासुस्यन्द पल्लविताश्चिर ददतु व क्षेमं कटाक्षोर्मय ॥ १७० ॥ पृथिव्याकुलगोकुलार्वनरसादुद्धृत्य गोवर्धनं बिभ्रद्वल्लवनल्लभाभिरधिकानन्दाच्चिर चुम्बित । कन्दर्पेण तदर्पिताधरतटीसिन्दूरमुद्राङ्कितो बाहुर्गोपतनोस्तनोतु भवतां श्रेयांसि कंसद्विष ॥ १७१ ॥ राधामुग्धमुखारविन्दमधुपस्त्रैलोक्यमौलिस्थलीनेपथ्योचितनीलरत्नमवनीभारावतारक्षम । स्वच्छन्दव्रजसुन्दरीजनमनस्तोषप्रदोषाश्चिर कंसध्वंसनधूमकेतुरवतु त्वा देवकीनन्दन ॥ १७२ ॥ किं निश्राम्यसि कृष्ण भोगिभवने भाण्डीरभूमीरुहि भ्रातर्यामि न दृष्टिगोचरमित सानन्दनन्दास्पदम् । राधाया वचन तदध्वगमुखान्नन्दान्तिके गोपतो गोविन्दस्य जयन्ति सायमतिथिप्राशस्त्यगर्भा गिर ॥ १७३ ॥ सान्द्रानन्दपुरंदरादिदिविषद्वृन्दैरमन्दादरादानम्रैर्मुकुटेन्द्रनीलमणिभि सदर्शितेन्दीवरम् । स्वच्छन्द मकरन्दसुन्दरगलन्मन्दाकिनीमेदुर श्रीगोविन्दपदारविन्दमशुभस्कन्दाय वन्दामहे ॥ १७४ ॥ प्रातर्नीलनिचोलमच्युतमुर सवीतपीताशुक राधायाश्चकित विलोक्य हसति स्वैरं सखीमण्डले । व्रीडाचञ्चलमञ्चल नयनयोराधाय राधानने स्वादुस्मेरमुखोऽयमस्तु जगदानन्दाय नन्दात्मज ॥ १७५ ॥ प्रीतिं वस्तनुता हरि कुवलयापीडेन सार्धं रणे राधापीनपयोधरस्मरणकृत्कुम्भेन सभेदवान् । यत्र विस्मृति मीलति क्षणमपि क्षिप्र तदालोकनाद्व्यामोहेन जितं जितं जितमभूद्व्योलोलकोलाहल ॥ १७६ ॥ त्वामप्राप्य मयि स्वयवरपरा क्षीरोदतीरोदरे शङ्के सुन्दरि कालकूटमपिब मूढो मृडानीपति । इत्थ पूर्वकथाभिरन्यमनसो निक्षिप्य वासोऽञ्चल राधाया स्तनकोरकोपरिलसन्नेत्रो हरि पातु व ॥ १७७ ॥ यामासस्थलचुम्बिकुण्डलरचा जातोत्तरीयच्छविं वशीगीतिमयत्रिभङ्गवपुष भ्रूलाससलीलापरम् । किंचित्स्रस्तशिखण्डशेखरमतिस्निग्धालिनीलालक राधादिप्रमदाशतावृतमह वन्दे किशोराकृतिम् ॥ १७८ ॥ अन्तर्मोहनमौलिघूर्णनचलन्मन्दारस्रंसन स्तब्धाकर्षणदृष्टिहर्षणमहामन्त्र कुरङ्गीदृशाम् । दृप्यद्दानवदूयमानदिविषद्दुर्वारदु खापदा भ्रश कंसरिपोर्व्यपोहयतु वोऽश्रेयासि वशीरव ॥ १७९ ॥ मौलौ केकिशिखण्डिनी मधुरिमाधाराधरे वशिनी पीनासे वनमालिनी हृदि लसत्कारुण्यकल्लोलिनी । श्रोण्या पीतदुकूलिनी चरणयोर्व्यत्यस्तविन्यासिनी लीला वाचन मोहिनी विजयते वृन्दावनावासिनी ॥ १८० ॥ मालाबर्हमनोज्ञकुन्तलभरा वन्यप्रसूनोक्षिता शैलेयागुरुसक्तचित्रतिलका शश्वन्मनोहारिणीम् । लीलावेणुरवामृतैकरसिका लावण्यलक्ष्मीमयीं बाला बालतमालनीलवपुष वन्दे परा देवताम् ॥ १८१ ॥ अमालम्बितवामकुण्डलधर मन्दोन्नतभ्रूलत किंचित्कुञ्चितकोमलाधरपुट साचिप्रसारीक्षणम् । आलोलाङ्गुलिपल्लवैर्मुरलिकामापूरयन्त मुदा मूले कल्पतरोस्त्रिभङ्गललित ध्याये जगन्मोहनम् ॥ १८२ ॥ कस्तूरीतिलक ललाटपटले वक्ष स्थले कौस्तुभं नासाग्रे नवमौक्तिक करतले वेणु करे कङ्कणम् । सर्वाङ्गे हरिचन्दन सुनिमल कण्ठे च मुक्तावली गोपस्त्रीपरिवेष्टितो विजयते गोपालचूडामणि ॥ १८३ ॥ कालिन्दीपुलिनोदरेषु मुसली यावद्गत क्रीडितु तावत्कर्बुरिकापय पिब हरे वर्धिष्यते ते शिखा । इत्थ बालतया प्रतारणपरा श्रुत्वा यशोदागिर पायाद्व स्वशिखा स्पृशन्प्रमुदित क्षीरेऽर्धपीते हरि ॥ १८४ ॥ आनन्देन यशोदया समदन गोपाङ्गनाभिश्चिर साशङ्क बलविद्विषा सकुसुम सिद्धै पृथिव्याकुलम् । सेर्ष्यं गोपकुमारकै सकरुण पौरै सुरै सस्मित यो दृष्ट स पुनातु वो मधुरिपु प्रोत्क्षिप्तगोवर्धन ॥ १८५ ॥ राधामोहनमन्दिर जिगमिषोश्चन्द्रावलीमन्दिराद्राधे क्षेममिति प्रियस्य वचन श्रुत्वाह चन्द्रावली । क्षेम कस तत प्रिय प्रकुपित कस क्व दृष्टस्त्वया राधा केति तयो प्रसन्नमनसोर्हासोद्गम पातु व ॥ १८६ ॥ दृष्ट क्वापि स केशवो व्रजवधूमादाय काचिद्गत सर्वा एव हि वञ्चिता खलु वय सोऽन्वेषणीयो यदि । द्वे द्वे गच्छत इत्युदीर्य सहसा राधा गृहीत्वा करे गोपीवेषधरो निकुञ्जभवन प्राप्तो हरि पातु व ॥ १८७ ॥ किं युक्त बत मामनन्यमनस वक्ष स्थलस्थायिनीं भक्तामप्यवधूय कर्तुमधुना कान्तासहस्र तव । इत्युक्त्वा फणभृत्फणामणिगता स्वामेव मत्वा तनु निद्राच्छेदकर हरेरवतु वो लक्ष्म्या विलक्षस्मितम् ॥ १८८ ॥ समासादितदर्शनामनुनय प्राणेश्वरीमादरादस्तेऽस्मिन्नवितैरपाङ्गवलितैर्यद्बोधितोऽप्यश्रमि । प्रत्याख्यस्त्वमतो मया ननु हरे वोऽय नमव्यत्यय पातु त्वा व्रजयोषितेत्यभिहित लज्जाकर

१ तरुण २ अभ्यस्तम् ३ किंचिच्चलन यथा स्यात्तथा ४ रक्षणम् ५ अनुराग- ६ नीलत्वादधरपानकर्तृत्वाच्च ७ अलकार ८ रात्रिमुखे हि नार्थस्तुष्यतीति भाव- ९ भोगी सर्प तस्य भवने, पक्षे,-भोगिन शृङ्गारिणो विलासगृहे १० भाण्डीरनाम्नि वटवृक्षे ११ संगोपन कुर्वत १२ संदर्शित इन्दीवरस्य नीलोत्पलस्य भ्रमो यत्र १३ नाशाय १४ वक्षम् १५ परिधानीकृतम् १६ कटाक्ष- १७ धावने १८ मृते सति १९ चञ्चल- २० साधु साध्विति शिरःकम्पनम् २१ गुम्फितम्

१ अनिद्धोरिलघे- २ गौरीतीर्थे, बधुवर्ग द्वा-

शार्ङ्गिण ॥ १८९ ॥ अलिन्दुकुञ्जे निनापि प्रचलति पवना-द्वर्तते कोऽपि नूनं पश्याम किं न गवेत्यनुसरति गणे मीनमतिर्लसत्राणाम् । तस्मिन्राधासखो च सुमयतु निल्स-हीन्या केटभारिर्यातन्वानो मृगारिध्वनलघुरघुराराव रौद्रानि नादान् ॥ १९० ॥ अङ्गुल्या कः कपाट प्रहरति कुटिले माधव किं वसन्तो नो चक्री किं कुलालो नहि धरणिधर किं द्विजिह्व फणीन्द्र । नाहं घोराहिमर्दी किमुत खगपति-र्नो हरि किं कपीन्द्र इत्येवं सत्यभामाप्रतिवचनजित पातु वश्चक्रपाणि ॥ १९१ ॥ वृन्दारण्ये चरन्तीं निसुरपि सततं भूर्भुवःस्व सृजन्तीं मदोद्भूताप्यनादि शिशुरपि निगमैरञ्जिता वीक्षितापि । विश्वैरावन्द्यमन्दमदमलमहा-म्भोदसच्छायकाया माया पायादपायादविहितमहिमा कापि पैताम्बरी वः ॥ १९२ ॥ नामोदस्ताखिलामो दमनियमयुजा च प्रकामोदवाहस्यामो दर्पाढ्यधामोदयमिलितयशोधारया मोदते च । यामोदन्यासदामोदरतरलदृशा दत्तरामोदयो च श्यामोद श्रीलग्नामो दन्यतु दुरितं सोऽत्र दामोदरो वः ॥ १९३ ॥ मत्ते दैत्येन्द्रकल्पं शिशुरखिलजनैः पुष्पचापो-ऽङ्गनाभिर्गोपैस्तु प्राकृतात्मा दिवि कुलिशभृता विश्वकायोऽप्रमेय । क्रुद्धः कसेन कालो भयचकितदृशा योगिभिर्ध्येयमूर्तिर्दृष्टो रङ्गावतारे हरिरमरजनानन्दकृत्पातु युष्मान् ॥ १९४ ॥

बलभद्र

निष्पात्यानु हिमांशुमण्डलमथ पीत्वा तदन्तःसुधा कृत्वैव धिपत्र हलमिति हलपानाय कौतूहलात् । भो देव द्विजराजि माहशि सुरासक्तोऽपि न श्रेयसे मा मुञ्चेति तदर्थितो हलधर पायादपायाज्जगत् ॥ १९५ ॥ प्रेमोन्मादितरेवतीसुरगता मासाद्य कादम्बरीमुन्मत्त क्वचिदुत्पतत्क्वचिदपि भ्राम्यत्क्वचि-त्प्रस्खलत् । रक्तापाङ्गमधीरलाङ्गलमलिस्थामाम्बराडम्बर क्रमेण न वनीकरोतु सकलं पाकाभिरामं महः ॥ १९६ ॥ उष्णालु क्वचिदम्बुधामनि मनाङ् निद्रालु शीतानिले हाटानो गृहयालु सुन्दसमुत्कण्ठालु जायासुखम् । नित्यं निष्प तयालु तिर्यगवनीदम्यारायालु क्षण गीतेभ्य स्पृहयालु धाम धवलं दीने दयालु श्रिय ॥ १९७ ॥

रुक्मिणी

शय्यारोपितनु सुदर्शनरं सर्वाङ्गलीलाजितत्रैलोक्या चरणारविन्दललितेनाक्रान्तलोको हरि । बिभ्राणा मुखमिन्दु-सुन्दररुच चन्द्रात्मचक्षुर्दधन्स्थाने या स्वतनोरपश्यदधिका सा रुक्मिणी वोऽवतात् ॥ १९८ ॥

राधा

राधा पुनातु जगदच्युतदत्तचित्ता मन्थानमाकलयती दधिरिक्तपात्रे । यस्या स्तनस्तबकचञ्चुकलोलदृष्टिर्देवोऽपि दोहनधिया वृषभ दुदोह ॥ १९९ ॥ सुधाधाम्न कान्ति-स्तव वदनपङ्केरुहगुणैर्जितेव म्लानत्व व्रजति सहसा प्राण-दयिते । वदत्येव कान्ते दिवसविरहातङ्कचकिता तदङ्के सलग्ना तव दिशतु राधा प्रियशतम् ॥ २०० ॥

नन्दक

शान्दा मुद यच्छतु नन्दको व सोल्लासलक्ष्मीप्रतिबिम्ब-गर्भ । कुर्वन्नजस्र यमुनाप्रवाहसलीलराधास्मरण मुरारे ॥ २०१ ॥

वेणु

झेङ्कार स्मरकार्मुकस्य सुरतक्रीडापिकीनां रवो झङ्कारो रतिमञ्जरीमधुलिहां लीलाचकोरीध्वनि । तन्व्या कञ्चुलिकापसारणभुजाक्षेपस्खलत्कङ्कणक्वाण प्रेम तनोतु वो नववयोलास्याय वेणुस्वन ॥ २०२ ॥

बुद्ध

षट्चक्रे क्रमेमेभावनापरिगत हृत्पद्ममध्यस्थित सप्रश्यञ्छिवरूपिण लयवशादात्मानमभ्यागित । युष्माक मधुसूदनो भुवनपूर्णपुरी स भूयान्मुदे यस्तिष्ठत्कमलासने कृततरचिर्युद्धैकलिङ्गाकृति ॥ २०३ ॥ रेतोरक्तमयान्यमूनि मलिना विण्मूत्रपूर्णोदराण्यालोक्यैव कलेवराणि विगलत्ती-यार्द्ररूपाणि च । मायाजालैर्नियन्त्रितानि घृणया नो मील-यत्यक्षिणी निर्व्याजप्रणिधाननिश्चलमतिर्बुद्धः स बुद्धोऽस्तु व ॥ २०४ ॥ ध्यानव्याजमुपेत्य चिन्तयसि कामुन्मील्य चक्षु क्षण पश्यानङ्गशरातुर जनमिम त्रातापि नो रक्षसि । मिथ्याकारुणिकोऽसि निर्घृणतरस्त्वत्त कुतोऽन्य पुमान्क-श्च मारवधूभिरित्यभिहितो बुद्धो जिन पातु व ॥ २०५ ॥ आबाहृद्गतमण्डलाग्ररुचय सनद्धवक्ष स्थला सोष्मायो भगिनो विपक्षहृदयप्रोन्माथिन कर्कशा । उत्सृष्टाम्बरदृष्ट-निग्रहभरा यस्य स्मरामरा योधा वारवधूस्तनाश्च न ददु क्षोभ स वोऽव्याज्जिन ॥ २०६ ॥ पद्भ्यां पद्मासनं यो नयनयुगमिद न्यस्य नासाग्रदेशे धृत्वा मूर्तौ च शान्तौ समरसमिलितौ चन्द्रसूर्याख्यवातौ । पश्यन्नन्तर्विशुद्ध

१ हारम् २ हर्म्याग्रे ; पञ्चे.-म्रस व- ३ चक्रपाणे, पञ्चे.-कुण्डल- ४ त्रिषु ; ५,१.-कौ- ५ कृष्णपद्ये.-परि श्रवि. गान्धर्वे-परि छं- ६ मद- ७ विषु ; पञ्च.-भागर ८ हलपानपात्र ९ कन्दैर्न प्राप्ति-

१ दृष्ट २ मूलाधारस्वाधिष्ठानमणिपूरमनाहतविशुद्धिका ख्यानि षट् चक्राणि ३ परिपाटी ४ वासना ५ ध्यातम् ६ चिदैकरूपपदाय ७ शिव- ८ 'बद्धाया मध्यभागे तु संक्षेपो यत्र जानुना । पद्मासनमिति प्रोक्तं तदासनविपर्यये.' ९ हानी- १० ध्यानम् ११ संसारिणाम् १२ भक्ति १३ चेतसमाधिना १४ शरीरे

किमपि च परम ज्योतिराकारहीन सौख्याम्भोधौ निमग्न स दिशतु भवता ज्ञानबोध बुधोऽयम् ॥ २०७ ॥ कामेनाकृष्य चाप हृतपटुपटह वल्गुभिर्मारवीरैर्भ्रूभङ्गोत्क्षेपजृम्भाक्षितललितदृशा दिव्यनारीजनेन । सिद्धै प्रह्वोत्तमाङ्गै पुलकितवपुषा निस्मयाद्वासवेन ध्यायन्यो योगपीठादचलित इति व पातु दृष्टो मुनीन्द्र ॥ २०८ ॥ किं स्वाद्वास्वान्न मानोरमृतघनरससस्यन्दिन सन्ति पादा किं वा राकाशशाङ्को नहि तुहिनरुचि कुत्रचिन्निष्कलङ्क । साक्षाच्चिन्तामणि किं विपुलफलमणे सौकुमार्ये कुतस्त्य सदेहान्मुग्धधीमि प्रथममिति मुने पातु दृष्ट वपुर्व ॥ २०९ ॥

## कल्कि

उद्यत्करकरवाल शकतिमिरध्वसने महानिपुण । कल्किहरिर्व पायादपायत कलिनिशान्तोत्थ ॥ २१० ॥ यवनीनयनाम्बुधोरणीभिर्धरिणीनामपनीय तापवह्निम् । सुकृतद्रुमसेकमाचरन्त धृतकल्क प्रणमामि निर्विकल्पम् ॥ २११ ॥ प्रेङ्खद्वाजितरगदुन्मदगजमाहमगल्म भटव्यावल्गत्स्फुटपुण्डरीकनिलय डिण्डीरपिण्डावलिम् । म्लेच्छानीकमहार्णव सुविपुल सङ्ग्रामकल्पाम्बुधौ यश्चौर्वामिरिवामनर्दयतु व कल्पानि कल्की हरि ॥ २१२ ॥

---

## सूर्य:

खण्डितानेककौलिमञ्जुरञ्जनपण्डिता । मण्डिताखिलदिक्प्रान्ताश्चण्डांशो पान्तु भानव ॥ १ ॥ शुकतुण्डच्छवि सवितुश्चण्डरुचे पुण्डरीकवनबन्धो । मण्डलमुदित वन्दे कुण्डलमाखण्डलाशाया ॥ २ ॥ अतिनिततगगनसरणिप्रसरणपरिमुक्तविश्रमानन्द । मरुदुल्लासितसौरभकमलाकरहासकृद्रविर्जयति ॥ ३ ॥ प्राचीकुङ्कुमतिलक पूर्वाचलरोहणैकमाणिक्यम् । त्रिभुवनगृहैकदीप वन्दे लोकैकलोचन देवम् ॥ ४ ॥ कटुभिरपि कठोरचक्रनाकोल्करविरहज्वरशान्तिशीतवीर्यै । तिमिरहतमय महोभिरञ्जयति जगत्त्रयनौघमुष्णभानु ॥ ५ ॥ यद्बिम्बमम्बरमणेर्यदपा प्रसूतिर्नक्त निषिञ्चति यदग्निशिखासु भास । ज्योत्स्ना निशासु हिमधाम्नि च यन्मयूखा पूषा पुराणपुरुष स नमोऽस्तु तस्मै ॥ ६ ॥ यो रक्ततामतितरामतुल दधानो दिक्प्रौढदारपरिभोहनवासवास । योषिद्बुधीपतिविडम्बनभृत्स शश्वत्पायादपायसमुदायहरो रविर्न ॥ ७ ॥ ब्रह्माण्डसपुटकले वरमध्यवर्ति चैतन्यपिण्डमिव मण्डलमस्ति यस्य । आलोकितोऽपि दुरितानि निहन्ति यस्य मार्तण्डमादिपुरुष प्रणमामि नित्यम् ॥ ८ ॥ सिन्दूरस्पृहया स्पृशन्ति करिणा कुम्भस्थमाधोरणा भिल्ली पल्लवशङ्कया विचिनुते सान्द्रद्रुमा द्रोणिषु । कान्ता कुङ्कुमशङ्कया करतले मृद्नन्ति लग्न च यत्तत्तेज प्रथमोद्भव भ्रमकर सौर चिर पातु व ॥ ९ ॥ एकस्मिन्नयने भृश तपति य काले स दाहक्रमो येनातन्यत यत्प्रकाशसमयेनैषा पद दुर्लभम् । सा व्योमावयवस्य यन्न विदिता लोके गति शाश्वती श्रीसूर्ये सुरसेवितोऽपि हि महादेव स नस्त्रायताम् ॥ १० ॥ जम्भारातीभकुम्भोद्भवमिव दधत सान्द्रसिन्दूररेणु रक्तै सिक्ता इवौघैरुदयगिरितटीधातुधाराद्रवस्य । आयान्त्या तुल्यकाल कमलवनरुचेवारुणा वो विभूत्यै भूयासुर्भासयन्तो भुवनमभिनवा भानवो भानवीया ॥ ११ ॥ भक्तिप्रह्वाय दातु मुकुलपुटकुटीकोटरक्रोडलीना लक्ष्मीमाक्रष्टुकामा इव कमलवनोद्घाटन कुर्वते ये । कालाकारान्धकाराननपतितजगत्साध्वसध्वसकल्या कल्याण व क्रियासु किसलयरुचयस्ते करा भास्करस्य ॥ १२ ॥ साटोपव्योमहट्टोषितरजनियणिङ्नायकोन्मुक्ततारा मुक्ताहारापहारात्तरलखगरवप्रोत्थिताकीर्तिशान्त्यै । कर्षन्नम्भोजकुम्भोदरकुहरमहिर्निसरत्षट्पदालीकालव्याली करेणाकलयतु दिनकृत्कल्मषोन्मूलन व ॥ १३ ॥ चक्री चक्रारपङ्क्ति हरिरपि च हरीन्धूर्जटिर्धूर्ध्वजान्तानक्ष नक्षत्रनाथोऽरुणमपि वरुण कूबराग्र कुबेर । रह सङ्घ सुराणा जगदुपकृतये नित्ययुक्तस्य यस्य स्तौति प्रीतिप्रसन्नोऽन्वहमहिमरुचे सोऽवतात्स्यन्दनो व ॥ १४ ॥ किं छत्र किं नु रत्न तिलकमुत तथा कुण्डल कौस्तुभो वा चक्र वा वारिज वेत्यमरमुनतिभिर्यद्बलिद्विद्विदेहे । ऊर्ध्वे मौलौ ललाटे श्रवसि हृदि करे नाभिदेशे च दृष्ट पायात्तद्वोऽर्कबिम्ब च दनुजरिपुर्वर्धमान क्रमेण ॥ १५ ॥ शीर्णघ्राणाङ्घ्रिपाणीन्व्रणिभिरपघनैर्घर्घराव्यक्तघोषान्दीर्घाघ्रातानघौघै पुनरपि घटयत्येक उल्लाघयन्य । घर्मांशोस्तस्य वोऽन्तर्द्विगुणघनघृणानिघ्ननिर्विघ्नवृत्तेर्दत्तार्घा सिद्धसघैर्विदधतु घृणय शीघ्रमहोनिघातम् ॥ १६ ॥

## किरणा

करजालमपूर्वचेष्टित वस्तदभीष्टप्रदमस्तु तिग्मभास । क्रियते भवबन्धनाद्विमुक्ति प्रणतानामुपसेवितेन येन ॥ १७ ॥ युष्माकमम्बरमणे प्रथमे मयूखास्ते मङ्गल विदधतूदयराग-

---

१ फेनपिण्ड २ खण्डयतु ३ पापानि ४ नायिकाविशेषा ५ कमलम् ६ पूर्वदिश

१ इन्द्र २ क्रयविक्रयस्थानम् ३ विष्णु ४ कील्क- ५ इन्द्र- ६ अश्वान् ७ यानमुखम् ८ चक्र ९ युगधर १० वेग- ११ चूडारत्नम् १२ यतो विष्णोर्नाभिदेशे कमल वर्तते वामना- कृत्वा १४ कुष्ठरोगविशीर्णनासिकापादपाणीन् १५ क्षतविशिष्टै- १६ शरीरै १७ चिरकाल प्रसान् १८ सर्वस १९ सत्वकृता २० रश्मय २१ पापनाशम्

मान । कुर्वन्ति ये दिनसज्ञमहोत्सवेषु सिन्दूरपाटलमुखीरिव दिक्पुरध्रीः ॥ १८ ॥ सिन्दूरपणीन सीदत्स्पणघुन्वधूमूर्ध्नि ये सचरन्त प्रेक्ष्यन्ते दिक्षु शैला शिखरभुवि स्सत्पद्मरागाङ्कुरा ये । धुन्वते ध्वान्तधारा सह दुरितचयैर्दुरदृश्या मुदस्या पातु त्वा पद्मयोरकरणकिरणा पूष्णा पद्मयो ॥ १९ ॥

## तुरगा

अवतु न सवितुस्तुरगावली समतिलङ्घिततुङ्गपयोधरा । स्फुरितमध्यगतारुणनायका मैरकतैकलतेव नभश्रिय ॥ २० ॥

---

## चन्द्रः

पालय तमरविन्दवनानि क्षालयन्तमभितो भुवनानि । पालयन्तमथ कोकुमुद्धानि ज्योतिषा पतिमह मह्यामि ॥१ ॥

१ मेघा, पक्षे,-स्तनौ २ अरुणरूपो नायक सारथिर्यस्या, पक्षे,-अरुण मारवो नायको हारमध्यमणि ३ मरकतरंगमाणां हरितवर्णत्वादित्यर्थ

रविमावसते सता क्रियायै सुधया तर्पयते सुरान्पितॄंश्च । तमसां निशि मूर्च्छतां विहन्त्रे हरचूडानिहितात्मने नमस्ते ॥ २ ॥ सर्गानुपतिवारपारणमिलद्दाँधर्येन्द्रोद्भवश्रेआलीपीतयालुदीधितिसुधासारस्तुषारद्युति । पुष्पेष्वासनतप्रियापरिणयानन्दाभिषेकोत्सवे देवः सासहस्रधारकलशश्रीरस्तु नस्तुष्टये ॥ ३ ॥

---

## पृथिवी

स्वर्गौकोभिरयोनिवासिपुरुषारब्धातिशुद्धाध्वरस्वाहाकारवषट्क्रियोत्थममृत स्वादीय आदीयते । आम्नायप्रवणैरलङ्कृतिजुषेऽमुष्यै मनुष्यैः शुभैर्दिव्यक्षेत्रसरित्सनिनद्वपुषे देव्यै पृथिव्यै नम ॥ १ ॥

१ गिलनम् २ छिद्रकरणमाधनम् ३ दन्तदयानकृतविवरपरम्परा ४ पतनशीला ५ मदन ६ विवाह ७ देवै।

इति श्रीसुभाषितरत्नभाण्डागारे प्रथमं मङ्गलाचरणप्रकरणं समाप्तम्



# द्वितीयं सामान्यप्रकरणम्

## सुभाषितप्रशंसा

भाषासु मुख्या मधुरा दिव्या गीर्वाणभारती । तस्माद्धि काव्यं मधुरं तस्मादपि सुभाषितम् ॥ १ ॥ सुभाषितेन गीतेन युवतीनां च लीलया । मनो न भिद्यते यस्य स योगी ह्यथवा पशुः ॥ २ ॥ सुभाषितमयैर्द्रव्यैः संग्रहं न करोति यः । सोऽपि प्रस्तावयज्ञेषु कां प्रदास्यति दक्षिणाम् ॥ ३ ॥ संसारकटुवृक्षस्य द्वे फले ह्यमृतोपमे । सुभाषितरसास्वादः संगतिः सुजने जने ॥ ४ ॥ सुभाषितरसास्वादबद्धरोमाञ्चकञ्चुकाः । विनापि कामिनीसङ्गं कवयः सुखमासते ॥ ५ ॥ पृथिव्यां त्रीणि रत्नानि जलमन्नं सुभाषितम् । मूढैः पाषाणखण्डेषु रत्नसंज्ञा विधीयते ॥ ६ ॥ धर्मो यशो नयो दाक्ष्यं मनोहारि सुभाषितम् । इत्यादि गुणरत्नानां संग्रही नावसीदति ॥ ७ ॥ संगीतमपि साहित्यं सरस्वत्याः स्तनद्वयम् । एकमापातमधुरमन्यदालोचनामृतम् ॥ ८ ॥ शिशुर्वेत्ति पशुर्वेत्ति वेत्ति गानरसं फणी । साहित्यरसमाधुर्यं शंकरो वेत्ति वा न वा ॥ ९ ॥ द्राक्षा म्लानमुखी जाता शर्करा चाश्मतां गता । सुभाषितरसस्याग्रे सुधा भीता दिवं गता ॥ १० ॥ ससदि तदेव भूषणमुपकारकमवसरे धनं मुख्यम् । सूक्तं दधति सुवर्णं कल्याणमनर्घमिह धन्याः ॥ ११ ॥ कथमिह मनुष्यजन्मा संप्रविशति सदसि विबुधगमितायाम् । येन न सुभाषितामृतमाह्लादि निपीतमात्तृप्ते ॥ १२ ॥ अकलितशब्दालंकृतिरनुकूला स्खलितपदनिवेशापि । अभिसारिकेव रमयति सूक्तिः सोत्कर्षशृङ्गारा ॥ १३ ॥ आस्वादितदयिताधरसुधारसस्येव सूक्तयो मधुराः । अकलितरसालमुकुलो न कोकिलः कलमुदञ्चयति ॥ १४ ॥ अवसरपठितं सर्वं सुभाषितत्वं प्रयात्यसूक्तमपि । क्षुधि कदशनमपि नितरां भोक्तुः सम्पद्यते स्वादु ॥ १५ ॥ यस्य वक्त्रकुहरे सुभाषितं नास्ति नाप्यवसरे प्रजल्पति । आगतः सदसि धीमतामसौ लेप्यनिर्मित इवावभासते ॥ १६ ॥ सुभाषितं हारि विशत्यधो गलान्न दुर्जनस्यार्करिपोरिवामृतम् । तदेव धत्ते हृदयेन सज्जनो हरिर्महोरत्नमिवातिनिर्मलम् ॥ १७ ॥ नायं प्रयाति विकृतिं विरसो न यः स्यान्न क्षीयते बहुजनैर्नितरां निपीतः । जाड्यं निहन्ति रुचिमेति करोति तृप्तिं नूनं सुभाषितरसोऽन्यरसातिशायी ॥ १८ ॥ धन्या शुचीनि सुरभीणि गुणोम्भितानि वाग्वीरुधः स्वयदनोपवनोद्गतायाः । उच्चित्य सूक्तिकुसुमानि सतां विविक्तवर्णानि कर्णपुलिनेष्ववतंसयन्ति ॥ १९ ॥ किं हारैः किमु कङ्कणैः किमसमैः कर्णावतंसैरलं केयूरैर्मणिकुण्डलैरलमलं साडम्बरैरम्बरैः । पुंसामेकमखण्डितं पुनरिदं मन्यामहे मण्डनं यन्निष्पीडितपार्वणामृतकरस्यन्दोपमाः सूक्तयः ॥ २० ॥ खिन्नं चापि सुभाषितेन रमते स्वीयं मनः सर्वदा श्रुत्वान्यस्य सुभाषितं खलु मनः श्रोतुं पुनर्वाञ्छति । अज्ञाञ्ज्ञानवतोऽप्यनेन हि वशीकर्तुं समर्थो भवेत्कर्तव्यो हि सुभाषितस्य मनुजैरावश्यकः संग्रहः ॥ २१ ॥ सुव्याहृतानि धीराणां फलतः परिचिन्त्य यः । अध्यवसति कार्येषु चिरं यशसि तिष्ठति ॥ २२ ॥ सुव्याहृतानि सूक्तानि सुकृतानि ततस्ततः । संचिन्वन् धीर आसीत शिलाहारी शिलं यथा ॥ २३ ॥

१ प्रसङ्ग° २ न नश्यति ३ पाषाणताम् ४ काञ्चनम्, पक्षे,–बुधपदैर्युक्तम् ५ पण्डितपूर्णायां देवयुक्तायां च ६ न कलिता शब्दस्यालंकृतिर्यया अनुप्रासादिशब्दालंकृतिशून्येत्यर्थः, पक्षे,–अकलितः शब्दो यथैतादृशयलङ्कनिर्भूषणं यस्याः सशब्दभूषणत्वेऽन्यस्य ज्ञानं भविष्यतीति धियेति भावः ७ द्रुत रसप्रत्यायिका, पक्षे,–नायकचित्तानुकूल्यवती ८ कुपदानां भवनं यत्र, पक्षे,–स्थानादन्यत्र पतनं यथा स्यात्तथा चरणविन्यासो यस्याः ९ सुभाषितम्, पक्षे,–शोभनोक्तिमती १० उत्कृष्टशास्त्रिशृङ्गाररसवती, पक्षे,–अहमस्यायं ममेति रतिपरिपोषवती ११ मधुरम् १२ वदति

## विद्याप्रशंसा

अपूर्वः कोऽपि कोशोऽयं विद्यते तव भारति । व्ययतो वृद्धिमायाति क्षयमायाति संचयात् ॥ १ ॥ अनेकसंशयोच्छेदि परोक्षार्थस्य दर्शकम् । सर्वस्य लोचनं शास्त्रं यस्य नास्त्यन्ध एव सः ॥ २ ॥ सर्वद्रव्येषु विद्यैव द्रव्यमाहुरनुत्तमम् । अहार्यत्वादनर्घ्यत्वादक्षयत्वाच्च सर्वदा ॥ ३ ॥ दुर्नैर्न गोचरं याति दत्ता भवति विस्तृता । कल्पान्तेऽपि न या नश्येत्किमन्यद्विद्यया समम् ॥ ४ ॥ ज्ञातिभिर्वण्ट्यते नैव चोरेणापि न नीयते । दाने नैव क्षयं याति विद्यारत्न

१ बिले २ पङ्करचित ३ राहोः ४ कौस्तुभमणि ५ निवारत् ६ मान्द्यम् ७ अन्यरसानतिक्रम्य वर्तत इत्यर्थः ८ कर्णभूषणैः ९ वस्त्रादिभिः १० पूर्णं ११ किरणाः १२ नास्त्युत्तमं यस्मात् १३ विभज्यते

र्थिलक्षैरप्यपराङ्मुखचेतसम् । त्वा पराङ्मुखता निन्यु केवल परयोषित ॥ ५० ॥ तव निर्वर्णयद्वर्गे स्वर्णे वर्णयतो गिरा । त्वत्कोशगेहान्निर्गत्य तीर्थेषु वसति ध्रुवम् ॥ ५१ ॥ न समास समर्थस्य यस्तु व्याकरणस्य ते । विग्रहो नैव केनापि न पर सर्वनामभाक् ॥ ५२ ॥ अर्थिना कृपणा दृष्टिस्त्वन्मुखे पतिता सकृत् । तदवस्था पुनर्देव नान्यस्य मुखमीक्षते ॥ ५३ ॥ धैर्यलावण्यगाम्भीर्यप्रमुखैस्त्वमुदन्वत । गुणैस्तुल्योऽसि भेदस्तु वपुषैवेदृशेन ते ॥ ५४ ॥ अलौकिकमहालोकप्रकाशितजगत्त्रय । स्तूयते देव सद्वंशमुक्तारत्न न कैर्भवान् ॥ ५५ ॥ शासति त्वयि हे राजन्नखण्डावनिमण्डलम् । न मनागपि निश्चिन्ते मण्डले शत्रुमित्रयो ॥ ५६ ॥ मत्वा लोकमदातार सतोषे यै कृता मति । त्वयि राजनि ते राजन्न तया व्यवसायिन ॥ ५७ ॥ पद्मोदयदिनाधीश सदागतिसमीरण । भूभृदावलिदम्भोलिरेक एव भवान्भुवि ॥ ५८ ॥ सेव्यारीभरणोमा यमाराध्य विधुशेखरम् । संचारीभरणोऽभायस्ततस्त्व पृथिवीं जय ॥ ५९ ॥ देव त्वमेव पातालमाशाना त्व निबन्धनम् । त्व चामरमरुद्भूमिरेको लोकत्रयात्मक ॥ ६० ॥ जितेन्द्रियतया सम्यग्विद्यावृद्धनिषेविण । अतिगाढगुणस्यास्य नाब्जवद्भङ्गुरा गुणा ॥ ६१ ॥ अखण्डमण्डल श्रीमान्पश्यैष पृथिवीपति । न निशाकरवज्जातु कलावैकल्यमागत ॥ ६२ ॥ अरातिविक्रमालोकविकस्वरविलोचन । कृपाणोदग्रदोर्दण्ड स सहस्रायुधीयति ॥ ६३ ॥ कानने सरिदुद्देशे गिरीणामपि कन्दरे । पश्यन्त्यन्तकसंकाश त्वामेक रिपव पुर ॥ ६४ ॥ उद्दण्डे भुजदण्डे तव कोदण्डे परिस्फुरति । अरिमण्डलरविमण्डलरम्भाकुचमण्डलानि वेपन्ते ॥ ६५ ॥ भवतामहमिव बहवो मम तु भवानिव भवानेव । कुमुदिन्या कति न विधोर्विधुरिव विधुरेव कुमुदिन्या ॥ ६६ ॥ लब्धार्धचन्द्र ईश कृतकसभय च पौरुष विष्णो । अद्यापि नाभिजात केनोपमिमीमहे नृप भवन्तम् ॥ ६७ ॥ सरलप्रिय गुणाढ्य लम्बितमाल विचित्रतिलक च । भवमिव वपुस्तवैतत्कथमनन नृप जनस्यास्य ॥ ६८ ॥ बाणकरवीरदमनकशतपत्रकबन्धुजीवकुसुमानि । नृप विविधविटपरूपस्तथापि विटप कथ नासि ॥ ६९ ॥ स्तनयुगमश्रुस्नात समीपतरवर्ति हृदयशोकाग्ने । चरति विमुक्ताहार व्रतमिव भवतो रिपुस्त्रीणाम् ॥ ७० ॥ कल्पतरुकामदोग्ध्रीचिन्तामणिधनदशङ्खानाम् । रचितो रजोभरपयस्तेजश्वासान्तरोम्बरैरप ॥ ७१ ॥ तिग्मरुचिरप्रतापो विधुरनिशाकृद्विभो मधुरलील । मतिमानतत्त्ववृत्ति प्रतिपदपक्षाग्रणीर्विभाति भवान् ॥ ७२ ॥ शनिरशनिश्च तमुच्चैर्निहन्ति कुप्यसि नरेन्द्र यस्मै त्वम् । यत्र प्रसीदसि पुन [redacted] मात्युदारोऽनुदारश्च ॥ ७३ ॥ क्षणदासावक्षणदा वनमवनं व्यसनमव्यसनम् । बत वीर तव द्विषता पराङ्मुखे त्वयि पराङ्मुख सर्वम् ॥ ७४ ॥ प्रधनाध्वनि धीरधनुर्ध्वनिभृति विधुरैरयोधि तव दिवसम् । दिवसेन तु नरप भवानयुद्ध विधिसिद्धसाधुवादपदम् ॥ ७५ ॥ गिरयोऽप्यनुन्नतियुजो मरुदप्यचलोऽब्धयोऽप्यगम्भीरा । विश्वभराप्यतिलघुर्नरनाथ तवान्तिके नियतम् ॥ ७६ ॥ समदमतगजमदजलनिस्यन्दतरङ्गिणीपरिष्वङ्गात् । क्षितितिलक त्वयि तटजुषि शंकरचूडापगापि कालिन्दी ॥ ७७ ॥ विदलितसकलारिकुल तव बलमिदमभयदाशु विमल च । प्रखलमुखानि नराधिप मलिनानि च तानि जातानि ॥ ७८ ॥ पल्लवत कल्पतरोरेष विशेष करस्य ते वीर । भूषयति कर्णमेक परस्तु कर्णौ तिरस्कुरुते ॥ ७९ ॥ हरवन्न विषमदृष्टिर्हरिवन्न विभो विधूतविततवृष । रविवन्न चातिदु सहकरतापितभू कदाचिदसि ॥ ८० ॥ स्तनयुगमुक्ताभरणा

१ मित्र ‘घर्ले २ सतीनारीर्बिभर्ति पालयतीति सत्रारीभरणा तादृशीमुमां भाति पत्नीत्वेन प्राप्नोति यस्ताम् ३ सप्त भवसप्ताभरीणामिभा हस्तिनो यस्मात्तादृशो रणो यस्य तादृशोऽभायोऽनपद ४ अलमत्यर्थे पाता पालक ; पक्षे,–पाताललोक ५ आशानामभिलाषाणां निबन्धन मूलम्, पक्षे,–आशानां दिशा निबन्धन ज्ञापक, भूलोक इत्यर्थ ६ चामरमरुता चामरीयवायूनां भूमिराश्रय चामरवीज्यमानत्वात्, पक्षे,–अमराणां मरुद्गणानां च भूमिराश्रय, स्वर्गलोक इत्यर्थ ७ मण्डल राज्य बिम्ब च ८ कलावैदग्ध्य चन्द्रषोडशांशश्च ९ चन्द्रकला; पक्षे,–गलहस्त १० कृतकसभयम्, पक्षे, –कृत–कंस–भयम् ११ न–अभिजात कुलीन, पक्षे,–नाभिजात–

१ सरला वृक्षविशेषा प्रियङ्गवश्चैतेषां समाहारस्तेनाढ्य पूर्णम्, पक्षे,–सरलं च तत्प्रियं इष्ट च गुणैर्गौरवशत्वादिभिर्युक्तम् २ लम्बितमाला यस्मिस्तत्, पक्षे,–लम्बिमाला माल्य यस्य ३ विचित्रा नानाविधास्तिलका वृक्षविशेषा यस्मिंस्तत्; पक्षे,–विचित्रो विचित्रवर्णस्तिलक कस्तूरीकुङ्कुमादिकृतो यस्मिंस्तत् ४ विटा पालयतीति स ५ कुबेर ६ विधिविशेष ७ परागसमूह ८ शब्दाभ्यन्तरप्रकाशम् ९ एष राजा कल्पवृक्षादीनां क्रमेण रजोभरादिभिर्भूत्वे रचित इत्यन्वय १० विधुराणां शत्रूणां निशेव निशाकरण शल्कर्ता ११ मतिर्वस्तुतत्त्वावधारणक्षमा बुद्धि, मान प्रमाण ताभ्यां तत्त्वे याथार्थ्ये वृत्तिरनुसरण यस्य स १२ प्रतिपद प्रतिस्थान पक्षाणामात्मीयानामग्रणीरग्रसर १३ शनिग्रह १४ वज्रम् १५ महान् १६ अनुगता दारा वनिता यस्य वशीकृतवनित इत्यर्थ [redacted] अनुल्बनदा १८ रक्षकम् शत्रूणां पलायनस्थानत्वात् १९ पत नृत्यादि २० अविस्तीर्णम् दुःखदशायां तदविस्तारात् २१ राधेयम् दानातिशयेनेत्यर्थ २२ असमदृष्टि, पक्षे,–त्रिलोचन २३ छद्मनम्, पक्षे,–वृषासुर २४ रश्मिप्रासभाग, पक्षे,–किरण

कण्टककलिताङ्गयष्ट्यो देव। त्वयि कुपितेऽपि प्रागिव विश्वस्तास्ते रिपुस्त्रियो जाता ॥ ८१ ॥ सततमुसलासङ्गाद्बहुतरगृहकर्मघटनया नृपते। द्विजपत्नीनां कठिनाः सति भवति कराः सरोजसुकुमाराः ॥ ८२ ॥ कमलेव मतिर्मतिरिव कमला तनुरिव विभा विभेव तनुः। धरणीव धृतिर्धृतिरिव धरणी सततं विभाति यस्य तव ॥ ८३ ॥ रत्नसानुशिखराङ्गणफुल्लकल्पपादपतलेषु निषण्णाः। उद्गृणन्ति नृपहंस सुवर्णे त्वद्यशः प्रसरनिर्जरामाः ॥ ८४ ॥ गाढकान्तदशनक्षतव्यथासङ्कटादरिवधूजनस्य यः। ओष्ठविद्रुमदलान्यमोचयन्निर्दशन्युधि रुषा निजाधरम् ॥ ८५ ॥ बलमार्तभयोपशान्तये विदुषां संमतये बहुश्रुतम्। वसु तस्य न केवलं विभोर्गुणवत्तापि परप्रयोजनम् ॥ ८६ ॥ तारका यान्ति न सन्ति मादृशा मादृशस्तु भवदेकजीविनः। अम्बुदस्य कति वा न चातकाश्चातकस्य पुनरेक एव सः ॥ ८७ ॥ निखिलेषु गुणेषु चिन्तता ते मनसो वैभवमद्भुतं तवैव। न च ते परतः प्रमाणभावस्तदपि न्यायनिविष्टतातिचित्रम् ॥ ८८ ॥ स्फुरदद्भुतरूपमुत्प्रतापज्वलनं त्वां सृजतानवद्यविधिम्। विधिना ससृजे नवो मनोभूर्भुवि सत्यं सविता बृहस्पतिश्च ॥ ८९ ॥ कलुषं च तवाहितेष्वकस्मात्सितपङ्केरुहसोदरश्रि चक्षुः। पतितं च महीपतीन्द्र तेषां वपुषि प्रस्फुटमापदां कटाक्षैः ॥ ९० ॥ गुणभेदविदग्रिमप्रसङ्गे व्यवधानादनुपस्थितं पुरस्तात्। अपि वाजिनमानशेषमिष्टौ घटयन्वाजिमिरध्वरे विधिज्ञे ॥ ९१ ॥ यदि वै मनसि प्रशान्तिरुर्वी कुरु कल्पद्रुमदानकौशलम्। न भवेदिति वा वद स्फुटं कलिवर्णे प्रतियामि मन्दिरम् ॥ ९२ ॥ नानन्वयस्ते न च ते विरोधोऽल्पकारकोटौ तव नोपमापि। क्षितीश नो ते विषमं न किंचित्साहित्यसौहित्यनिधिस्त्वयापि ॥ ९३ ॥ अविरलकरवालकम्पनैर्भ्रुकुटीतर्जनगर्जनैर्मुहुः। ददृशे तव वैरिणां मदः स गतः क्वापि तवेक्षणे क्षणात् ॥ ९४ ॥ तवाहवे साहसकर्मशर्मणः करं कृपाणान्तिकमानिनीषतः। भटाः परेषां विशरारुतामगुर्दधत्यवाते स्थिरतां हि पांसवः ॥ ९५ ॥ निशापते निस्सरतो न वस्तु जानामि जानन्नपि ते गुणौघान्। यस्यैव योऽस्मि प्रथमानकीर्तेः स एव तद्वानिति निर्विरूढिः ॥ ९६ ॥ यशोदयामण्डिततरां तदेहो बाल्येऽपि गोपालजनस्य नेता। गोमण्डलं पासि बलेन युक्तः कथं न राजन्पुरुषोत्तमोऽसि ॥ ९७ ॥ नवनभूः क्षत्रकुलप्रसूतेर्युक्तो न भोगी खलु भोगभाजः। सुजातरूपोऽपि न याति यस्य समानतां काञ्चनकाश्यपादिः ॥ ९८ ॥ अखण्डिता शक्तिरथोपमानं न स्तीर्णं न च व्याप्तिरस्मि। अदृष्टसंदेहविपर्ययस्य कोऽन्यस्तव न्यायनये निवेशः ॥ ९९ ॥ स्वतःप्रकाशो मनसो महत्त्वं धर्मेषु शक्तिर्न तथान्यथा धीः। भूपालगोपालपदैकभक्तेरन्यैव नैयायिकता तवेयम् ॥ १०० ॥ यस्यैष सपुलकगयामिनीषु प्रोतप्रतिक्ष्मापतिमौलिरत्नः। गृहीतदीपा इव भिन्दते स्म खड्गान्धकारे रिपुचक्रवालम् ॥ १०१ ॥ लब्ध्वा यदन्तःपुरसुन्दरीणां लावण्यनिःस्यन्दमुपान्तभागाम्। गृहीतसारस्त्रिदशैः पयोधिः पीयूषसदर्शनसौख्यमाप ॥ १०२ ॥ यदि त्रिलोकी गणनापरा स्यात्तस्याः समाप्तिर्यदि नायुषः स्यात्। पारे परार्धं गणितं यदि स्याद्गणेयनिःशेषगुणोऽपि स स्यात् ॥ १०३ ॥ एतद्यशःक्षीरधिपूरगाहे पतत्यगाधे वचनं कवीनाम्। एतद्गुणानां गणनाङ्कपातप्रत्यर्थिकीर्तीः खटिकाः क्षिणोति ॥ १०४ ॥ देवाधिपो वा भुजगाधिपो वा नराधिपो वा यदि हैहयः स्याम्। सदर्शनं ते गुणकीर्तनं ते सेवाञ्जलिं ते तदहं विदध्याम् ॥१०५॥ अत्यादराद्ध्ययनं द्विजानामर्थापलब्ध्या फलवद्विधाय। क्रतूनतुच्छानपि तु त्वयैषा मीमांसकाधिकृतिः प्रसिद्धा ॥ १०६ ॥ तुच्छातराध्यासमसनिकृष्टमध्यक्षमत्यन्तमनिच्छतस्ते। अख्यातिसख्यानुगतद्विषश्च ख्याति स्थिताऽनिर्वचनीयरूपा ॥ १०७ ॥ अत्यार्यमङ्गीकृतयारिपाणौ विशङ्कमानास्तव दाननीरम्। परस्परं दीनमुखा न के वा देवाः सुमेरुं शुशुचुः स्वभूमिम् ॥ १०८ ॥ तवामतो वीर महीमहेन्द्र मन्दं गजाः शृङ्खलिनो विभान्ति। आवासदानादरिभूपतीनामाशान्तशीला इव सापराधाः ॥ १०९ ॥ कामं नृपाः सन्ति सहस्रशोऽन्ये राजन्वतीमाहुरनेन भूमिम्। नक्षत्रताराग्रहसंकुलापि ज्योतिष्मती चन्द्रमसैव रात्रिः ॥ ११० ॥ दारिद्र्यदायादगणाधमेन दीनो द्विजोऽर्थ्यर्णपदातिसात्कृतः। जागर्ति नाथे त्वयि भो द्विजानां निधेहि तथैव सुखं भजे नृप ॥ १११ ॥ कमलभूतनया वदनाम्बुजे वसतु ते कमला करपल्लवे। वपुषि ते रमतां कमलाङ्गजः प्रतिदिनं हृदये कमलापतिः ॥ ११२ ॥ उदेति पूर्वं कुसुमं ततः फलं घनोदयः प्राक्तदनन्तरं पयः। निमित्तनैमित्तिकयोरयं विधिस्तव प्रसादस्य पुरस्तु संपदः ॥ ११३ ॥ अनेन सर्वार्थिकृतार्थता कृता हतार्थिनौ कामगवीसुरद्रुमौ। मिथः पयःसेचनपल्लवाशने प्रदाय दानव्यसनं समामुतः ॥ ११४ ॥ मयि स्थितिर्नम्रतयैव लभ्यते दिगेव तु स्तब्धतया निरुध्यते। इतीव चापं दधदाशुगं क्षिपन्नयं नयः सम्यगुपादिशद्द्विषाम् ॥ ११५ ॥ नृप कराभ्यामुदनोल्यचिजे नृपानयं यापततं पदद्वये। तदीयचूडाकुरविन्दरश्मिभिः स्फुटेयमेतत्करपादरञ्जना ॥११६॥ इदं नृपार्थिभिरुह्यतोऽर्थिभिर्मणिप्ररोहेण विवृष्य

रोहण । कियद्दिनैरम्बरमावरिष्यते मुधा मुनिर्विन्ध्यमरुद्ध भूधरम् ॥ ११७ ॥ कृत च गर्वाभिमुख मनस्त्वया किमन्य देव निहताश्च नो द्विष । तमासि तिष्ठन्ति हि तावदशुमान्न यावदायात्युदयाद्रिमौलिताम् ॥ ११८ ॥ अनेन पर्यासयता श्रुबिन्दून्मुक्ताफलस्थूलतमान्स्तनेषु । प्रत्यर्पिता शत्रुविलासिनीनामाक्षेपसूत्रेण विनैव हारा ॥ ११९ ॥ अधीतिबोधाचरणप्रचारणैर्दशाश्चतस्र प्रणयन्नुपाधिभि । चतुर्दशत्व कृतवान्कुत स्वय न वेद्मि विद्यासु चतुर्दशस्स्वयम् ॥ १२० ॥ अमुष्य विद्या रसनाग्रनर्तकी त्रयीव नीताङ्गगुणेन विस्तरम् । अगाहताष्टादशता जिगीषया नवद्वयद्वीपपृथग्जयश्रियाम् ॥ १२१ ॥ दिगीशवृन्दाशविभूतिरीशिता दिशा स कामप्रसरावरोधिनीम् । बभार शास्त्राणि दृश द्वयाधिका निजत्रिनेत्रावतरत्वबोधिकाम् ॥ १२२ ॥ पदैश्चतुर्भि सुकृते स्थिरीकृते कृतेऽमुना के न तप प्रपेदिरे । भुव यदेकाङ्घ्रिक निष्ठया स्पृशन्दधावधर्मोऽपि कृशस्तपस्विताम् ॥ १२३ ॥ स्फुरद्धनुर्निस्वनतद्धनाशुगप्रगल्भवृष्टिव्ययितस्य सगरे । निजस्य तेज शिखिन पर शता वितेनुरङ्गारमिवायश परे ॥ १२४ ॥ अनल्पदग्धारिपुरानलोज्ज्वलैर्निजप्रतापैर्वलय ज्वलद्भुव । प्रदक्षिणीकृत्य जयाय सृष्टया रराज नीराजनया स राजघ ॥ १२५ ॥ सिताशुवर्णैर्वयति स्म तद्गुणैर्महासिवेम्न सहस्त्वरी बहुम । दिगङ्गनाङ्गाभरण रणाङ्गणे यश पट तद्भटचातुरीतुरी ॥ १२६ ॥ प्रतीपभूपैरिव किं ततो भिया विरुद्धधर्मैरपि भेत्तृतोज्झिता । अमित्रजिन्मित्रजिदोजसा स यद्विचारदृक्चारदृगप्यवर्तत ॥ १२७ ॥ अय दरिद्रो भवतेति वैधसीं लिपिं ललाटेऽर्थिजनस्य जाग्रतीम् । मृषा न चक्रेऽल्पितकल्पपादप प्रणीय दारिद्र्यदरिद्रता नृप ॥ १२८ ॥ विभज्य मेरुर्न यदर्थिसात्कृतो न सिन्धुरुत्सर्गजलव्ययैर्मरु । अमानि तत्तेन निजायशोयुग द्विफालबद्धाश्चिकुरा शिर स्थितम् ॥ १२९ ॥ अजस्रमभ्यासमुपेयुषा सम मुदैव देव कविना बुधेन च । दधौ पटीयान्समय नयत्रय दिनेश्वरश्रीरुदय दिने दिने ॥ १३० ॥ अधोविधानात्कमलप्रवालयो शिर सु दानादखिलक्ष्माभुजाम् । पुरेदमूर्ध्वे भवतीति वेधसा पद किमस्याङ्कितमूर्ध्वरेखया ॥ १३१ ॥ सदुत्तस देवादय कोऽपि दीनो ऋणार्ध्वौ विलीनो विहीनो गुणेन । भवत्सनिधिं सनिधिं प्राप्य पीनो बभूवाशु,मीनो यथा नीरपूरम् ॥ १३२ ॥ कति नो विषया निभालिता कति वा भूमिभुजो न शीलिता । धरणीधर तावका गुणानवधार्याजगण गुरु लघुम् ॥ १३३ ॥ तत्र नित्यमुत्सवपरम्परा भवत्विश

त्वमितश्चमुपकारसादर । निजकीर्तिकान्तिकलितोज्ज्वले जगत्यथ सत्सुनादिभिरल सुख भज ॥ १३४ ॥ अभ्युद्धृता वसुमती दलित रिपूर क्रोडीकृता बलवता बलिराजलक्ष्मी । एकत्र जन्मनि कृत यदनेन राज्ञा जन्मत्रये तदकरोत्पुरुष पुराण ॥ १३५ ॥ एकस्त्रिधा वससि चेतसि चित्रमत्र देव द्विषा च विदुषा च मृगीदृशा च । ताप च समदरस च रति च पुष्णन्शौर्योष्मणा च विनयेन च लीलया च ॥ १३६ ॥ शक्ति प्रमापयति वीर तवोपमान शामान्यमाप्तवचनेषु परैव जातिः । जातौ गुणा गुणगणाश्रयिणो विशेषा वैशेषिक किमपि दर्शनमद्भुत ते ॥ १३७ ॥ किं कारण सुकविराज मृगा यदेते व्योमोत्पतन्ति विलिखन्ति भुव वराहा । देव त्वदस्त्रचकिता श्रयितु स्वजातिमेके मृगाङ्कमृगमादिवराहमन्ये ॥ १३८ ॥ सभाव्यमिष्टभुवनाभयदानपुण्यसमारमस्य वपुरत्र हि विस्फुरन्ति । लक्ष्मीश्च सात्त्विकगुणज्वलित च तेजो धर्मश्च मानविजयौ च पराकमश्च ॥ १३९ ॥ प्रत्यक्षरस्रुतसुधारसनिर्विषाभिराशीर्भिरभ्यधिकभूतिमभोगभाज । गायन्ति कञ्चुकविनिह्नुतरोमहर्षस्वेदोर्मयस्तव गुणानुरगेन्द्रकन्या ॥ १४० ॥ भद्रात्मनो दुरधिरोहतनोर्विशालवंशोन्नते कृतशिलीमुखसग्रहस्य । यस्यानुपप्लुतगते परवारणस्य दानाम्बुसेकसुभग सतत करोऽभूत् ॥ १४१ ॥ साक कुरगकदृशा मधुपानलीला कर्तु सुहृद्भिरपि वैरिणि ते प्रवृत्ते । अन्याभिधायि तव नाम विभो गृहीत केनापि तत्र विषमामकरोदवस्थाम् ॥ १४२ ॥ अैत्यायतैर्नियमकारिभिरुद्धताना दिव्यै प्रभाभिरनपायमयैरुपायै । शौरिर्भुजैरिव चतुर्भिरद सदा यो लक्ष्मीविलासभवनैर्भुवन बभार ॥ १४३ ॥ नानाविधप्रहरणैर्नृप सप्रहारे स्वीकृत्य दारुणनिनादवत प्रहारान् । दृप्तारिवीरविसरेण वसुधरेय निर्विप्रलम्भपरिलम्भविधिर्वितीर्णा ॥ १४४ ॥ अन्त पुरीयसि रणेषु सुतीयसि त्व पौर जन तव सदा रमणीयते श्री । दृष्ट प्रियाभिरमृतद्युतिदर्शमिन्द्रसचारमत्र भुवि सचरसि क्षितीश ॥ १४५ ॥ राजन्विभाति भवतश्चरितानि तानि इन्दोर्द्युतिं दधति यानि रसातलेऽन्त । धीदोर्बले अतितते उचितानुवृत्ती आतन्वती विजयसपदमेत्य भात ॥ १४६ ॥ पौर सुतीयति जन समरान्तरेऽस्मान्न्त पुरीयति विचित्रचरित्रचक्षु । नारीयते समरसीम्नि

१ राजपक्षे-भद्रशिलीमुखवारणदानकरशब्द यथाक्रम शोभनबाणनिवारकवितरणहस्तबोधका, हस्तिपक्षे तु-भद्रजातिभ्रमरहस्तिमदचण्डादण्डबोधका २ हस्तिमदजल ३ उपायानां सततानुध्यानमेवायतत्व भुजानामाजानुलम्बितत्वम् ४ उद्धतानां जनानाम्, पक्षे,-असुराणाम् ५ सामदानविधिभेदरूपै, पक्षे,-चतुर्भि

कृपाणपाणेरालोक्य तस्स चरितानि सपत्नसेना ॥ १४७ ॥ दोर्भ्यां तितीर्षति तरङ्गवतीभुजङ्गमादातुमिच्छति करे हरिणाङ्कबिम्बम् । मेरुं लिलङ्घयिषति ध्रुवमेष देव यस्ते गुणान्गदितुमुद्यममादधाति ॥ १४८ ॥ हिमशिशिरवसन्तग्रीष्मवर्षाशरत्सु स्तनजघनघनाम्भोहर्म्यगोक्षीरपानैः । सुखमनुभव राजंस्त्वद्द्विषो यान्तु नाशं दिवसकमलजालज्वालशर्वरीरेणुपङ्के ॥ १४९ ॥ विदधतु धरणीशा दानमुच्चैर्धराया प्रभवतु सुजनस्त्वं रक्ष पुण्यशील । निजपरमतिहीन केवलं सारसदीनरसनमिह नृप धुलीन कार्यकर्ता विभासि ॥ १५० ॥ कवीनां सतापो भ्रमणमभितो दुर्गतिरिति त्रयाणां पञ्चत्व रचयसि न तच्चित्रमधिकम् । चतुर्णां वेदानां व्यरचि नवता वीर भवता द्विषत्सेनालीनामयुतमपि लक्षं त्वमकृथाः ॥ १५१ ॥ समाजे सम्राजां सदसि विदुषां धाम्नि धनिनां निकाये नीचानामपि च तरुणीनां परिषदि । वयं यत्रैव स्म क्षणमतिथयस्तत्र शृणुमः स्फुरद्रोमोद्भेदां सुभग भवतः पौरुषकथाम् ॥ १५२ ॥ न लोपो वर्णानां न खलु परतः प्रत्ययविधिर्निपातो नास्त्येव क्वचिदपि न भङ्गः प्रकृतयः । गुणो वा वृद्धिर्वा सततमुपकाराय जगतां मुनेर्दाक्षीपुत्रादपि तव समर्थः पदविधिः ॥ १५३ ॥ न मिथ्यावादस्ते न च विगुणचर्चास्वभिरतिर्न वा वाच्यं किंचिद्वचसि न मनाग्व्यायिनि मतिः । तथाप्येतच्चित्रं यदसि जगतीजानिरधुना त्वमेवैको लोके निगमपरमार्गार्थनिपुणः ॥ १५४ ॥ चकोराणां चन्द्रः कुसुमसमयः काननभुवां सरोजानां भानुः कुवलयकदम्बं मधुलिहाम् । मयूराणां मेघः प्रथयति यथा चेतसि सुखं तथास्माकं प्रीतिं जनयति तवालोकनमिदम् ॥ १५५ ॥ अदातारं दातृप्रवरमनयं निश्चविनयं विरूपं रूपाढ्यं विगतजयिनं विश्वजयिनम् । अकुल्यं कुल्यं त्वामहमवदमाशापरवशान्मृषावादैस्तुष्टिस्त्वयि खलु मृषावादिनि मयि ॥ १५६ ॥ यशःस्तोमानुच्चैरपचिनु चकोरप्रणयिनीरसज्ञाशाण्डिल्यच्छिद्रुग्रशिधामभ्रमकरान् । अपि त्वत्तेजोभिस्तमसि शमिते रक्षति दिशामसौ यानामैत्रीं नमसि नितरामम्बरमणिः ॥ १५७ ॥ सुराणां पातासौ स पुनरतिपुण्यैकहृदयो महस्तस्यास्थाने गुरुरुचितमार्गे स निरतः । करस्तस्यात्यर्थं वहति शतकोटिं प्रणयिनां स सर्वस्व दाता तृणमिव सुरेशं विजयते ॥ १५८ ॥ मनोभूर्मुग्धासु क्षिपति यदि बाणावलिमसौ कथं ताभिः क्षिप्तास्त्वयि नयनविक्षेपविशिखाः । अथ ज्ञातं भूप शृणु सुभग चन्द्रास्तनलिनीनवक्रीडाहंसं स्मरमिव विदुस्त्वां मृगदृशः ॥ १५९ ॥ यशश्चन्द्रैरुच्चैःसुकृतनरकल्पद्रुमकरैः परं लक्ष्मीगर्भैर्द्विरदहयरत्नादिफलदैः । निजैर्दानाम्भोभिर्नियततुलितक्षीरजलधिश्चिरं जीयाज्जीयादधिधरणि सोऽयं नरपतिः ॥ १६० ॥ अयं मार्तण्डः किं स खलु तुरगैः सप्तभिरितः कृशानुः किं सर्वाः प्रसरति दिशो नैष नियतम् । कृतान्तः किं साक्षान्महिषवहनोऽसाविति चिरं समालोक्याजौ त्वां विदधति विकल्पान्प्रतिभटाः ॥ १६१ ॥ तुलाधारो धाता वहति वसुधां शूर्पदर्शी फणीशः स्यात्सूत्रं कनकशिखरी मानपलिका । तुलादण्डः सत्यं यदि भवति दामोदरगदा तथाप्येषोऽशक्यस्तव गुणसमूहस्तुलयितुम् ॥ १६२ ॥ न तूणादुद्धारे न गुणघटने नैं श्रुतिशिखसमाकृष्टौ दृष्टिर्न वियति न लक्ष्ये न च भुवि । नृणां द्रष्टे देव क्वचन विशिखान्किंतु पतितद्विपद्वक्षोरभेरनुमितिरमूनगोचरयति ॥ १६३ ॥ अमुष्योर्वीभर्तुः प्रसृमरचमूसिन्धुरभवैरवैमि प्रारब्धे वमथुभिरवश्यायसमये । न कम्पन्तामन्तः प्रतिनृपभटा म्लायतु न तद्वधूवक्त्राम्भोजं भवतु न स तेषां कुदिवसः ॥ १६४ ॥ यशःपूरं दूरं तनु सुतनुनेत्रोत्पलवनीतमस्त्वं द्राचन्द्रातपः तप सहस्राणि शरदाम् । इयं चास्तां युष्मद्गुणकथनपीयूषपटलश्रितोत्सङ्गा नन्दत्सुरनरभुजङ्गा त्रिजगती ॥ १६५ ॥ स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः प्रतिदिनमथवा ते वृत्तिरेवंविधैव । अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं शमयति परितापं छायया संश्रितानाम् ॥ १६६ ॥ नियमयसि कुमार्गप्रस्थितानात्तदण्डः प्रशमयसि विवादं कल्पसे रक्षणाय । अतनुषु विभवेषु ज्ञातयः सन्तु नाम त्वयि तु परिसमाप्तं बन्धुकृत्यं प्रजानाम् ॥ १६७ ॥ अभिमतफलदाता त्वं च कल्पद्रुमश्च प्रकटमिह विशेषं क्वचनोदाहराम । कथमिव मधुरोक्तिप्रेमसमानमिश्रं तुलयति सुरशाखी देव दानं त्वदीयम् ॥ १६८ ॥ अकाण्डधृतमानसव्यवसितोत्सवैः सारसैरकाण्डपटुताण्डवैरपि शिखण्डिनां मण्डलैः । दिशः समवलोकिताः सरसनिर्भरप्रोल्लसद्भवत्पृथुवरूथिनीरजनिभूरजःश्यामलाः ॥ १६९ ॥ सहस्रकरपूरणात्त्रिखिलजन्तुनभाम्बुजप्रकाशकरणादयं प्रबलवैरितेजोवधात् । दरिद्रतिमिरोद्धतेरखिलभूपचूडामणिर्जगन्मणिरहर्मणिर्जगदिदं च धत्तः समम् ॥ १७० ॥ यशःकरणधोरणीतुलितरोहिणीवल्लभ त्वया क्षणमुदीक्ष्यते जगति यो दरिद्रो जनः । पयोधरमहीधरे नटति तस्य वामभ्रुवा रणत्कनककिङ्किणीकलरवेण देव स्मरः ॥ १७१ ॥ यम प्रतिमहीभृतां हुतवहोऽसि तद्भीरुतां सतां खलु युधिष्ठिरो धनपनिर्धनाकाङ्क्षिणाम् । गृहं शरणमिच्छतां कुलिशकोटिभि-

१ स्पर्शस्यास्मत्; परे.-स्तम्बम् २ पाणिने- ३ मवेष

१ परिमाणपाभताम् २ परिमाणपापाण ३ संधाने ४ आवर्णोत्तम् ५ बाणान् ६ प्रसारिण ७ स्वशरीरे ८ नीहारकाले

निर्मितं त्वमेक इह भूतले बहुविधो विधाना कृत ॥ १७२ ॥ आलोकान्तप्रतिहततमोवृत्तिरासां प्रजानां तुल्योद्योगस्तव च सवितुश्चाधिकारो मतो न । निष्ठत्येकः क्षणमधिपतिर्ज्योतिषां व्योममध्ये षष्ठे काले त्वमपि लभसे देव विश्रान्तिमह्नः ॥ १७३ ॥ अध्याक्रान्ता वसतिरमुनाप्याश्रमे सर्वभोग्ये रक्षायोगादयमपि तपः प्रत्यहं संचिनोति । अस्यापि द्यां स्पृशति वशिनश्चारणद्वन्द्वगीतः पुण्यः शब्दो मुनिरिति मुहुः केवलं राजपूर्वः ॥ १७४ ॥ नैतच्चित्रं यदयमुदधिश्यामसीमां धरित्रीमेकः कृत्स्नां नगरपरिघप्रांशुबाहुर्भुनक्ति । आशंसन्ते समितिषु सुराः सक्तवैरा हि दैत्यैरस्याधिज्ये धनुषि विजयं पौरुहूते च वज्रे ॥ १७५ ॥ नातु लोकानिव परिणतः कायवानस्त्रवेदः क्षात्रो धर्मः श्रित इव तनुं ब्रह्मकोशस्य गुप्त्यै । सामर्थ्यानामिव समुदयः संचयो वा गुणानामाविर्भूय स्थित इव जगत्पुण्यनिर्माणराशिः ॥ १७६ ॥ हेषन्ते यञ्जितजलधरध्यानमेते तुरंगा भूमिं पादैर्यदपि च मुहुर्दक्षिणैरालिखन्ति । यानैरस्तुल्य यदपि चलनाद्वालवेल्यैर्जयन्ति त्वद्दोर्दण्डद्वितयवशगा तत्समग्रा जयश्रीः ॥ १७७ ॥ दृष्टः साक्षादसुरविजयी नाकिनां चक्रवर्ती भाग्यो न्यायं कथयति यथा वारुणी दण्डनीतिः । पातालेन्द्रादहिभयमथास्त्येव नित्यानुषक्तं तत्र पुण्यैरजनि भवता वीर राजन्वती भूः ॥ १७८ ॥ यत्कीर्त्या धवलीकृतं त्रिभुवनं मूर्त्या जगन्मोहितं भक्त्येशः परितोषितः सुचरितैरानन्दिताः सज्जनाः । पूर्णाशा बहवः कृता वितरणैर्येन त्वया याचकास्तस्मै सद्गुणाश्रयाय भवते दीर्घायुराशास्महे ॥ १७९ ॥ दाने कल्पतरुर्नये सुरगुरुः काव्ये कविस्तेजसि प्रौढग्रीष्मरविर्धने धनपतिः सत्ये दयायां शिबिः । गाम्भीर्ये सरितांपतिर्निरुपमे शौर्ये सुभद्रापतिः श्रीमान्धर्मरतिर्महीपतिरयं जीयात्सहस्रं समाः ॥ १८० ॥ विद्वन्मानसहंस वैरिकमलासंकोचचन्द्रद्युते दुर्गामार्गणनीललोहित समित्स्वीकारवैश्वानर । सत्यप्रीतिविधानदक्ष विजयप्राग्भावभीम प्रभो साम्राज्यं वरवीर वत्सरशतं वैरिञ्चमुच्चैः क्रियाः ॥ १८१ ॥ हस्तन्यस्तकुशोदके त्वयि न भूः सर्वंसहा वेपते देवागारतया स काञ्चनगिरिश्चित्ते न धत्ते भयम् । अज्ञातद्विपभिक्षभिक्षुकुलावस्थानदुस्थाशया वेपन्ते मददन्तिनः परममी भूमीपते तावकाः ॥ १८२ ॥ अर्थिप्रार्थनहूमनत्फलभरव्याजेन कुब्जायितः सत्यासक्तिदानभाजि कथमप्यास्तां स कल्पद्रुमः । आम्ले निर्व्ययरत्नसंपदुदयोदग्र कथं याचकश्रेणीनर्जनदुर्यशोनिविडितव्रीडस्तु रत्नाचलः ॥ १८३ ॥ देव त्वत्करनीरदे दिशि दिशि प्रारब्धपुण्योन्नतौ चञ्चत्कङ्कणरत्नकान्तितडिति स्वर्णामृतं वर्षति । स्फीता कीर्तितरंगिणी समभवत्तृष्णा गुणग्रामभूः पूर्णं चार्थिसरः शशाम विदुषां दारिद्र्यदावानलः ॥ १८४ ॥ देव त्वामसमानदाननिहितैरर्थैः कृतार्थीकृतत्रैलोक्यः फलभारभङ्गुरगिरः कल्पद्रुमो निन्दति । टङ्कच्छेदनवेदनाविरमणात्संजातसौख्यस्थिति प्राचीनं गणिताङ्करोहणतया श्रीरोहणः स्तौति च ॥ १८५ ॥ गण्डौ पाण्डिमसात्तनूस्तनिमसात्पक्ष्मावली बाष्पसात्कीरं पञ्जरसान्मनोऽपि हरसात्कण्ठोऽपि कैवल्यसात् । आसन्देव चमूवरेण्य भवतः प्रत्यर्थिनामङ्गना कोदण्डे परिवेषभाजि विजयश्रीसाधने योधने ॥ १८६ ॥ देव त्वं मलयाचलोऽसि भवतः श्रीखण्डशाखी भुजस्तस्मिन्कालभुजंगमो निवसति स्फूर्जत्कृपाणच्छलात् । एष क्ष्माङ्गमनर्गलं रिपुतरुस्कन्धेषु संघट्टयन्दीर्घव्योमविसारि निर्मलयशोनिर्मोकमुन्मुञ्चति ॥ १८७ ॥ कर्पूरप्रतिपन्थिनो हिमगिरिश्लाघाप्रसर्पिणः क्षीराम्भोनिधिमध्यगर्भजयिनो गङ्गौघसर्वंकषाः । स्वच्छन्दं हरिचन्दनद्युतितुदः कुन्देन्दुसंवादिनस्त्वय्यासन्नरविन्दकन्दरुचयोऽनेके गुणाः केचन ॥ १८८ ॥ मन्ये स्वर्णमणिं त्वदीयमतुलं पाणिं द्विजाभ्यर्चने दुर्वर्णान्यपि भिक्षुभालफलकान्यासन्सुवर्णानि यत् । तच्चित्रं परमत्र मित्र भवता दत्ता सहस्रादिमा दुर्वर्णा न सुवर्णतामुपगता क्षुद्रास्तु मुद्रा कथम् ॥ १८९ ॥ सततश्रमहारिशीतलतले पुण्याश्रमालंकृतावुद्यद्दैन्यदवानलेन कलिते विद्वत्तरूणां चये । सद्यो वर्ष सुवर्णवारिद विभो स्वर्णाम्बुधारास्ततो विश्वव्यापियशःशिरोऽवनिभृतामाक्रम्य नन्दानिशम् ॥ १९० ॥ इन्दुस्त्वद्यशसा जितोऽवनिपते भास्वानिविस्तेजसा कन्दर्पो वपुषा सुधाजलनिधिर्वाचोविलासेन च । तच्च ते जयशील-

---

१ लोकालोकपर्वतपर्यन्तम् २ दिवसस्य ३ षष्ठे ४ साक्षात् ५ पुच्छस्य ६ 'कृ'धातोर्लिङ् ७ अर्जुनेन ८ व्ययाभावादुपचीयमानस्य ९ लज्जयैवेति भावः १० दानशौण्ड

---

१ लज्जासंवरणोपायासमर्थ इति भावः २ पानीयम् ३ जलभरैर्वृद्धिं प्राप्ता ४ गुणसमूहभूमिः ५ अनुपमदानाय न्यस्तैः सुवर्णादिभिः ६ यतस्त्वया दानेन सर्वे याचकाः सफलीकृता अतस्तत्फलानां गृहयालवः केऽपि च नागमन्निति भावः ७ खनेः ८ निर्व्रणतया ९ पर्वत १० यतस्तथैव सर्वेषां सरलत्वका रत्नार्थिनोऽभावान्नैश्चिदपि विदार्यन्त इति भावः ११ सेनाप्रधान १२ परिवेषो मण्डलीकरणं धनुषस्तु भवतः सेवकेऽसौ परिवेषभाक्सिञ्चते सति कर्णान्तमाकर्षणेन कुण्डलत्वं प्राप्ते सतीत्यर्थः १३ रणे १४ चन्दनवृक्ष १५ खड्ग- १६ यथेच्छम् १७ रिपुस्कन्धेष्विति यावत् १८ कञ्चुकम् १९ यथा कश्चन सर्पस्तरुस्कन्धे संघट्टनं कुर्वन्स्वं कञ्चुकं परित्यजति तथा त्वत्कृपाणोऽपि शत्रुस्कन्धेषु संघट्य यशःकञ्चुकं मुञ्चतीति भावः

वर्त्म स्मरेत् ॥ २१० ॥ आलान जयकुञ्जरस्य द्वेषदा सेतुर्विपद्वारिधे पूर्वाद्रि करवालचण्डमहसो लीलोपधान श्रिय । समामामृतसागरप्रेमथनक्रीडाविधो मन्दरो राजन्राजति वैरिराजवनितावैधव्यदस्ते भुज ॥ २११ ॥ लावण्यौकसि सप्रतापगरिमण्यग्रेसरे त्यागिना देव त्वय्यवनीमरक्षमभुजे निष्पादिते वेधसा । इन्दु किं घटित किमेष विहित पूषा किमुत्पादित चिन्तारत्नमहो मुधैव किममी सृष्टा कुलक्ष्माभृत ॥ २१२ ॥ नानाभूषणभूषित प्रतिभयापार प्रभूता स्थितिर्भारासक्तकरो भवाधिकरुचिर्भूरी कृताश्वद्विप । शश्वरसगतमासमानमुकुटो भिक्षुप्रवृद्धादरस्त्व राजेन्द्र रिपुस्तथापि नितरा भेद पर भेदकृत् ॥ २१३ ॥ प्रत्यावासक्रमजता प्रथमतस्त्वा योद्धुमुत्कण्ठिता योधास्तेऽभिसृता मनागरिचमू स्वाधीननाथा स्थिता । भीत्या प्रोषितभर्तृका समभवत्तत्सायकै खण्डिता दूरादन्तरिता विधाय कलह हा विप्रलब्धा विधे ॥ २१४ ॥ प्रामाण्य स्वत एव नैव परतो विज्ञायते मानता शब्दस्यापि यथार्थता स्तुतिवचोराशेर्भनोवृत्तय । विश्वव्यापकता गतो न च महानन्यो भ्रम क्वापि ते नास्ते देव मत किमस्ति भवत शास्त्रेषु न ज्ञायते ॥ २१५ ॥ प्रामाण्य परत स्वतोऽपि भवतो विज्ञायते सम्मते भूमीन्द्र प्रचुरक्षणस्थिरतया वर्णाश्चिर स्थापिता । सर्वज्ञैकसदीश्वरोऽपि न पर ब्रूते भवानीश्वर तन्नैयायिकनायकस्य भवतो मीमासकत्व कुत ॥ २१६ ॥ एक वस्तु यदस्ति विश्वजनतानन्दप्रमोदात्मक सत्य तत्त्वमसीति वाक्यमखिल त्वय्येव विश्राम्यति । त्वामाकर्ण्य न किंचिदन्यदवनीशृङ्गार भो मन्यते त्वय्यास्ते जनकादिकीर्तिजनके किं ज्ञानमीमासया ॥ २१७ ॥ स्वह्वाणेषु यमो जयेषु नियम पाते स्थिर चासन भ्रान्तौ श्वासविनिग्रहो गुणगणे प्रत्याहृति श्रीमत । ध्यान शूलिनि धारणा च धरणेर्धर्मे समाधिर्यतस्तन्निर्विण्णहृद किमीश्वरपरे वाञ्छन्ति पातञ्जले ॥ २१८ ॥ दृष्टान्तो न तवास्ति वाचि न च ते सदेहलेश क्वचिद्व्याजोक्तिर्न कदापि शास्त्रकलने नैवानुमाने रुचि । सामान्य च विशेषवत्त्व मनुषे नाक्षेपबुद्धिमनाग्व्याघातोऽपि न वा मुखेऽप्यथ कथ साहित्यतर्कज्ञता ॥ २१९ ॥ मेघो भाति जलेन गौस्तु पयसा विद्वन्मुख माषया तारुण्येन च कामिनी मधुरया वाण्या पिक ख जलात् । मालिन्यान्नयन श्रिया च सदन ताम्बूलरागान्मुख ब्रह्माण्ड सकल त्वया नरपते भाति स्म चित्र महत् ॥ २२० ॥ दारिद्र्योपहतो यथा घनधन चान्द्री चकोर प्रभा कामार्तस्तरुणी क्षुधापरिगत सव्यञ्जन भोजनम् । सच्छिष्य सुगुरु वियोगविधुरो वत्सो यथा मातर तद्वद्व सतत स्मरामि मनसा मद्वत्सलाच्छ्रीमत ॥ २२१ ॥ लक्ष्मीस्ते सदने सदा निहरता वित्त च चिन्तामणि स्पर्धेनुत्व गोकुले सुरतरुश्चारामभूमौ तव । वाणी ते वदने दया नयनयोर्दान करे चान्वह विष्णुश्चेतसि ते मतिश्च वसता कीर्तिश्च लोकत्रये ॥ २२२ ॥ गङ्गायत्यसितापगा फणिगण शेषीयति श्रीपति श्रीकण्ठीयति कैरवीयति कुल नीलोत्पलाना च वै । कर्पूरीयति कज्जल पिककुल लीलामरालीयति स्म कुम्भीयति कुम्भिनामपि घटा त्वत्कीर्तिसघट्टत ॥ २२३ ॥ लक्ष्मीस्ते हृदि भारती च वदने मौलौ सदा केशवश्चण्डी ते भुजदण्डयोर्गुणनिधे गेहे कुबेरस्थिति । चित्त नाथ तवास्तु धर्मसदने दानप्रसङ्ग करे सर्वास्ते विपद प्रयान्तु विपिने त्व दीर्घजीवी भव ॥ २२४ ॥ आयुस्ते नरवीर वर्धतु सदा हेमन्तरात्रिर्यथा लोकाना प्रियवर्धनो भव सदा हेमन्तसूर्यो यथा । लोकाना भयवर्धनो भव सदा हेमन्ततोय यथा नाश यान्तु तवारयोऽपि सतत हेमन्तपद्म यथा ॥ २२५ ॥ यद्बाहू वहत पराक्रमहृतप्रत्यर्थिसीमन्तिनीचक्षु कज्जलकालिकामिव धनुर्मौर्वीकिण श्यामिकाम् । यद्दोर्दुसदकर्मकार्मुकगुणप्रोत्तालकोलाहलैर्वैरिस्त्रीकलमेखलाकलकल पीता इवास्त गता ॥ २२६ ॥ सौन्दर्य मदनादपि प्रथयति प्रौढिप्रकर्ष पुरा भेत्तार मदनारिमप्यधरयत्युद्दामदो क्रीडितम् । मुग्धरव मदनारिमौलिशशिनोऽप्युत्कर्षमालम्बते मूर्तैस्तत्किमसौ रसैर्विरचित शृङ्गारवीराद्भुतै ॥ २२७ ॥ आदाय प्रतिपक्षकीर्तिनिवहा ब्रह्माण्डभूषातरे निर्विघ्न धमता नितान्तमुदिते स्वैरेव तेजोग्निभि । तत्तादृक्पुटपाकशोधितमिव प्राप्त गुणोत्कर्षिणा पिण्डस्य च महत्तर च भवता नि सारतार यश ॥ २२८ ॥ व्यास नैकतयास्थित श्रुतिगण जैमी न वल्मीकतो नाभो नाभवमच्युतस्य सुमहद्भाष्य च नाभाषिषम् । विनार्यो न

१ बन्धनस्तम्भ २ अनेनास्य सेनोरविनश्वरत्व सूचितम् ३ उदयाचल ४ सूर्य ५ विलोडनलीला ६ यथा क्षीराब्धिमन्थने मन्दराचलस्तथा संग्रामामृतसागरविलोडने त्वद्भुज यथा च तत्रामृतमुत्पन्न तथात्र यश इति भाव ७ यतस्त्वमेव निर्मलसकललावण्यगृहमतस्त्वत्पुर सकलङ्कस्य चन्द्रस्य लावण्यमयत्नेन घटन व्यर्थमेवेति भाव ८ यत पूषा त्वत्प्रतापगरिमलवांशमपि नाप्नोतीति भाव ९ यतश्चिन्तारत्नस्याय प्रभावो यद्याचकयाचितार्थाना सद्य एव पूरण भवति तच्च त्वत्त एव भवतीति अनर्थिका तामप्युत्पत्तिर्वृथेति भाव १० यत पृथ्वीभारस्त्वया भुजाभ्यामेव धारितोऽतस्तदुत्पत्तिर्व्यर्थेति भाव

१ अनेकशाखारूपेण न विस्तारितवान्, तत्त्वतो व्यासो नाभवमित्यर्थ २ वेदसमूहम् ३ नाह वाल्मीकिरित्यर्थ ४ नाह चतुर्मुख इत्यर्थ ५ नाह सहस्रजिह्व इत्यर्थ

रैहत्कथामचकथ सुैनाम्नि नास गुैरुर्देव त्वद्गुणवृन्दवर्णनमह कर्तुं कथ शक्नुयाम् ॥ २२९ ॥ एकाभूत्कुसुमायुधेषुधिरिव प्रव्यक्तपुङ्खानली जेतुर्मङ्गलपालिकेन पुलकरन्या कपोलस्थली । लोलाक्षी क्षणमात्रभाविविरहक्लेशासहा पश्यतो द्रागाकर्णयतश्च वीर भवत प्रौढाहवाडम्बरम् ॥ २३० ॥ येषा दोर्बलमेव दुर्बलतया ते समतास्तैरपि प्राय केवलनीतिरीतिशरणै कार्यं किमुर्वीश्वरै । ये क्ष्माशक्र पुन पराक्रमनयस्वीकारकान्तक्रमास्ते स्युर्नैव भवादृशास्त्रिजगति द्वित्रा पवित्रा परम् ॥ २३१ ॥ अम्बुधा परित स्फुरन्ति गिरय स्फारास्तथाम्भोधयस्तानेतानपि बिभ्रती किमपि न क्लान्तासि तुभ्य नम । आश्चर्येण मुहुर्मुहु स्तुतिमिति प्रस्तौमि यावद्भुवस्तावद्बिभ्रदिमा स्मृतस्तव भुजो वाचस्ततो मुद्रिता ॥ २३२ ॥ येषा कण्ठपरिग्रहप्रणयिता सप्राप्य धाराधरस्तीक्ष्ण सोऽप्यनुरज्यते च कमपि स्नेह पराप्नोति च । तेषा सगररङ्गसक्तमनसा राज्ञा त्वया भूपते पासूना पटले प्रसाधनविधिर्निर्वर्त्यते कौतुकम् ॥ २३३ ॥ द्रष्ट्वा कीर्तिकलिन्दशैलसुतया नद्यास यशोद्वयीकीर्तिश्रेणिमयी समागममगाद्गङ्गा रणप्राङ्गणे । तत्तस्मिन्विनिमज्जय बाहुज भटैरारम्भि रम्भापरीरम्भानन्दनिकेतनन्दननवक्रीडादराडम्बर ॥ २३४ ॥ अस्मिन्दिग्विजयोद्यते पतिरय मे स्यादिति ध्यायति केम्य सात्त्विकभावमञ्चति रिपुक्षोणीन्द्रदारा धरा । अस्यैवाभिमुख निपत्य समरे यास्यन्ति रूर्ध्वे निज पन्था भोत्स्यति दृश्यते विलमय प्रत्यर्थिभि पार्थिवै ॥२३५॥ विद्राणे रणचत्वरादरिगणे त्रस्ते समस्ते पुन गोपालकोऽपि निवर्तते यदि भट कीर्त्या जगद्धुकुट । आगच्छन्नपि सम्मुख विमुखतामेवाधिगच्छत्यसौ प्रागेतच्छुरिकारयेण ठणिति च्छिन्नापसर्पच्छिरा ॥ २३६ ॥ हित्वा दैत्यरिपोरुर स्थलमन ध्येयत्नदोषस्फुटासीदर्मर्कटकीटकृत्रिमसितच्छत्रीमयत्कौस्तुभम् । उज्झित्वा निजसद्म पद्ममपि तैर्यत्राव नद्धीकृत लूतातन्तुभिरन्तरद्य भुजयो श्रीरस्य विश्राम्यति ॥ २३७ ॥ सिन्धोर्जैत्रमय पवित्रमसृजत्तत्कीर्तिपूर्ताद्भुत यत्र स्नान्ति जगन्ति सन्ति कतय के वा न वाचयमा ।

१ नाह गुणाढ्य इत्यर्थ २ इन्द्रे ३ नाह वाचस्पतिरित्यर्थ ४ विस्तीर्णा ५ सतम् ६ तेजादि, पक्ष,-मित्रत्वम् ७ यमुनया ८ क्षत्रियभटै ९ एतद्विरोधिना मरणमेव शरणमिति भाव १० औत्पातिके भूकम्पे सात्त्विकोद्रेका ११ प्राप्नोति १२ कण्ठलोठम् १३ आसन्नमृत्योरादित्यमण्डल सच्छिद्रमिव दृश्यते १४ सूर्यमण्डले १५ रणाङ्गणात् १६ प्रसिद्ध १७ पराङ्मुखत्वम्, पक्षे,-विगतमुखत्वम् १८ ठणिति कश्चिदनुकरणशब्द १९ विष्णो २० रिक्तशरीर २१ तन्तुवायकीटा २२ स्वदम् २३ लक्ष्मी २४ वेद् वयत्नीकम्, ततोऽप्यधिक मित्यर्थ २५ स्नातम् २६ सर्वेऽपि कवयो मौनिनो भवति, वर्णयितुमशक्यत्वादिति भाव

यद्बिन्दुश्रियमिन्दुरञ्चति जल चाविश्य दृश्येतरो यस्यासौ जलदेवतास्फटिकभूर्जागर्ति यैगेश्वर ॥ २३८ ॥ युद्धा चाभिमुख रणस्य चरणसैन्यादसीयस्य वा युद्धान्ति स्वपरान्तर निपततामुन्मुच्य बाणावली । छिन्न वार्धैनतीभवन्निजभिय खिन्न भरेणाथवा राज्ञानेन हठाद्विलोठितमभूद्भूमावरीणा शिर ॥ २३९ ॥ राज्ञामस्य शतेन किं कल्यतो हेतिं शतघ्नीं कृत्त लक्षैर्लक्षभिदो दशैव जयत पद्मानि पक्षेरलम् । कर्तुं सर्वपरैच्छिद किमपि नो शक्य परार्धेन या तत्सर्व्योपगम विनास्ति न गति काचिद्बतैतद्द्विषाम् ॥ २४० ॥ क्षीरोदन्वदप प्रमथ्य मथिता देशेऽमरैर्निर्मिते स्रोत्रम्य सृजतस्तदस्य यशस क्षीरोदसिंहासनम् । येषा नाजनि वा जनेन *जगतामेतत्कवित्वामृतस्रोत प्रोतपिपासुकणकलशीभा* जाभिषेकोत्सव ॥ २४१ ॥ निस्त्रिंशत्रुटितारिवारणघटाकुम्भास्थिकूटाटनैस्थानस्थायुकमौक्तिकोत्करकिर कैरस्य नाय कर । उन्नीतश्चतुरङ्गसैन्यसमरत्वङ्गत्तुरङ्गैर्खुरक्षुण्णासु क्षितिषु क्षिपन्निव यश क्षोणीजबीजव्रजम् ॥ २४२ ॥ यत्कस्यामपि भौनुमात्र ककुभि स्थेमानमालम्बते जात यद्वनगाननैकशरणप्राप्तेन दावाग्निना । एषैतद्भुजतेजसा निर्जितयोस्तावत्तयोरौचिती धिक्त वैडवमम्भसि द्विषि भिया येन प्रविष्ट पुन ॥ २४३ ॥ आसमन्यस सम्मुखितीकृतगुणसाहोतरामौचिती यद्बाणान्तरयर्जनौदजनयद्भूजानिरेष द्विषाम् । भूयोऽहङ्क्रियते स येन च हृदा स्कन्धो न यश्चानमत्त मर्माणि दैल्दल समिर्दैलकमाणबाणव्रज ॥ २४४ ॥ यत्नं तु कुरु तेऽभिषेणनेमय शक्रो भुन सा भुव दिग्दाहैरिव भस्मभि मेघवता सुष्टैर्धृतोद्धूलना । शम्भोर्मा बत साप्यवेलनदन भीजि बत प्रागिति क्षोणी नृत्यति मूर्तिरष्टवपुषोऽस्मगृष्टिसध्याधिया ॥ २४५ ॥ प्रागेतद्बपुरामुखेन्दु सृजत स्रष्टु समग्रस्त्विषा कोष शोपमगादगाधजगतीशिल्पेऽप्यनल्पा-

१ भावण्यादिद्रस्य २ इन्दु ३ शिवलिङ्ग ४ प्रमुख ५ नम्रीभवत् ६ भारेण ७ परिवर्तितम् ८ आयुधम् ९ अब्जम् १० लक्षसंख्या, पक्षे,-शरव्यम् ११ पद्मसंख्यया, पक्षे-अब्जानि १२ पद्मसंख्याभि १३ शत्रुच्छिद १४ परार्धस यया, पक्षे,-परेषामरीणामर्धेन १५ एकत्वादि, पक्षे,-युद्धम् १६ विलोड्य १७ मथनोद्भूतो निर्जलो दधिक्षीरविकार १८ रूपा तर, रूपान्तरापादनेन क्षीराब्धावभाव गमिते सतीत्यर्थ १९ स्वेनाक्रमणार्थम् २० पूरिते २१ खड्ग २२ संघात २३ गर्वप्रदेश २४ स्थायिन २५ समूह २६ उत्क्षेपित २७ संचरत् २८ कृपाण २९ वपन्निव ३० भूम ३१ सूर्य ३२ शिरस्त्वम् ३३ औचित्यम् ३४ अम्भोर्जत्वम् सहजद्वैरि तस्मिन् ३५ समाहतगुणस्य ३६ दण्डजमकरोदित्यर्थ [illegible] दष्पिरवा ३८ अभोपवाण इत्यर्थ ३९ सेनयाभियानम् ४० धूलभस्मानुलेपना ४१ मा भ्रमभि

यित । नि शेषद्युतिमण्डलव्ययवशादीषन्मलैरेष या शेष केशमय शिमन्वतमसस्तोमेस्ततो निर्मित ॥ २४६ ॥ असारिप्रकर शरश्च नृपते सन्ध्ये पतन्तावुभौ सीत्कारं च न समुखौ रचयत कंम्प च न प्रामुत । तद्युक्त न पुन र्निवृत्तिरुभयोर्जागर्ति यन्मुक्तयोरेकस्तत्र भिनत्ति मित्रमपरश्चामित्रमित्यद्भुतम् ॥ २४७ ॥ एतस्योन्नतसर्वकर्मकृतिनश्चैलोक्यचूडामणे शम्भुब्रह्मपुरदरप्रभृतय स्तुत्यै न शक्ता यदि । देव पन्नगनायको भगवती वाणी स्वय चेज्जडा सौन्दर्यस्य निरूपणे वद कथ शक्तो भवेन्मानव ॥ २४८ ॥ अर्धं दानववैरिणा गिरिजयाप्यर्धं हरस्याहृत देवेत्थ भुवनत्रये स्मरहराभावे समुन्मीलति । गङ्गा सागरमम्बर शशिकला शेषश्च पृथ्वीतल सर्वज्ञत्वमधीश्वरत्वमगमत्त्वा मा च भिक्षाटनम् ॥ २४९ ॥ अन्यास्ता गुणरत्नरोहणभुवो धन्या मृदन्यैव सा सभारा खलु तेऽन्य एव विधिना यैरेव सृष्टो युवा । श्रीमत्कान्ति जुषा द्विषा करतलात्स्त्रीणा नितम्बस्थलादृष्टे यत्र पतन्ति मूढमनसामस्त्राणि वस्त्राणि च ॥ २५० ॥ यैर्दृष्टोऽसि तदा ललाटपतितप्रासप्रहारो युधि स्फीतासृक्स्रुतिपाटलीकृतपुरोभाग परान्दारयन् । तेषा तु सदकामदेहदहनप्रोद्धतनेत्राञ्चल-ज्वालालीभरभासुरे पुररिपावस्त गत कौतुकम् ॥ २५१ ॥ येऽणुत्व मनसि स्वके विदधते रीत्या कयापि स्फुट काणादाचरणस्य तत्समुचित मन्ये प्रतिक्ष्माभृताम् । न्यायाभिज्ञतमोऽपि यत्प्रथयसे चित्ते महत्त्व निजे मीमासामतपक्षपातत इद मन्ये त्वयाङ्गीकृतम् ॥ २५२ ॥ ये लब्धाश्रयमायत फलभृत कुर्वन्ति किंचिद्गुण वार्यौ वारिमुचो न कस्य विदितास्ते कर्ममीमासका । आलोच्यैव निराश्रयाप्फलभरै सबन्धत सद्गुणाञ्श्रीमद्राम तवाद्भुत पुनरिद मीमासकत्व स्तुम ॥ २५३ ॥ त्रैलोक्याभयलम्भकेन भवता वीरेण निस्सारित सज्जीभूतमुहूर्तमण्डलघनु पाण्डित्यमाखण्डल । किं चाजस्रमखार्पितेन हविषा सफुल्लमासोल्लसत्सर्वाङ्गीणनलीविलुसनयनव्यूह कथ वर्तते ॥ २५४ ॥ कल्पक्षोणिरुहोऽयमित्यनुदिन भूमीसुरैर्मान्यसे कामोऽसाविति कामिनीभिरमितश्चित्ते चिर चिन्त्यसे । श्रीनारायण एव केवलमिति प्रेम्णा श्रिया ध्यायसे त्व कालोऽयमिति प्रतिक्षितिधरैरेकोऽप्यनेकात्मभृत् ॥ २५५ ॥ नीतिस्त्रीमुकुरो जयध्वजनवस्तम्भ प्रतापाशुमत्पूर्वा दिक्परिपन्थिभूपतिमहासपन्मृगीवागुरा । उद्यत्पुण्यलतालवालमतनू मत्तद्विपालानक य श्रीकेलिनिकेतन गुणमणिश्रेणी नवीनाकर ॥२५६॥ रत्नान्यम्बुधितोयगर्भमगमन्मेरु सुराञ्शिश्रिये स्वीयाङ्के कमला निधाय विदधे निद्रा हरिर्नारधौ । यस्मिन्दित्सति भूरि दातरि नृणा भालस्थले दुर्लिपि प्रोञ्छनप्रशिरा कमण्डलुमय जग्राह भाएँ विधि ॥ २५७ ॥ लक्ष्मीश्चेत्र सरस्वती तदुभय यद्यस्ति नोदारता सा चैतत्त्रितय भवेच्च श्रुहचित्तु-ण्यैरगण्यैरपि । सौजन्य न विजृम्भते तदपि चेत्तास्तेऽनकूलामतिस्तत्सर्व परमेश्वरस्य कृपया त्वय्येव समाव्यते ॥ २५८ ॥ शत्रूणा यमदण्डता मृगदृशा कन्दर्पकोदण्डता गीर्वाणद्रुममानमार्थिनिद्रुपा मध्ये त्रयाणामिति । आश्चर्यं मनुजेन्द्ररत्न भवतो यद्बाहुदण्डद्वय नानात्व गतमेकमेव जगता मध्ये त्रयाणामिति ॥ २५९ ॥ रक्तेनैव विलोचनेन करुणारत्नाकरेण त्वया दृश्यन्ते नरदेवरत्न सुहृदा विद्वेषिणो नो नृपा । किं सिक्ता प्रथम सुधाभिरमनन्दानानलै कि परे पूर्वं पल्लविता कुत किमपरे भस्मत्वमासादितम् ॥ २६० ॥ या लाक्षानलयानि बाहुयुगले कण्ठे च काचस्रज मन्यन्ते बहुभूषणानि वनिता दीनद्विजाना पुरा । ता माणिक्यचितानि हेमवलयान्युज्झन्ति मुक्तास्रज यद्द्वाराद्बहुदानशील नृपते त्वत्त्यागलीलायितम् ॥ २६१ ॥ मेरुर्दूरगतो हिमालयगिरि प्रालेयरूपोऽभवच्चन्द्रे श्रीसहजेऽपि याचकभयात्क्षीणत्वमुन्मीलति । कौपीन कृतवान्हरोऽपि भगवान्विष्णुर्जल सेवते वारा राशिरपेयतामुपगत को नाम दातु क्षम ॥ २६२ ॥ कल्याण भवता यश प्रसरता धर्म सदा वर्धता सपत्ति प्रथता प्रजा प्रणमता शत्रुक्षयो जायताम् । वाक्य सवदता वपु प्रभवता लक्ष्मीपति प्रीयता मायुस्ते शरदा शत निजयता दानाय दीर्घायुषे ॥ २६३ ॥ दृष्ट्वैवाङ्कुशमुद्रया निगडितो दारिद्र्यदन्तावलो वाचा सुदर्याचर्या मम कृतो गङ्गावगाहोत्सव । अभ्युत्थाननमस्क्रियार्धघटनैर्मानोऽपि दानोत्तरो लीलेयं भवता यय [illegible] विदुषा मूर्धामध्यासिता ॥ २६४ ॥ पद्मा सद्मनि वेशवस गहने रत्नानि रत्नाकर हेमाद्रिर्हिमसानुना व्यवहित स्वर्गे सुरपणा तरु । जम्बुद्वीपधरासु भूमिपतयो जाम्बूनदैर्दुर्मदास्त्व तावत्सकलाश्रयेऽसि सुलभो भाग्यैर्द्विजानामिह ॥ २६५ ॥ राजन्नभ्युदयोऽस्तु जीव शरदा साम शत तेऽस्त्वयो रोगैर्यातु लय यश शशधर काष्ठासु देदीप्यताम् । शिष्टान्पाहि बुधाश्रय प्रणतिभिर्देहार्थिना स सदा

१ सुलभे २ युगपद् ३ दु खाभावात्, पक्षे,-निगलभावात् ४ भयाभावात्, पक्षे,-दुष्प्रयोगाभावात् ५ अगमादिति भाव, पक्षे,-प्रत्यक्षादिति भाव ६ संसारादित्यर्थ, पक्षे,-चापादित्यर्थ ७ सर्वम्, पक्षे,-यथाश्रुतम् ८ हरिणा हरिहरात्मकस्यैकस्य विग्रहस्य प्रसिद्धे ९ प्रकाशमाने १० पर्वतविशेष

१ आलानक गजबन्धनस्तम्भ २ दयासागरेण

वाणी ते वदने रमा प्रतिदिनं गेहे भुजे साम्राज्य ॥ २६६ ॥ भ्रश्यच्छ्रुतिमस्तकं प्रविगलत्सद्वर्णविप्रस्थिति-र्नश्यत्स्वाङ्गबलं प्रनष्टवचनग्रामावपूर्णस्मृति । वृद्धोऽत्यन्त मयं स्वयं कलिमहाम्लेच्छेन निर्मूलितो धर्मः संप्रति चाल्यते तव करालम्बेन भूमीपते ॥ २६७ ॥ बन्दीकृत्य नृप द्विषां मृगदृशस्ताः पश्यता प्रेयसा श्लिष्यन्ति प्रणयन्ति लान्ति परितश्चुम्बन्ति ते सैनिकाः । अस्माकं सुकृतैर्दृशोर्नि-पतितोऽस्यौचित्यवारांनिधे विध्वस्ता विपदोऽखिलास्तदिति तैः प्रत्यर्थिभिः स्तूयते ॥ २६८ ॥ हित्वा त्वामुपरोधशून्य-मनसा मन्ये न मौलिः परो लज्जावर्जनमन्तरेण न रमाम न्यत्र संदृश्यते । यस्त्यागं तनुतेतरां मुखशतैरेत्याश्रिताया श्रियः प्राप्य त्यागकृतावमाननमपि त्वय्येव यस्याः स्थितिः ॥ २६९ ॥ धर्मं पालय नन्दय द्विजगणान्नाम समाराधय प्रत्यर्थिक्षितिपालभूरुहवनं निर्मूलमुन्मूलय । कान्ताचित्तसरोजमीनमगरने भृङ्गत्वमासादय स्फीतां कीर्तिम शेषलोकजयिनीमाकल्पमाकल्पय ॥ २७० ॥ ऐश्वर्यं नहुषस्य शत्रुविषयश्रद्धा दशास्यस्य सा शौर्यं श्रीरघुनायकस्य सहजं गाम्भीर्यमम्भोनिधेः । दातृत्वं बलिकर्णयोरिह जगत्येकत्र चेत्स्यात्तदा श्रीवीरक्षितिपालमौलिनृपते साम्यं कथंचिद्भवेत् ॥ २७१ ॥ भिक्षुद्वारि सदानवारिमधुपश्रेणीमिमामिन्द्रभ्रमाद्वक्त्रे यत्तनुभूर्वधूकरतलं शोणाम्बुजा शङ्कया । सैनान्वेति पलायितेति चकिता हस्ताग्रमाधुन्वती मुग्धा वीरमहीपते तदखिलं त्वद्दानलीलायितम् ॥ २७२ ॥ श्रीवीर क्षितिपाल ते सुललितं दानोद्यमे यद्वचः काले सर्वहिरण्यमित्युदमयत्तत्कालमाकर्ण्य तत् । तापं प्राप हिरण्यरेतसि जनिं जाड्यं हिरण्याचले स्वेदाम्भोऽपि हिरण्यगर्भवपुषि स्वापाय सन्नासत ॥ २७३ ॥ राजानः शशिभास्करान्वयभुवः के के न सजज्ञिरे भर्तारं पुनरेकमेव हि भुवस्त्वां वीर मन्यामहे । येनाङ्गं परिमृश्य कुन्तलमथाकृष्य व्युदस्यायतं चोलं प्राप्य च मध्यदेशमसकृत्काञ्च्या करः प्रापितः ॥ २७४ ॥ ख्याते वैभवमस्ति नैव परतः प्रामाण्यनिर्धारणं नैवातद्वति तत्प्रकारकमतिर्नैवोपमानं तत्र । त्वद्देशेषु विभाति न च्छलकथा नो वा क्वचित्संशयः श्रीवीर प्रथिता कथं पुनरियं नैयायिकत्वप्रथा ॥ २७५ ॥ वीर क्षीरसमुद्रसान्द्रलहरीलावण्यलक्ष्मीमुषस्त्वत्कीर्तेस्तुलना मृगाङ्क-मलिनो धत्ता कथं चन्द्रमाः । स्यादेतत्त्वदरातिसौधशिखरोद्भूतदूर्वाङ्कुरग्रासव्यग्रमति पतेद्यदि पुनस्तस्याङ्कशायी मृगः ॥ २७६ ॥ श्रीमद्वीर महीमहेन्द्र भवत प्रस्थानकालोद्भवद्वाद्योद्भवध्वनिभीतभानुहरयो द्रागम्बरं प्राग-मन् । तस्मिन्नेनमुपद्रवे किल विपर्यस्तं समस्तं रवेर्युग्यं ससारथ्यङ्गमेकमपदं सूतश्चिरादुद्भ्रम ॥ २७७ ॥ गर्वग्रन्थि-लगुर्जरज्वरकर कर्णाटकर्णाटवीदावाग्निर्द्रविडेन्द्रवीर्यदलनो गौडेन्द्रनिद्राहरः । हम्मीरप्रमदामदालसलसद्भूनर्तनस्तम्भन प्रस्थाने तव वीर डिण्डिमचमत्कारः समुज्जृम्भते ॥ २७८ ॥ चिन्तागम्भीरकूपादनवरतचलद्धूरिशोकारघट्टव्याकृष्ट निःश्वसन्त्यः पृथुनयनघटीयन्त्रनिर्मुक्तधाराम् । नासावंशप्रणाली-विषमपथपतद्वाष्पपानीयमेता देव, त्वद्वैरिनार्यः कुचकलशयुगेनान्वहं संवहन्ति ॥ २७९ ॥ त्वत्प्रारब्धप्रचण्डप्रधनविनिर्भिन्नितारातिवीरातिरेकक्रीडत्कीलालकुल्यावलिभिरलभत स्वैन्दमाकन्दमुर्वी । दम्भोलिस्तम्भमास्वद्भुज भुजगजगद्भर्तुरामर्तुरेना तेनायं मूर्धरत्नद्युतिततिमिषतः शोभते शोणभावः ॥ २८० ॥ आसीदासीमभूमीवलयमलयजालेपनेपथ्यकीर्तिः सप्ताकूपारपारीसदनजनघनोद्गीतचापप्रतापः । वीरादस्मात्परः कः पदयुगयुगपत्यातिभूपातिभूयश्चूडारत्नोडुपत्नीकैरपरिचरणाम दन्तरत्नखेन्दुः ॥ २८१ ॥ प्रत्नो-त्कूर्चकण्ठप्रतिसुभटमटोरब्धनाव्याकुलतानां कष्टं क्ष्वेव नाभू-द्भुवि सैमरममालोक्य लोकास्सदेऽपि । अश्वैरश्वैरवेगैः कृत खुरखुरलीमङ्क्षुसंक्षुभ्यमानक्ष्मापृष्ठोत्तिष्ठदन्धङ्करणरणधुरोरेणु-धाराधकारात् ॥ २८२ ॥ मन्दोद्भूते शिरोभिर्मणिभिरगु-रुभिः प्रौढरोमाश्चदण्डस्फायन्निर्मोकसधिप्रसरदविगलत्समद-स्वेदपूराः । जिह्वायुग्माभिपूर्णाननविषमसमुद्गीर्णवर्णाभिरामं वेलाशैलाङ्कभाजो भुजगयुवतयस्त्वद्गुणानुद्गृणन्ति ॥ २८३ ॥ आ शैलेन्द्राच्छिलान्तस्खलितसुरधुनीशीकरासारशीतादा-तीरान्नैकरागस्फुरितमणिरुचो दक्षिणस्यार्णवस्य । आगत्या-गत्य भीतिप्रणतनृपशतैः शश्वदेव क्रियन्ते चूडारत्नांशुगर्भा-स्तव चरणयुगस्याङ्गुलीरन्ध्रभागाः ॥ २८४ ॥ ध्याय ध्याय त्वदीयं गुणगणमखिलं सर्वदा याचकेभ्यस्त्वत्प्रासामीप्यं तेभ्यः सकलविषयजं भूपवर्गं विहाय । त्वत्तोऽहं प्राप्तुमिच्छुर्विबुधतिलकतां त्वत्समीपेऽतिदूरादायातस्त्वं शतायुर्भव कुरु च तथा येन नान्यं भजेऽहम् ॥ २८५ ॥ विद्यावन्तो विनीता प्रसममभिसभं वाक्प्रपञ्चेषु जीवाः के वा नैवार-भन्ते त्रिजगति विततां कीर्तिवल्लीमतल्लीम् । तेषामाधा

१ भन्दू पारयक्ष्या २ मग्नानि

१ अथा २ जङ्ग्माग ३ संमामः ४ विनादा प्रामा ५ हरिणदी ६ श्रेणय ७ क्षणम् ८ वज्रम् ९ शेषस्य १० रश्मिः ११ समुद्रपरतीराणाम् १२ निरन्तरम् १३ अशिव, पक्षे,-हस्ता १४ छिन्नकण्ठैः १५ नर्तैः १६ युद्धमेव जनाः सेदुरपि १७ अनन्दनैः १८ सुरसंचारे १९ सपदि २० संचूर्ण्यमानात्

रमाय भुवनभरभृतो बिभ्रतो ये लसन्ते ते तु त्रैलोक्यतुङ्गा विमलफल्गुप स्व पतिं स्वल्पयन्ति ॥ २८६ ॥ वक्त्राम्भोज सरस्वत्यधिवसति सदा शोणे एवाधरस्ते बाहु काकुत्स्थवीर्यस्मृतिकरणपटुर्दक्षिणस्ते समुद्र । वाहिन्य पार्श्वमेताः सुचिरपरिचिता नैव मुञ्चन्त्यभीक्ष्ण स्वच्छेऽन्तर्मानसेऽस्मिन्कथमरनिपते तेऽम्बुपानाभिलाष ॥ २८७ ॥ केचिद्वद्धा सहेल निजभवनगता मोचिता केऽपि केचिद्देहाद्देहान्तराणि क्षणमपि गमिता केऽपि नीता निबन्धम् । हत्वा हत्वा च केचित्प्रतिपदमदय प्रापिता व्यर्थभाव क्षोणीनाथस्य तस्योन्नतभुजपरिघेनारय सारयश्च ॥ २८८ ॥ उच्चै कल्याणवाही करजितत्रसुध सर्वदा पूर्णकामो विख्यात कर्णवृत्त्या न च वचसि कटुश्चिन्नपाकानुभावी । कोपापेक्षी परस्मादुचितबहुकथस्तत्पर पुण्यलोके चित्र राजाधिराज त्वमिव तव रिपुस्तत्र कम्प्र प्रतीम ॥ २८९ ॥ उत्पत्त्युत्पन्नशिष्टा निविधगुणगणा यत्र यान्ति प्रतिष्ठा बाधेन प्राप्तनाना न च नियमविधिर्नापि सत्यार्थदाने । ऊह सर्वत्र यस्य स्फुरति च सकल सत्य एवार्थवादो मीमांसामायमन्वत्यभिनवमधुना मूर्तिरेषा त्वदीया ॥ २९० ॥ हेलाप्रस्थानवेलाहतपृथुपृतनादुन्दुभिध्वानधाराधारावाहिप्रसन्नादसमनपसकृत्संभ्रमभ्रान्तचित्ता । दैवादाकुञ्चिताङ्गविगलितनयनस्य दमिन्दीवराक्ष्यो लीयन्ते त्वद्रिपूणा निजगृहवलभीचारुचित्राङ्गनासु ॥ २९१ ॥ श्रीकण्ठासक्तहस्तोऽधिगतमणिगण शैशवाभ्यस्तविद्यो लावण्यध्वस्तकाम कविजनमिलितो यौवनाप्तप्रकाम । आदत्तक्षोणिदण्डो द्विजवशकृतधी कङ्कणाहारयुक्त स श्रीमान्वीर वीर त्वमिव तव रिपुस्तत्र मुक्ताविवर्ण ॥ २९२ ॥ लोकाना मानमात्र मनुजजनरतिस्त्व ससुदाक्षिरक्षो राज्ञामासत्यदक्ष कुलसमयरुचिर्मण्डितो वीरवर्गै । कायलक्ष्मीनकेतु करकलितयशा कोषमानैर्विहीन श्रीमद्वीराधिराज त्वमिव तव रिपुस्तत्र मन्द प्रतीम ॥ २९३ ॥ यादाभासानुयुक्तो नगरकृतमतिर्यौवनाक्रा तदेह सप्रामप्रासधैर्यो न विदलित रुची राजलक्ष्म्यातिहीन । नित्य दारासमस्य प्रखरतनुनिभो सुभिक्षानुवर्ती श्रीमद्वीराधिराज त्वमिव तव रिपुस्तत्र मुक्ताविवर्ण ॥ २९४ ॥ श्रीवीर त्वद्रिपूणा रणशिरसि शरैर्भिन्नशीर्षाङ्गकाणां वीरावेशाद्धताना दियमधिकरुपान्योन्यशौण्डीर्यभाजाम् । स्नेपदिव्याङ्गनाना भुवि कचनिचयो द्राक्टाक्षे शरासासीपुभ्रान्त्यारिवीरभ्रमकुटिलहृदामाजिरावर्तते स्म ॥ २९५ ॥

## विशिष्टराजप्रशंसा

### अकबर

हस्ताम्भोजालिमाला नखशशिरुचिरश्यामलच्छायवीचिस्तेजोऽमेर्धूमधारा वितरणकरिणो गण्डदानप्रणाली । वैरिश्रीवेणिदण्डो लवणिमसरसीबालशैवालवल्लीवेल्लत्यम्भोधरश्रीरकबरधरणीपालपाणौ कृपाण ॥ १ ॥ वीर कार्मुक चेदकबर कलयस्युग्रटङ्कारघोष दूरे सद्य कलङ्का इव धरणिभृतो यान्ति कङ्कालशेषा । शङ्कापन्नश्च किं कारणमिति मनसा भ्रान्तिपङ्कायितेन स्वस्त्वाहङ्कारमङ्काद्विसृजति गृहिणीं किं च लङ्काधिनाथ ॥ २ ॥ कर्णाट देहि कर्णाधिकविधिविहितत्याग लाट ललाटप्रोत्तुङ्ग द्राविडं वा प्रबलभुजबलप्रौढिमागाढराढम् । मरुगूर्जर वा दलित रिपुवधूगर्भ वैदर्भक वा गाजी राजीवदृष्टे कुशशतमथवा शाहजेलालुदीन ॥ ३ ॥ गाजीजल्लालुदीन क्षितिपकुलमणे द्राक्प्रयाणे प्रतीते प्रेयस प्रारभन्ते तरलतरगतिव्याकुला मङ्गलानि । नेत्राम्भ पूरपूर्णस्तनकलशमुखन्यस्तबालप्रवालासुव्यन्मुक्ताकलापच्युतकुचकुसुमच्छद्मनाकीर्णलाजा ॥ ४ ॥

### अनङ्गभीमः

पृथ्वीश्रीमदनङ्गभीम महती तद्वेष्टन वारिधि पीतोऽसौ कलशोद्भवेन मुनिना व्योम्नि खद्योतवत् । तद्विष्णोर्दनुजाधिनाथजयिन पूर्णे पद नामवद्देवश्चेतसि वर्तते तव सदा त्वत्तो महाप्रापर ॥ ५ ॥

### अर्जुनेन्द्रः

आयातस्ते समीप तव गुणविमलात्पण्डितो धादकर्ता काव्ये भव्ये हि रवामयविगतरसे रुग्युगे रोगहर्ता । नाह जाने चिकित्सा सकलगुणनिधे दुर्दरिद्रत्वरोगे श्रीमदाजार्जुनेन्द्र प्रबलमपि यते कल्पिता सा चिकित्सा ॥ ६ ॥

### कर्ण

मुखे हारावाप्तिर्नयनयुगले कङ्कणभरो नितम्बे पत्राली सतिलकमभूत्पाणियुगलम् । अरण्ये श्रीकर्ण त्वदरिसुदतीनां विधिवशादपूर्वोऽय भूषाविधिरहह जात क्रिमधुना ॥ ७ ॥ द्वित्राणि पदानि गच्छसि महीमुल्लङ्घ्य यान्ति द्विषस्त्व बाणान्दश पञ्च मुञ्चसि परे सर्वाणि शस्त्राण्यपि । ते देवीपतयस्त्वदस्त्रनिहतास्त्व मानुषीणा पतिर्निन्दा तेषु कथ स्तुतिस्तव कथ श्रीकर्ण निर्णीयताम् ॥ ८ ॥ लोकेश कर्ण-

१ पाणी, पक्षे,-नदीविशेष २ आरक्त, पक्षे,-नदविशेष ३ मुद्राभि सहित, पक्षे,-अब्धि ४ सेना, पक्षे,-नद्य ५ अन्त करणे, पक्षे,-सरोविशेषे ६ अष्टापदारयकीटस्य गुटिका ७ ककारस्थाने पकारस्य ८ इह पद्ये शत्रुपक्ष आषाढस्याग ९ पद्येऽस्मिन् मकारस्थाने दकार पठनीय

१ अकबरस्यैव नामान्तरम् २ मुखे हाहा इति रावस्य शब्दस्य वाप्ति ३ नयनयुगले कङ्कणस्य चन्द्रक तस्य कणास्त्रेषां भर ४ नितम्बे पत्राणामालि पङ्क्ति ५ तिलकवृक्षावलम्बिपाणियुगलम् ६ वैरिण ७ देवाङ्गनास्वामिन-

राजाद्भुतकनकमयस्तावकीनप्रतापाद्ब्रह्माण्डाना समूहो द्रव इव भवितेत्येव संभाव्य धाता। तन्मात्रं प्लावनार्थं जलनिधिनिकरं व्यर्थतामेव याते देव त्वद्वैरिनारीनयननयनजैर्निर्मिते नीरधिर्न ॥९॥ श्रीकण्ठ प्रौढतेजा प्रबलरिपुबलव्रातसंतापदक्षो नाथ श्रीमल्लनाथो जयति विलसति श्रीमहाराज किंतु। मन्येऽहं कौशिकेनानुकलितमहसा नूतनस्वर्गसृष्टावुत्कृष्ट सृष्ट एष प्रखरतरकरो भास्करोऽन्यो द्वितीय ॥ १० ॥

कर्णाटवसुधराधिप

भोगा प्रभुपरम्परावितरधिया वैयर्थ्यमाकर्णय श्रीकर्णाटवसुधराधिपस्तुयाज्ञिकानि सूक्तानि न । यस्यैन्दो कति नाम नाणकनदीदानाभिविन्ध्याटवीसध्यामारतनिर्झरप्रसृतयस्तेभ्य किमात्र मया ॥ ११ ॥

कलिङ्गेश्वर

आश्चर्यानमहोत्सवस्य विनतक्षोणीभृता मूर्तिमान्विश्वासो नयनोत्सवो मृगदृशा कीर्तेः प्रकाशः परः । आनन्दः कलिताकृतिः सुमनसा वीरश्रियो जीवितं धर्मस्यैष निकेतनं विजयते वीरः कलिङ्गेश्वरः ॥ १२ ॥ धम्मिल्ले नवमल्लिकासमुदयो हस्ते सिताम्भोरुहं हारः कण्ठतटे पयोधरयुगे श्रीखण्डलेपो घनः । एकोऽपि त्रिकलिङ्गभूमितिलक त्वत्कीर्तिराशिर्ययौ नानामण्डनतां पुरंदरपुरीवामभ्रुवां विग्रहे ॥१३॥

कल्याणदास

कीर्तिस्वःतरङ्गिणीहिमगिरिर्निधानदीरक्ष्मार्लावण्यामृतभाजनं रसिकनावहौरत्नालङ्कुन । कान्तापाङ्गकुरङ्गस्थली तरुणनारीस्थलीविलासाम्बुज जीयाद्विश्वविभूषण नरपति कल्याणदासाभिध ॥ १४ ॥

कपिलेन्द्र

विस्फार्य व्योमगङ्गातटलहरीकैतवात्केसरालीरङ्गेऽस्मिन्क्रोडदेशे हिमकरपटलोन्मण्डलीह्यूल पुच्छम् । दिङ्नागारम्भस्तम्भस्वर विशदयशःकेसरी कापिलेन्द्र ब्रह्माण्डारण्यवीथीगिरिगहनदरीसद्मनी मज्जनीति ॥ १५ ॥ वेल्लद्दुत्तुङ्गहेलादलितधरणिभृद्वाहिनीकोटिपूरैरद्वैताविर्भवत्प्रबलजलनिधि प्लावनायोज्जृम्भे । सान्द्रा मेदिनीय प्रबलभुजबलौद्धतस्य द्रुहास्यज्वालाभि सततं येन दहति वडवाग्निर्होनेन घेना (?) ॥ १६ ॥

कार्तवीर्य

कालागुरुस्तनाशपरिवर्धनानि जाम्बूनदाभ्यञ्जने त्वदीये । श्रीकार्तवीर्य प्रथम पतन्ति प्रत्यर्थिपृथ्वीपतय पतङ्गा ॥१७॥

कुसुमेन्द्रसाहि

वार श्रीकुसुमेन्द्रसाहिनृपते प्रौढप्रतापो वर कन्या काचन मालवक्षितिपते सामान्यलक्ष्मीरियम् । तस्या वेषधरमहन्त्र समये तत्कुम्भसम्भारन कर्तुं मङ्गलवाद्यघन विरचितु मित्रा वय प्रेषिता ॥ १८ ॥

१ कृताम्बर- २ सज्जन् ३ वैडूर्ये ४ कम्भारेण

कृष्ण

श्रीकृष्ण त्वत्प्रतापेन प्रतप्ताङ्गीर्दिगङ्गना । दिग्गजा वीजयन्त्येव कर्णतालै पुन पुन ॥ १९ ॥ मन्देऽरण्ये कुम्भीगिरिगुहागह्वरे पर्यटन्ती विद्या दृष्टं किमपि चरणे वासुदेवस्य कीर्ति । इन्दौ कुन्दे कुमुदमुकुले चामरे चन्दने वा दत्त्वा दत्त्वा मृदुनि पुरत पादमेषा प्रयाति ॥ २० ॥ क्षीरक्षालितपाञ्चजन्यकिरणश्रीसंनिभवैकशा श्रीकृष्णार्जुनसारथेऽसुररिपो त्वत्कीर्तिविस्फूर्तय । कैलासन्ति हिमाचलन्ति विकसत्कुन्दन्ति कन्दन्ति च क्षीरोदन्ति हलायुधन्ति विबुधाहारन्ति हीरन्ति च ॥ २१ ॥ त्वद्धाटुद्भूतधूल्य करिकरनिकरै सीकराश्च प्रभूता व्योम व्याप्य समन्तात्प्रसृमरमकरं तत्र पङ्कोऽद्भुतोऽभूत् । आच्छाद्य सुरै क्ष्मा तत्र मज्जनकृते स्फाटिकीभि शिलाभिर्बद्ध पन्थास्तदानीं सुरसरिदिति त मानवा मानयन्ति ॥ २२ ॥

गुर्जराधीश

कालिन्दि ब्रूहि कुम्भोद्भव जलधिरहं नाम गृह्णासि कस्माच्छत्रोर्मे नर्मदाऽहं त्वमपि कथमहो मत्सपत्न्याश्च नाम । मालिन्यं ब्रूहि किं ते प्रविरलविगलत्कज्जलैर्मालवीनां नेत्राम्भोभि किमासौ समजनि कुपितो गुर्जराणामधीश ॥२३॥

चोलेन्द्र

त्वत्खड्गखण्डिततनूपवनिलासिनीना भूपा भवन्त्यभिनवा भुवनैकवीर । नेत्रेषु कङ्कणमयोरसु पत्रवल्ली चोलेन्द्रसिंह तिलक करपल्लवेषु ॥ २४ ॥ निद्रानिर्नष्टरात्रि स्तनकलशयुग चुम्बित चञ्चरीकैस्तत्रासोल्लासलीला किसलयमनसा पाणय कीरदष्टा । तद्भोपाधालपल्य पिकनिनदधिया ताडिता काकलोकैरित्थं चोलेन्द्रसिंह त्वदरिमृगदृशा नाप्यरण्यं शरण्यम् ॥ २५ ॥

जगद्देव

कच्छ प्रपच्छ पान्थ कथय मम सखे नास्ति स क्वापि देशो यत्र नो यत्र याचनीर्भवति भुवि खगादेति स प्रत्युवाच । नीते मेरौ समाप्ति कनकवितरणे श्रीजगद्देवनाम्ना सूर्येऽस्तं तद्विहितेऽस्मिन्कतिपयदिवसैर्वासरद्वैतसृष्टि ॥ २६ ॥

जनक

ज्याघात कार्मुकस्य प्रभवति करतल कण्ठमोंकारनादस्तेजो भाति प्रतापाभिधमवनितले ज्योतिरालीयमन्त । राज्य सिंहासनश्री शममपि परम भक्ति पद्मासनश्रीर्येषां ते यूयमेते निमिकुलकुमुदानन्दचन्द्रा नरेन्द्रा ॥ २७ ॥

१ नर्मदाया मद्गृहस्य च संवादोऽयम् २ यमुनया भगिन्या समुद्रेण कथितवीतिबुद्धे कोपात्कुपितः नर्मदाया उत्तरम्—३ कुम्भोद्भव अगस्त्यमुने ब्रूहि इति ३ रजः ४ बन्धनम् पक्षे,–चन्दनम् ५ पद्मयुक्त, पक्षे,–धनिकरचना ६ निद्रायुक्त ८ शरन्, पक्षे,–स्नानभूषान् ७ अपदस्थानम्

सविभाव्य सद्य वैकुण्ठकण्ठीरव त्वद्यादावलिमि सखीभिरिव किं तद्धर्मपात कृत ॥ ५२ ॥ स्नातस्त्वद्रिपुरक्तपाथसि यशो धौताम्बर धारयँल्लक्ष्मीश त्वदरातिवक्त्रकमलैर्भूदेवता पूजयन्। जुह्वचैतदसृक्प्रकोपदहने युष्मत्प्रतापोदय शत्रुच्छन्नधरार्य दर्पयशसा प्राणाहुतीराददे ॥ ५३ ॥ कीर्ति श्रीनरसिंह ते त्रिपथगा तत्रोदित कैरव चान्द्र मण्डलमत्र नीलमिव यच्चञ्चद्भृङ्गवृन्द विधु। यद्वा त्वद्दलितारिवृन्दतरुणीनिश्वासधनाम्रे स्थल चन्द्रस्तत्र विभाति नीलमिव यद्धूम स मन्यामहे ॥ ५४ ॥ अन्तर्विष्णोस्त्रिलोकी निवसति फणिनामीश्वरे सोऽपि शेते सिन्धो सोऽप्येकदेशे तमपि चुलुकयां कुम्भयो निश्चकार । धत्ते खद्योतलीलामयमपि नभसि श्रीनृसिंह क्षितीन्द्र त्वत्कीर्ते कर्णनीलोत्पलमिदमपि च प्रेक्षणीय विभाति ॥ ५५ ॥ नृत्यद्भर्गाट्टहासप्रचयसहचरैस्तावकीनैर्य शोभिर्धावल्य नीयमाने त्रिजगति परित श्रीनृसिंहक्षितीन्द्र। नेदीयर्देव नाभीकमलपरिमलप्रौढिमासादयिष्यदेवाना नाम विष्यत्कथमपि कमलावामुकस्तारबोध ॥५६॥ श्रीमद्वैकुण्ठकण्ठीरव तव निनदाकर्णनत्रासधावच्छके मोद्भिन्नगण्डस्थल विगलदतिस्वच्छमुक्तामणीनाम्। माला तारावलीय विलसति च पतद्दानपाथ पयोधिर्नो चेत्कस्मा नु तारावलिरिय लवण साग-रोऽस्यो श्रुतस्य ॥ ५७ ॥ द्विर्भाव पुष्पकेतोर्विबुधविटपिना पौनरुक्त्य विकल्पश्चिन्तारत्नस्य वीप्सा तपनतनुभुवो वासवस्य द्विरुक्ति । द्वैत देवस्य दैत्याधिपमथनकलाकेलिकारस्य कुर्व-न्नानन्द कोविदाना जगति विजयते श्रीनृसिंहक्षितीन्द्र ॥५८॥

## परशुराम

आदर्शाय शशाङ्कमण्डलमिद हर्म्याय हेमाचल दीपाय द्युमणिं महीमिव कथ नो भिक्षवे दत्तवान्। दित्साप्लवित प्रमोदसलिलव्याकीर्णनेत्राम्बुजो जानीमो,भृगुनन्दनस्तदखिल न प्रायशो दृष्टवान् ॥ ५९ ॥ गोनाचारविचारपारगतया वृद्धाभिरादिष्टया मात्रा वस्तुषु तेषु तेषु पुरत प्रसारितेषु क्रमात्। अन्नप्राशनवासरे सरभस वक्षोमरोत्सर्पिणा येनात्त धनुरी क्षिताश्च सपदि क्षत्रावतसा दिश ॥६०॥ तन्वन्ती तिमिरद्युति कृतवती प्रत्यर्थिचक्रव्यथामेषा मार्गण तावकी विजयते निस्त्रिं शधारा निशा ॥ युद्धेषु द्धविपक्षपक्षविदलत्कुम्भीन्द्रकुम्भस्थल भ्रश्यन्मौक्तिककैतवेन परितस्तारावली वर्षति ॥ ६१ ॥

## पाण्ड्य

तवाङ्गणे सुन्दर वीर पाण्ड्य मतगजा गूढहलिनो विभान्ति । आवासदानादरिभूपतीनामाशान्तशैला इव सापराधा ॥ ६२ ॥ विन्ध्यादि करसाधनी निरुपमो रत्ना कर कोशभृत्सौगन्धी मलयाचल परिचरा सर्वेऽपि विद्याधरा । विश्वाशापरिपूरण वितरण देशोऽप्यहो दक्षिण पाण्ड्याखण्डल वीर पाण्ड्य भवत किं किं न लोकोत्तरम् ॥ ६३ ॥ एतद्दन्तिबलैर्विलोक्य निखिलामालिङ्गिताङ्गीं भुव सभामाङ्गणसीम्नि जगमगिरिस्तोमभ्रमाधायिभि । पृथ्वीन्द्र पृथुरेतदुग्रसमरप्रेक्षोपनम्रामरश्रेणीमध्यचर पुर क्षितिधरक्षेपाय धत्ते धियम् ॥ ६४ ॥

## पारसीकक्षितीश

यदपि कटकयात्रारोधि पाथोधिना ते दिशि दिशि मम पत्या पारसीकक्षितीश । तदपि कुरु सुधा नो जीवितान्त नितान्त कथयति बहुभार्ये नैकनारीवियोग ॥ ६५ ॥

## पृथ्वीराज

मन्दश्चन्द्रकिरीटपूजनरसे तृष्णा न कृष्णार्चने स्तम्भ शमुनितम्बिनीप्रणतिषु व्यग्रो न धातुर्गृहे। अस्माक परमर्दनोऽस्ति यदने न्यस्तेन सरक्षित पृथ्वीराजनरेश्वरादिति तृण तत्पत्तने पूज्यते ॥ ६६ ॥

## वल्लालिदास

वल्लालिदास भवत शुभनामवर्णा पञ्चेषुपञ्चविशिखा इति नितम्बिनीषु । प्राणाति बन्धुषु विरोधिषु पाण्डवन्ति देवद्रुमन्ति कविपण्डितमण्डलीषु ॥ ६७ ॥

## वल्लाल

वल्लाल क्षोणिपाल त्वदहितनगरे संचरन्ती किराती कीर्णान्यालोक्य रत्नान्युरुतरखदिराङ्गारशङ्काकुलाङ्गी । मुक्त्वा श्रीखण्डखण्ड तदुपरि मुकुलीभूतनेत्रा धमन्ती श्वासामोदानुयातैर्मधुकरनिकरैर्धूमशङ्का बिभर्ति ॥ ६८ ॥

## वाङ्गालक्षोणिपाल

आग्नेयास्त्रप्रवीणप्रबलमृगमदा शत्रुसंक्षोभदक्षा यस्य प्रौढप्रतापानलबहलशिखास्तिघनत्व प्रयान्ति । सोऽय प्राचीपयोधिप्रहितकरततीतूर्णसपूर्णकोपो वाङ्गालक्षोणिपालस्त्रिभुवनजनतागीतकीर्तिप्ररोह ॥ ६९ ॥

## वीसल

आ विन्ध्यादा हिमाद्रेर्विरचितविजयस्तीर्थयात्राप्रसङ्गादुद्ग्रीवेषु प्रहर्तानृपतिषु विनमत्कन्धरेषु प्रपन्न । आर्यावर्तं यथार्थं पुनरपि कृतवाम्लेच्छविच्छेदनाभिर्देव शाकम्भरीन्द्रो जगति विजयते वीसल क्षोणिपाल ॥ ७० ॥

## भावसिंह

यस्यासि कोपपुञ्जे वसति खुरपुटे वाजिना गन्धवाहो लक्ष्मी सम्प्रेद्दृष्टौ कमठकुलमणेर्वाचि वाचामधीशा। रौक्षे कौक्षेयकाग्रे क्षपितरिपुगणे कोपनोऽसौ कृतान्त करत श्रीभावसिंह प्रबलमरभुजामाश्रय नाश्रयेत ॥ ७१ ॥

## भीम

रुधिरविसरप्रसाधितकरवालकरालरुचिरभुजपरिघ । झटिति भ्रुकुटिविटङ्कितललाटपट्टो विभाति नृपभीम ॥ ७२ ॥

१ विन्ध्योदरे २ देरे ३ ज्योतिरिङ्गण ४ विद्यारस ५ सदृशी ६ दीप्तिवत्पुष्ठ स्तबे

१ वणगवानाम् २ महती ३ राज्ञामे

### भैरव

धनानि विद्वत्कविमण्डलीषु पञ्चेषुबाणानपि कामिनीषु । वर्षन्ति वज्राण्यरिधोरणीषु श्रीभैरवक्षोणिमणे कटाक्षाः ॥ ७३ ॥

### भोज

त्वच्चित्ते भोज निर्व्याजं द्वयं तृणकणायते । क्रोधे विरोधिनां सैन्यं प्रसादे कनकोच्चयः ॥ ७४ ॥ भोज त्वद्दानपाथोधौ दरिद्रस्य निमज्जतः । न कोऽपि हि भुजालम्बं दत्ते सेऽभयदायकम् ॥ ७५ ॥ निजानपि गजान्भोज ददानं प्रेक्ष्य पार्वती । गजेन्द्रवदनं पुत्रं रक्षत्यथ पुनःपुनः ॥ ७६ ॥ प्रतापभीत्या भोजस्य तपनो मित्रतामगात् । और्वो वाडवतां धत्ते तडित्क्षणिकतां श्रिता ॥७७॥ भोज त्वत्कीर्तिकान्ताया नभोभालस्थितं महत् । कस्तूरीतिलकं राजन्गुणागारं विराजते ॥ ७८ ॥ अस्य श्रीभोजराजस्य द्वयमेव सुदुर्लभम् । शत्रूणां शृङ्खलैर्लोहं ताम्रं शासनपत्रकैः ॥ ७९ ॥ धारेश त्वत्प्रतापेन पराभूतस्त्विषांपतिः । सुवर्णपानव्याजेन देव त्वामेव सेवते ॥ ८० ॥ त्वद्यशोजलधौ भोज निमज्जनभयादिव । सूर्येन्दुबिम्बमिषतो धत्ते कुम्भद्वयं नभः ॥ ८१ ॥ शुक्तिद्वयपुटे भोज यशोब्धौ तव रोदसी । मन्ये तदुद्भवं मुक्ताफलं शीतांशुमण्डलम् ॥ ८२ ॥ अद्य धारा सदाधारा सदालम्बा सरस्वती । पण्डिता मण्डिताः सर्वे भोजराजे भुवं गते ॥ ८३ ॥ श्रीभोज साम्यं तव कल्पवृक्षः सदा वदान्योऽपि कथं प्रयाति । यतो भवद्दानसुपुष्टविप्रद्रव्येन कुक्षिंभरिरस्य भर्ता ॥ ८४ ॥ भोजप्रतापं तु विधाय धात्रा शेषैर्निरस्तैः परमाणुभिः किम् । हरः करेऽभूत्पविरम्बरे च भानुः पयोधेरुदरे कृशानुः ॥ ८५ ॥ भोजप्रतापाग्निरपूर्व एष जागर्ति भूभृत्कटकस्थलीषु । यस्मिन्प्रविष्टे रिपुपार्थिवानां तृणानि रोहन्ति गृहाङ्गणेषु ॥ ८६ ॥ यथा यथा भोजयशो विवर्धते सितां त्रिलोकीमिव कर्तुमुद्यतम् । तथा तथा मे हृदयं विदूयते प्रियालकालीधवलत्वशङ्कया ॥ ८७ ॥ पन्थाः संहर दीर्घतां त्यज निजं तेजः कठोरं रवे श्रीमन्विन्ध्यगिरे प्रसीद सदयं सद्यः समीपे भव । इत्थं दूरपलायनश्रमवतीं दृष्ट्वा निजप्रेयसीं श्रीमद्भोज तव द्विषः प्रतिदिनं जल्पन्ति मूर्च्छन्ति च ॥ ८८ ॥ धाराधीश धरामहेन्द्रगणनाकौतूहली यामयं वेधास्त्वद्गणने चकार खटिकाखण्डेन रेखां दिवि । सैवेयं त्रिदशापगा समभवत्त्वत्तुल्यभूमीधराभावात्तु त्यजति स्म सोऽयमवनीपृष्ठे तुषाराचलः ॥ ८९ ॥ राजमुञ्जकुञ्जप्रदीप सकलक्ष्मापालचूडामणे युक्तं सचरणं तवाद्भुतमणिच्छत्रेण रात्रावपि । मा भूत्त्वद्वदनावलोकनवशाद्व्रीडाभिनम्रः शशी मा भूच्चेयमरुन्धती भगवती दुःशीलताभाजनम् ॥ ९० ॥ छन्नं सैन्यरजोभरेण भवतः श्रीभोजदेव क्षमारक्षादक्षिण दक्षिणक्षितिपतिः प्रेक्ष्यान्तरिक्षं क्षणात् । निःशङ्को निरपत्रपो निरनुगो निर्बान्धवो निःसुहृन्निःस्त्रीको निरपत्यको निरनुजो निर्हाटको निर्गतः ॥ ९१ ॥ मुक्ताः केलिविसूत्रहारगलिताः संमार्जनीभिर्हृताः प्रातः प्राङ्गणसीम्नि मन्थरचलद्बालाङ्घ्रिलाक्षारुणाः । दूराद्दाडिमबीजशङ्कितधियः कर्षन्ति केलीशुका यद्विद्वद्भवनेषु भोजनृपतेस्तत्त्यागलीलायितम् ॥ ९२ ॥ विद्वद्वृन्दगुणानुरूपविभजत्त्यागैककल्पद्रुमे स्वर्गं यामिनि भोजराजनृपतौ विद्यानवद्यात्मनि । दातारो भुवि नैव भूमिवलये मा सन्तु किं तावता ज्ञातारोऽपि न सन्ति हन्त नितरामेतावता दूयते ॥ ९३ ॥ स्पष्टाकृष्टासिपिष्टोत्कटकरटिघटाकुम्भकूटावटान्तर्निष्ठ्यूतासृक्तटिन्यास्तटनिकटरटत्कोणपादाट्टहासः । भोजेन्द्र त्वद्रणक्ष्मा क्षतभटविकटोरःस्थलत्रोटकुप्यत्कबन्धत्रोटिकोटिप्रकटचटचटाशब्दरौद्रोऽभवत्प्राक् ॥ ९४ ॥ भो भो श्रीभोजदेव श्रयत विनयतः शत्रवः क्षत्रवर्गाः प्राणत्राणाय नौका न भवति भवतां काप्यरण्यं शरण्यम् । मत्वा मातङ्गकुम्भद्वितयमिति पुरा क्रूरवृत्तिर्भिनत्ति क्षुद्रः शुद्धान्तकान्ताकुचकलशयुगं यत्र सा सिंहशावः ॥ ९५ ॥ नीरक्षीरे गृहीत्वा सकलखगपतीन् याति नालीकजन्मा चक्रं धृत्वा कराब्जे सकलजलनिधौ चक्रपाणिर्मुकुन्दः । सर्वानुद्धृत्य शैलान्दहति पशुपतिर्भालनेत्रेण पश्य व्याप्ता त्वत्कीर्तिकान्ता सकलवसुमती भोजराज क्षितीन्द्र ॥ ९६ ॥ स्वर्गाद्गोपाल कुत्र व्रजसि सुरमुने भूतले कामधेनोर्वत्सस्यानेतुकामस्तृणचयमधुना मुग्ध दुग्धं न तस्याः । श्रुत्वा श्रीभोजराजप्रचुरवितरणं व्रीडशुष्कस्तनी सा व्यर्थो हि स्यात्प्रयासस्तदपि तदरिभिश्चर्वितं सर्वमुर्व्याम् ॥ ९७ ॥ कूर्मः पातालगङ्गापयसि विहरतां तत्तटीरूढमुस्तामादत्तामादिपोत्री शिथिलयतु फणामण्डलं कुण्डलीन्द्रः । दिग्मातङ्गा मृणालीकवलनकलनां कुर्वतां पर्वतेन्द्राः सर्वे स्वैरं चरन्तु त्वयि वहति विभो भोज देवीं धरित्रीम् ॥ ९८ ॥

### मणिपाल

प्रामाण्यं परतो न शक्तिगणना सादृश्यलोपः सदा कार्यं चेश्वरकर्तृ नानुमितौ ज्ञानं विशिष्टात्मकम् । सर्वं न्यायनयानुसारि विबुधे चैतन्यनाशोपमाचक्षीत न्मणिपाल भूप भवतो नैयायिकत्वं कुतः ॥ ९९ ॥

---

१ वर्षं  २ गण्डस्थलद्वितयम्  ३ द्यावापृथिव्यौ  ४ इन्द्र  ५ कुत्ररगिरिः  ६ 'धाडू' इति प्रसिद्धा कठिनीशर्करा

१ सुरतक्रीडायां विच्छिन्नसूत्राद्धारात्पतिताः  २ अपसारिताः  ३ जीन  ४ मद्य

### मल्लशाह

मृग प्रमीलल्लोचन पिक कृतोक्तिमोचन श्रितानति कृतातितिर्मरालिकास्वल्द्गति । निरीक्ष्यते लसन्मते सुमल्ल शाहभूपते तवारिकामिनी वृथाद्भुत हुताटवी यथा ॥ १०० ॥ पलायिता तवारिवामलोचना यदा यदा पुलिन्दनायकैः सुलिप्तकाल्कुदसायकैः । विहाय नासिकासु मौक्तिकं स्तन च मौक्तिकी विलुण्ठिता पुमर्थपक्षमेह मल्लभूपते ॥ १०१ ॥ आदायादाय मुक्तास्तदनु शिखिधियादाय माणिक्यवर्गं धूमभ्रान्ति वहन्त्य स्तनदनकमला मोदलुब्धालिवृन्दे । पश्यतु भिल्लय प्रवृत्ता सरभसमस कृपद्विषत्स्तनेषु भूम किं कीर्तिपूर घवलितभुवन मल्लशाहस्य तस्य ॥ १०२ ॥

### माणिक

यश शशाङ्काभ्युदये प्रवृद्धो द्विपद्वधूनेत्रजलाम्बुराशि । नष्टं हि दारिद्र्यतमो बुधाना तव क्षितौ माणिक भूमिपाल ॥ १०३ ॥ सदर्भहारैर्भवता प्रदत्तैर्मदङ्गना कण्ठतटामहारै । श्रीमाणिक्यक्षोणिपते प्रतुष्ट यथा यशो गायति तद्विधेहि ॥ १०४ ॥ सजाते द्रवरूपता हि रजताद्रौ स्वर्णशैले द्रुत भूमीपालललाम माणिकविभो प्रौढे प्रतापानले । योगेऽभूदनयो सुपाण्डुरुचि सातेऽरिका ताजनैर्नीता स्वीयकपोलयोश्च निरहव्याजेन गोपायते ॥ १०५ ॥ भोगासक्तैर्कचैता भयनशसुक्ष्म्रुक्तितिह्रा स्वाश्रिताना भोगाभ्याय यच्छञ्जगति भवत साधु भण्डारतिश्च । भूपाना ग्लानिकर्ता मदनगजमयध्वसदेहो हि महाकीर्णं श्रीमाणिक्येन्द्रस्त्वमिन तव रिपुस्तव दम्म प्रतीम ॥ १०६ ॥ सङ्ग्रामक्षोणिदम्य चपलरिपुचमूसिन्धुकीलालमाला पीत्वा काल कृपाणोऽम्बुद इपसमर गर्जते वीरघोषैः । वर्षत्युद्दामगौर दिशि दिशि तव भो कीर्तिनारीभकुम्भप्रोय मुक्ताहिमाश्मच्छुरित भरिततेर्माणिक्क्षोणिपाल ॥ १०७ ॥

### माधव

सत्यासक्तमना गुणाकरलताकीर्णो न दीनाश्रयोऽरिष्टप्रसपराजयश्च सुमनोवृन्दैरल वन्दित । नानास्थानकलाप्रधानमहिमा नित्य सदानन्दक श्रीमान्माधव एव माधव सम क्षोणीतले राजते ॥ १०८ ॥

### मानसिंह

काश्री काश्री न धत्ते कलयति न दृशा केलितल्प कलिङ्गी सिन्दूरं दूर एव क्षिपति करतलन्यस्तमाश्री पुरश्री । सौराष्ट्री मार्ष्टि भूप सपदि नयनयो रक्तता रक्तिमान कार्णाटी कर्णिकाया मन्नियति मनो मानसिंहप्रयाणे ॥ १०९ ॥

### माल्वाखण्डल

पर्यङ्को राजलक्ष्म्या हरितमणिमय पौरपाञ्चेसरश्च सङ्ग्रामत्रासताम्यन्मुरलपतियशोहमनीलाम्बुराह । मध्यप्रत्यर्थिवशोल्बणविजयकरिज्ञानदानाम्बुपट्ट खड्ग क्ष्मासौविदल्ल समिति विजयते मालवाखण्डलस्य ॥ ११० ॥

### मुकुन्ददेव

करवारिरुहेण सधुनाने तरवारिं नृपतौ मुकुन्ददेवे । यरयन्त्यमरयुवतीतरुण्य प्रथम काञ्चनपारिजातमाला ॥ १११ ॥

### मुञ्ज

लक्ष्मीर्यासवि गोविन्दे वीरश्रीर्वीरवेश्मनि । गते मुञ्जे यश पुञ्जे निरालम्बा सरस्वती ॥ ११२ ॥

### मुदाफरशाह

आकाश प्रसर प्रसर्पत दिशस्त्व पृथ्वि पृथ्वी भव प्रत्यक्षीकृतमादिराजयशसा युष्माभिरुज्जृम्भितम् । श्रीमुदाफरशाहपार्थिवयशोराशे समुज्जृम्भणाद्बीजोच्छ्वासविदीर्णदाडिम दशा ब्रह्माण्डमारोक्ष्यति ॥ ११३ ॥

### राजबहादुर

नित्यं वृद्धिमुपैषि सकलयसे सर्वा कला सर्वदा सानन्द कुमुदाकर वितनुषे नास्ते कलङ्कस्तव । सर्वाशा परिपूरयन्समुदयं धत्सेऽनिश सर्वतो न श्रीराजबहादुरेन्द्र नृपते चन्द्राधिकस्त्व कथम् ॥ ११४ ॥

### राजेन्द्रसिंह

मूर्धा कल्याणवाही करजितनसुध सर्वदा पूर्णकामो विख्यात कर्णवृत्त्या वचसि न च पटुश्चिपाकानुभावी । कोपापेक्षी परस्त्रानुचितबहुकथः सर्वदा पूर्णलोक इत्थं राजेन्द्रसिंह स्वमिव तव रिपुस्तव कम्पं प्रतीम ॥ ११५ ॥

### रामचन्द्र

एकादशरुद्राणामेका गौरीत्यनौचितीं मत्वा । राघव नृप तव यशसा दशापि गौरीकृता हरितं ॥ ११६ ॥ रत्नैरिभवनलिखिता सीतामाहर्तुमुद्भुत्य । कपिकौणपमण्डल्यो शिर शिव भूयो भवति सरम्भा ॥ ११७ ॥ शरासने सायकमादधाने श्रीरामचन्द्रक्षितिपालमौलौ । सुरापकाङ्गनार्ना वरलास्ताना वामानि नेत्राणि परिस्फुरन्ति ॥ ११८ ॥ गायन्तु किंनरगणा सह किंनरीभि श्रीरामचन्द्र शिखरेषु हिमाचलस्य । श्वेतं दुकूलदलवालमृणालनालनीहारहारहरहासमितं यशस्ते ॥ ११९ ॥ नालीकमङ्कदतीव नेत्रीनयनचुर्नेक्षोभो नेवसुधाविमैरक्हेतु । राजा किमिन्दुरपि नार्यमिमानहारी राजा पर जयति राघवसार्वभौम ॥ १२० ॥ नृपतिमुकुटरत्न त्वत्प्रयाणप्रशस्ति लवगपदनमङ्गनिर्मराक्रान्तमोर्गं । लिखति दशनटङ्कैरुन्नमद्भिर्नमद्भिर्जरठकमठमर्तुर्कर्परे सर्पराज ॥ १२१ ॥ रघुतिलक नृपाल त्वद्विप क्षोणि

१ वसुदरवल्वा वसुमतीरहाने

१ दिश २ अलीकमङ्गकृत, पक्षे,-कमलविकासकर ३ अनाथबन्धु, पक्षे,-नवीन समुद्रसङ्गबन्धु ४ क्षत्रियश्रेष्ठ, पक्षे,-नक्षत्र नायक ५ वसुधेश्वरस्य वारणम् पक्षे,-नवीनायाः सुधाया यो विभवस्तस्य सुरवारणम् ६ शत्रुमानहारी, पक्षे,-नारीणां मानहारक ७ शरीरम् ८ कपाले ९ शेषराज

पल्प्रतिलसदपकीर्तिश्यामले विश्वजाले । भगवति भजमाने कृष्णतां शूलपाणौ त्रिशुदधिगिरिपुत्र्यौ चक्रतुलक्ष्म विघ्न ॥ १२२ ॥ अधाक्षीनो लङ्कामयमयमुदन्च तमतरद्विशल्य सौमित्रेरयमुपनिनायौषधिवनम् । इति स्मार स्मार त्वदरिनगरीभित्तिलिखित हनूमन्त दन्तैर्दशति कुपितो राक्षसगण ॥ १२३ ॥ यदि क्षुण्ण पूर्वैरिति जहति रामस्य चरित गुणैरेतावद्भिर्जगति पुनरन्यो जयति क । स्वमात्मान तत्सद्गुणगरिमगम्भीरमधुरस्फुरद्वाग्ब्रह्माण कथमुपकरिष्यन्ति कवय ॥ १२४ ॥ झगिति जगतीमागच्छन्त्याः पितामहविष्टपान्महति पथि यो देव्या वाच श्रम समजायत । अथ कथमसौ मुक्ष्वेदेन न चेदवगाहते रघुपतिगुणग्रामश्लाघासुधामयदीर्घिकाम् ॥ १२५ ॥ लज्जा कीर्तिर्जनकतनया शैवकोदण्डभङ्गे तिस्र कन्या निरुपमतया भेजिरे रामचन्द्रम् । अन्त्या पाणिग्रहणसमये ज्यायसी जातकोपा भूपै सार्धं खलु गतवती मध्यमाऽथो दिगन्तान् ॥ १२६ ॥ गेहे गेहे सुभग भवतो रामभद्र क्षितीश रत्नामालिरिय स्वमपि सविधे सस्पृह भावयन्त्यः । तस्मिन्नाकस्मिकमुपगते वल्लभे भीतिभाज पौष्प चाप तव करतले वेपमाना लिखन्ति ॥ १२७ ॥ अहो रघुशिरोमणेरभिनवप्रतापावलिप्रचण्डकिरणप्रथाप्रसरसाध्वसादाश्रयम् । सुराधिपतिरम्बुदान्कमलमिन्दिरा सेवते हिमांशुरपि चन्द्रमा सततमम्बुधौ मज्जति ॥ १२८ ॥ कीर्ति श्रीरघुवशरत्न भवत सर्वाङ्गिनीगाहिनी दिक्पालानखिलान्परीत्य वधती पाण्यो प्रतापानलम् । सप्ताम्भोनिधिमण्डलान्यधिगता त्वय्येकपत्नीव्रतस्यात्यै विष्णुपद स्पृशत्यनुदिन शेषस्य शीर्षाण्यपि ॥ १२९ ॥ कीर्तौ व्याप्तिमवेत्य वैरिवनिताबाष्पोदधे साधनाद्दुग्धे पृथिवीभुजा परिवृढे शश्वद्विपक्षे स्थितम् । सर्वक्ष्मापतिमौलिमण्डनमणे श्रीरामचन्द्र प्रभो चित्र पश्य तव प्रतापदहन जानन्ति सत्तार्किका ॥ १३० ॥ श्रीराम त्वदनेकचित्रचरितप्रोद्दामकीर्तिश्रुतिप्रागल्भ्यादवधूतमूर्ध्नि सकलत्रैलोक्यलोकेऽपि यत् । अक्षोना फणिनस्तदेतदुचित नो चेदहिस्वामिना व्याधूते शिरसि क्व भू क्व गिरय क्वामी दिशामीश्वरा ॥ १३१ ॥ आत्त्वा भूवलय दशास्यदमन त्वत्कीर्तिहसी दिव याता ब्रह्ममरालसगमवशात्सा तत्र गर्भिण्यभूत् । पश्य स्वर्गतरङ्गिणीपरिसरे कुन्दावदात तया मुक्त भाति विशालमण्डकमिद शीतद्युतेर्मण्डलम् ॥ १३२ ॥ ये मज्जन्ति निमज्जयन्ति च परास्ते प्रस्तरा दुस्तरे वार्धौ वीर तरन्ति वानरभटान्संतारयन्तेऽपि च । नैते ग्रावगुणा न वारिधिगुणा नो वानराणा गुणा श्रीमद्दाशरथे प्रतापमहिमा सोऽय समुज्जृम्भते ॥ १३३ ॥ कीर्ति श्रीरघुवशदीप भवतो दूती मुरारे प्रियो यस्मात्तुभ्यमदात्तदादि गिरिशोऽभूदर्धनारीश्वर । ब्रह्माभूच्चतुरानन सुरपतिर्भ्रष्टु सहस्रे दधौ स्कन्दो मन्दमतिश्चकार न करस्पर्श स्त्रिया शङ्कित ॥ १३४ ॥ एक काञ्चनभूधर सुवलय वास सुधावारिधिस्तीर तैरैकराजमण्डलमिद सप्राप्य सत्कुण्डलम् । दूरेऽस्यापि च तेन तेन सदृश त्वा भूषण चापर द्यौ मौनप्रहिलेय याचतितरा श्रीराम कीर्तिस्तव ॥ १३५ ॥ सग्रामो दिवसायते तव भुजः पूर्वाचलेन्द्रायते त्वत्कोधोऽप्यरुणायते तव लसच्छौर्य प्रकाशायते । त्वद्वैरी तिमिरायते सद-

१ स्वसतीत्वमनशापनाय दिव्यकरण शुद्धमेव अत्राय भाव —या हि स्त्री दिव्य कर्तुमिच्छति सा पूर्व गङ्गा गाहते, अपर देवता प्रदक्षिणीकृत्य पाण्योरनल दधती सप्तमण्डलान्यतिक्रामति, ततो विष्णुपद स्पृशति, तथा सर्प कर्षति, तद्वदिय त्वत्कीर्तिरपि चण्डाभिराजपदविष्णुपदसर्पस्पर्शनाख्यानि पञ्च दिव्यानि स्वसतीत्वनिर्वाहाय विधत्त इति २ दस्युगण ३ कम्पित ४ शेषशिरोवधूनने भूमे पात एव स्यात्तत्स्त्रेषा गिर्यादिवस्तूना क्वापि स्थान भवेत्तस्त्रेषा भूम्याश्रितत्वात्तत्साम्य शेषाश्रितत्वादित्यर्थ

१ हस २ तीरे ३ कुन्दवत्शुभ्रकम् ४ लक्ष्मीम् ५ तदानभृति ६ महेश्वरेणेत्थ तर्कितम्—यद्यहममुना स्वपार्श्वे न स्थापयिष्यामि तदैव कीर्तिदूती लक्ष्मीमिवापहृत्य मम कामिनी गौरीमपि रामाय प्रदास्यतीति भिया स्वाङ्ग एव गौरी स्थापिता तत्प्रभृत्यर्धनारीश्वरो हर इति ख्याति ७ ब्रह्मणा स्वपत्नीरक्षणार्थं चतसृष्वपि दिक्षु मुखानि निर्मितानीति भाव ८ यतो बहूनि चक्षूपि मम चेद्भविष्यन्ति तदा स्वाप्सरस प्रलोभ्यापहर्तुमागच्छन्ती कीर्तिदूतीमवलोकयिष्यामीति भाव ९ मन्दा विवाहेऽलसा मतिर्यस्य ॥ १० यतश्चेदह कृच्छ्रेण प्राप्तिमिय परिणेष्यामि तथापि तदपहरणे मम तस्या वियोग एव भावी, तत किमनेन परिणयनारम्भेणेति विचारादिति भाव ११ ममैक काञ्चनगिरिर्दक्षिणे करे कटकोऽस्ति, वामे तु न किमपीत्येकनेत्राञ्चनवत्र शोभते पाणी, अतोऽपर तादृश वलयाख्य भूषण मह्य देहीति भावः १२ यतो म क्षेक वास उपर्यधश्चाशे परिधातु शक्यते १३ उभ्यत्वम् १४ इदमेक तारकाणा राजा चन्द्रस्तस्य मण्डल सत्कुण्डलमेक स्मिन्कर्णे सप्राप्य तत्सममपरकुण्डल द्वितीयकर्णार्थं याचति १५ दिकूपर्यन्त प्राप्तापि १६ स्त्रिया यो मान स्वपतिसौभाग्यस्वरूपस्तद्गर्वस्तेन ग्रहिला ग्रहगृहीता १७ अद्यापि या मानिनी मानग्रहगृहीता भवेत्सा विदेशस्थापि पति प्रभविष्णु तदपहर्तुं याचते यद्भूमण्डलेऽपि नाप्यते तथैव कीर्तिरप्यपर भूषण याचत इत्यर्थ १८ यथा दिवसे सूर्य प्रभाप्रसरमनासुहेति तथा त्वद्भुजभानुरपि संग्रामे त्वत्सैन्ना प्रकटयतीत्यर्थ १९ यथा भानुरुदयाचले भासते तथा भास्री त्वद्भुजे भासत इत्यर्थ २० यथारुणो रक्तवर्णोऽग्रे प्रादुर्भवति तथा क्रोधोऽपि रक्तमुखनेत्रादिना प्रादुर्भवतीत्यर्थ २१ यथा सूर्यस्योदये सर्वत्र प्रकाश प्रसरति तथा त्वत्प्रतापभानोरुदये तव शौर्य स्पष्टमुदेतीत्यर्थ २२ यथा सूर्योदये तमासि नाशमायान्ति तथा त्वत्प्रतापभानूदये तव वैरिणो दिगन्तगामिनो भवन्तीत्यर्थ

वलाहस्सूर्यका तायते त्वत्कीर्तिः कैमलायते रघुपते त्वत्खड्गचण्डद्युते ॥ १३६ ॥ अस्मात्परमन्दिरस्य चरितं यद्यप्यवाच्यं भवेत्स्वामी त्वं कथयामि तेन भवतः किंचित्प्रियादूषणम् । श्रीमद्राम नृप त्वया रणमुखे पाणिग्रहः सादरं यस्याः सासिलता परस्य हृदये दृष्टा लुठन्ती मया ॥ १३७ ॥ सत्यं सा बहुरूपिणी समभवत्सिद्धिस्वरूपा भवत्कीर्तिः श्रीरघुवंशरत्न विमला जागर्ति विश्वोदरे । क्ष्मापारे रिपुमन्दिरे नृपपुरे रत्नाकरे निर्झरे कान्तारे गिरिशेखरे विषधरागारे तथैवाम्बरे ॥ १३८ ॥ गर्वावेशविशालरावणभुजप्रोद्यत्प्रतापानलज्वालाजालनवाम्बुदः कथमसौ सीतापतिर्वर्ण्यते । यस्यारातिनृपाः कृपाणजलधौ मग्नाः पुरो गौरवादस्थुर्वर्गतयो भिन्दन्ति च पुनर्भित्त्वा रवेर्मण्डलम् ॥ १३९ ॥ भीमं यज्जलधिं जवेन हनुमानुल्लङ्घ्य लङ्कां गतो यच्चाशोकमहावनं दलितवानक्षं च यत्क्षुण्णवान् । सीतोपायनमौलिरत्नसहितं प्राप्तश्च यस्त्वामसौ तत्राप्येष भवत्प्रतापमहिमा निर्व्याजं कारणम् ॥ १४० ॥ धत्ते नायक राम तावकयशो रामे शशाङ्के भवद्वाहे स्वर्गजे हरे फणिपतौ वाण्या धृषे मे रुचिम् । अन्येषां तु तदम्बरे तदहिते तद्यज्ञने तन्मदे तत्कण्ठे च तदीक्षणे तदलके तन्नौयके तन्मये ॥ १४१ ॥ श्रीमन्नायक रामभद्र भवतः पाणौ कृपाणं रणे दृष्ट्वा यदभूदरिक्षितिभुजां तत्तत्समाकर्णय । अङ्गे वेपथुरुन्धता नयनयोर्वक्त्रे तृणं भूयसी भीतिश्चेतसि धाचि सस्तुतिकथा हस्तद्वयं मस्तके

॥ १४२ ॥ आकृष्टे कवचादहीन्द्ररसनाकल्पे कृपाणे त्वया श्रीमन्नायक रामचन्द्र भवतः प्रत्यर्थिना वेश्मसु । गाहन्ते सहसा लुलायचमरीशार्दूलशाखाचरीयक्षोरक्षशृगालकोलशैलमृगेन्द्रभल्लुकभिल्लादयः ॥ १४३ ॥ रेफं व्यञ्जनराजता तव तवाकारप्रकर्षं स्वरेष्वन्त्यस्यापि मकार विस्फुरति ते वर्गाक्षरेष्वादिता । ये संभूय निगद्यते रघुकुलालंकारहीराङ्कुरो देव क्षोणिसुतापयोधरतटीशृङ्गारहारो हरिः ॥ १४४ ॥ खेदाम्भःकणमण्डलानि सुरलीखेलोद्भवान्यन्वहं तद्वाहो रसयन्महाबल इति ख्यातिं गतो मारुतः । तं चास्वाद्य मुहुः सहस्रफणिताशाली बलीयोऽनेहिर्धत्ते कोमलकोमलैरपि फणैः श्रीरामचन्द्र स्थिरीम् ॥ १४५ ॥ श्रीरामे मृगयां गतेऽपि धनुषा बाणे समारोपितेऽप्याकर्णाततगतेऽथ मुष्टिगलितेऽप्येणाञ्चितेऽपि च । न त्रस्तं न पलायितं न चकितं नोत्कम्पितं न द्रुतं मृग्या मद्दशा करोति दयितं कामोऽयमित्याशया ॥ १४६ ॥ गाम्भीर्येण महोदयेन शरणत्राणेन मर्यादया सर्वाशापरिपूरणेन महता स्थैर्येण धैर्येण च । राम त्वामनुकर्तुमिच्छतितरां वारानिधिः किं त्वसौ पीतो वानरलङ्घितः प्रमथितो बद्धः श्रिया त्याजितः ॥ १४७ ॥ देव श्रीनृप रामचन्द्र भवतो दिग्जैत्रयानोत्सवे धावद्वीरतुरंगचञ्चलखुरक्षुण्णक्षमामण्डलात् । वातोद्धूतरजोमिलत्सुरनदीसजातपङ्कस्थलीदूर्वाचुम्बनचञ्चवो हरिहयास्तेनैव हैद्व दिने ॥ १४८ ॥ साधर्म्येण कथं गृणन्तु यमुनावेणी कृपाणी च ते श्रीमद्राम चमूवरेण्य भवतो वाग्ग्रासिद्धान्तिनः । नाकृष्टा हलिना न कालियशतकूपा न धाराजडा न च्छायाजनिता ॥ यत्नेबहुला न प्रोतभङ्गा क्वचित् ॥ १४९ ॥ आबाल्यं पतिरेष मे जगदिदं जानाति तत्त्वं पुनर्भूमध्ये समुपागता तदपि ते विस्मयते यः पतिः । वृद्धा भास गृहे वसामि सुचिरं तिष्ठन्स्थिरानेति तमास्वर्यादिव राम भूप भवतः कीर्तिर्दिगन्तं गता ॥ १५० ॥ का शृङ्गारकथा कुतूहलकथा गीतादिकानां कथा माद्यद्-

१ यथा भानोरुदये सूर्यकान्तमणिषु महातापः संजायते तथा भवदुदये सति वैरिक्षोणीहृदयेषु महापश्चात्तापो भवतीत्यर्थः २ यथा भानोरुदये कमलानि विकस्वराणि भवन्ति तथा त्वत्खड्गभानोरुदये त्वत्कीर्तिर्विकासयुक्तैवेत्यर्थः ३ तिग्मांशुत्वात्खड्गस्य सर्वथा सर्वोऽपि मत्वमस्तीति शेषः ४ परस्त्रिया ५ यतो भक्ता स्वस्वामिनः कथमपि हानिं सोढुमक्षमा ६ स्त्रीदुर्लक्षणम् ॥ परमपमानकारणमसौ भवतीमीत्यर्थः ६ यथा काचित्पाणिगृहीती परपुरुषस्य हृदये विलासं कुर्याद्यदा तस्या असतीत्वलक्षणेन पुरुषस्य महद्दूषणं लग्नं भवेत् ७ नानारूपत्वेन विश्वव्यापिन्यभूदिति भावः ८ अणिमाद्यष्टसिद्धिमती ९ यथा योगिनी सिद्धगिरिदर्यादिषु स्वकामचारिणी भवेत्तथा त्वत्कीर्तिरपीति भावः १० देदीप्यमाना ११ समूहः १२ अम्भोऽप्यनलोऽम्बुदेन शाम्यति यथा तथा तत्प्रतापाग्निरपि रामेण शामित इति भावः १३ स्वर्गयायिनो भवन्ति भयो हि यो अष्टधो निमग्नो भवति स च नीचैर्गतिरेव भवतीति प्रसिद्धम् १४ मारितवान् १५ अरक्षन्ति १६ वटभद्रे १७ टघे अवसि १८ ऐरावते १९ नयुर २० रामवधे तद्वस्त्र नीलत्वादिति भावः २१ चन्द्रशनौ राहाविन्दुः २२ कृष्णनासिकायाम् २३ नक्षत्रपथे आकाश इत्यर्थः २४ वप २५ येषां मुखे तृणं दृश्यते ते शत्रवः अपि गोवदवध्या इति भावः, २६ शिरसि करद्वयं रक्षणार्थं कृपण त इत्यर्थः

१ सदृशे २ तन्मन्दिराणां शून्यत्वेन वनचरतिरश्चां तत्र प्रवेशस्यानिवार्यत्वादिति भावः ३ वनगाव ४ व्याघ्रा ५ वानराः ६ शूकरा ७ शुकरा ८ ऋक्षा ९ व्यञ्जनेषु मेरुत्वम् १० करंगादिषु ११ शाखाभ्यासः १२ आस्वादयन् १३ यदा त्वया वैरिणो हतास्तदा त्वद्भुजयोः परिश्रमतः स्वेदः उत्पन्नस्तच्छोषणादायुर्महाबलोऽभूदिति भावः १४ शेषः १५ पृथ्वीम् १६ दूर्वाङ्कुरभक्षणरता अरुणेन प्रेरिता अपि न तूर्णं यान्ति किंतु शनैरेव अत एव ग्रीष्मर्तौ महान्तो दिवसा जायन्त इति भावः १७ बधपत्र १८ छाया सूर्यभार्या १९ पानीयवाहा २० वामनरूपम्

भूपालमालेरुद्वेल्लदुग्धर्वीचीवहल्धरा मावद्धकक्षा कटाक्षा ॥ १६६ ॥ वीर चिन्तामणिश्चेत्कनकगिरितटीजन्मभूमिर्मनश्चेत्सेक्त्री चेत्कामधेनुर्निधिकुलमखिल मूलसस्कारभृच्चेत् । वित्तेशो रक्षिता चेत्सरसिजनिलया मञ्जरी चेत्तदा साद्राम क्ष्मापाग्मौले तव भुजलतया कल्पवृक्ष सदृक्ष ॥ १६७ ॥ मन्ये मृत्यो सपत्नी जगति सुविदिता कालकूटस्य कन्या धात्री कर्कोटकस्य स्मरणभयकरी किं च वज्रस्य माता । कल्पान्ताभे पुरश्री प्रमयति भगिनी भीषणा कालरात्रेर्नूनं ते कृपाणी सुरसुरसुदृशा रामचन्द्रक्षितीश ॥ १६८ ॥

रामजाम

क्षुभ्यत्प्रत्यर्थिपृथ्वीपतिहृदयसरस्तोयशोष दधाने त्वद्दोष्णा सुप्रतापे तपति बहुगुणे रामनाम क्षितीन्द्र । सूर्या मित्रत्वमायात्ममजनि दहन कृष्णवर्त्मा निमज्जन्पारावाराम्बुपूरे निवसति वडवावह्निरन्यत्किमु धाम् ॥ १६९ ॥

रामनाथ

करनम्पितखड्गयष्टिभीमे रणसनाहितरामनाथवीर । अरिभूभृदमर्त्यसुन्दरीणामचलन्दक्षिणवामलोचनानि ॥ १७० ॥

रुद्र

कतिपयदिनस क्षय प्रयायात्कनकगिरि कृतवासरावसान । इति मुदमुपयाति चक्रवाकी वितरणशालिनि वीररुद्रदेवे ॥ १७१ ॥ कवीन्द्राणामाम प्रथमतरमेवाङ्गण भुवश्चलद्भृङ्गासङ्गाकुलकरिमदामोदमधुरा । अमी पश्चात्तेषामुपरि पतिता रुद्रनृपते कटाक्षा क्षीरोदप्रसरदुरुवीचीसहचरा ॥ १७२ ॥ भूयोभूयस्त्वदरिदलनाद्धासनाशास काशाघातैर्गतैरहह तरणेरुल्वणेषु व्रणेषु । साय साय स्नपनसलिलस्पर्शबाधासमाधावस्नालस्याकलितवपुषो रुद्र क स्यादुपाय ॥ १७३ ॥ चन्द्रोऽनेन कलङ्कितो बत वने रामोऽमुना वञ्चित कि चानेन कुलाङ्गनानयनयोर्लावण्यलक्ष्मीर्हृता । सख्यानामभिलापकस्य भवत श्रीरुद्रचन्द्र प्रभो तन्मन्ये हरिणस्य हन्त हननायाखेटकोपक्रम ॥ १७४ ॥ रुद्रस्यापि दिगम्बरस्य कृपया स्वर्गेऽमरा कोटिशो याचन्ते न कदापि काञ्चनमहो शश्वसदा भुञ्जते । एकोऽह वसुधातले न च पुनर्गेहस्य पात्र सदा याचिष्ये कथमन्यभूपनिमत श्रीरुद्रभूमीपते ॥ १७५ ॥

रूपनारायण

अये यदि समीहसे परपुरावरोध सदा समाकलय मद्वच किमपि रूपनारायण । प्रतीपनृपनागरीनयननीरकल्लोलिनी समुत्तरणचातुरी तुरगराजमध्यास्य ॥ १७६ ॥

रूपमणि

श्रीमद्रूपमणे गुणेन यदय हीनोऽपि नीतो गुरुर्गाढ गौरवमादरेण भवता तेनास्ति शम्भुर्भवान् । यत्तेनाप्यनृजु कलङ्कविकलो दोषाकरोऽपि स्फुट निशाधीशपदे विधाय विधृतश्चन्द्रोऽनिश मस्तके ॥ १७७ ॥

विक्रमार्क

तत्कृत यन्न केनापि तद्दत्त यन्न केनचित् । तत्साधितमसाध्य यद्विक्रमार्केण भूभुजा ॥ १७८ ॥ सारसवत्ता निहता ननका विरमति चरति नो कङ्क । सरसीव कीर्तिशेष गतवति भुवि विक्रमादित्ये ॥ १७९ ॥ हस्ती यस्य स्फटिकघटित भित्तिभागे स्वबिम्ब दृष्ट्वा दृष्ट्वा प्रतिगज इति त्वद्द्विषा मन्दिरेषु । दन्ताघाताद्गलितदशनस्त पुनर्वीक्ष्य सद्यो मन्द मन्द स्पृशति करिणीशङ्कया विक्रमार्क ॥ १८० ॥ कीर्तिस्ते दयिता तदीयजठरे लोकत्रय वर्तते तस्मात्त्व जगत पिता पितृधन येनाथिना त्वद्धनम् । वीर श्रीजर विक्रमार्क भवतस्त्याग न मन्यामहे कस्त्याग स्वकुटुम्बपोषणविधावर्थव्यय कुर्वत ॥१८१॥

विग्रहराज

ब्रूते सप्रति चाहुवाणतिलक शाकम्भरीभूपति श्रीमान्विग्रहराज एष विजयी सतानजानात्मन । अस्माभि करद व्यधायि हिमवद्विन्ध्यान्तराल भुव शेषस्वीकरणाय मास्तु भवतामुद्योगशून्य मन ॥ १८२ ॥

वीरभान

लङ्काधामनि वीरभाननृपते प्रेक्ष्य प्रतापोदय प्रत्यागारमधीरनीरजदृशो भूयो हुताशभ्रमात् । क्षुभ्यद्वाणि विधूतपाणि विगलन्मुक्तामणि प्रस्खलद्दाम्नश्रेणि विलोलवेणि दयित कण्ठस्थले बिभ्रति ॥ १८३ ॥ भेरीझाङ्कृतिभिस्तुरगनिनदे कुम्भीन्द्रकोलाहले प्रस्थाने तव वीरभान दलित ब्रह्माण्डभाण्डोदरम् । आघाय ज्वलति प्रतापदहने रङ्कै पुनर्वेधसा तारानायकतारकासुरसरिद्राजादिनायोजितम् ॥ १८४ ॥

वीरवर

कामो वामदृशा निधिर्नयजुषा कालानलो विद्विषा स्व शाखी विदुषा गुरुर्गुणवता पार्थो धनुर्धारिणाम् । लीलावासगृह कलाकुलजुषा कण सुवर्णार्थिना श्रीमान्वीरवर क्षितीश्वरवरो वर्वर्ति सर्वोपरि ॥१८५॥ जम्बुद्वीपगृहप्रमोदानकरी स्नेहक्षमाधायिनी नीत्योद्गीर्णमयीतति सज्जनश्रेणीपतङ्गान्तकृत् । गाजीन्द्राकबरक्षितीश्वरमनश्चिन्तान्धकारापहा यस्य क्षोणिपतेरराजदखिल दीपोपमा लेखनी ॥ १८६ ॥

वीरसिंह

वीरसिंहारिनारीणामञ्जनाक्ताश्रुबिन्दव । उरोजे पतिता रेजु सरोजे मधुपा इव ॥ १८७ ॥ यस्योच्छिन्ना न वेदा मनसि मदयता दूषणानामभावो दक्षो दूरेऽणुदृष्ट्या जहति कठिनता दानशक्तिर्गरिष्ठा । आधत्ते यश्च कुन्द शिरसि

१ क्वचिन २ भरो ३ मर ४ नाड ५ दानम् ६ स्याप-

दरता यश्च दूरीकृताति स श्रीमान्वीरसिंह त्वमिव तत्र रिपुस्तत्र दंभ प्रतीम ॥ १८८ ॥ वैकुण्ठामप्रकाम कमलयुतशिरा कुञ्जराकृष्टदृष्टि कोदण्डोदारनामाप्यमितपरिजनो विश्वविख्यातकीर्ति । सुन्दर्यासक्तचित्त समरणविजयी कङ्कणाहारयुक्तो वीर श्रीवीरसिंह त्वमिव तव रिपु किंतु मुक्तादिवण ॥ १८९ ॥

### वेङ्कटपति

अत्र मन्मथमिवातिसुन्दर मीनवारिमिव दिव्यतेजसम् । शैलराजमिव धैर्यशालिन वेद्मि वेङ्कटपति महीपतिम् ॥१९०॥

### शाहिजहान

भूभृन्मौलितटीषु वर्षति महाधाराधरेऽस्मिन्सो जाता भूप सरस्वती विजयिनी कल्लोलिनी पावनी । श्रीमच्छाहिजहा ब्रवीमि तदिद माहात्म्यमस्या कथ यस्या मज्जति पङ्कजीयति शिरस्त मूर्धजो लीयति ॥ १९१ ॥

### सिन्धुराधीश्वर

अशर्मवहन वलत्कटुकटाक्षरूक्षेक्षणक्षणक्षपितशात्रवे जयति सिन्धुराधीश्वरे । वय न बहु मन्महे निजभुजानमद्गाण्डिवच्युतास्त्रशिखिताण्डवज्वलितखाण्डव पाण्डवम् ॥ १९२ ॥

### हम्मीर

मुषति मुषति कोष भजति च भजति प्रैकम्पमरिवर्ग । हम्मीरवीरखङ्गे त्यजति त्यजति क्षमामाशु ॥ १९३ ॥ मा चक्र चक्रिविरहज्वरकातरो भू सङ्कोचमम्बुज न याहि न यामिनीयम् । हम्मीरभूपहयपादविदीर्णभूमीरेणूत्करैरयमकारि दिवान्धकार ॥ १९४ ॥

---

## राजविभूषावर्णनम्

यत्र पटोऽयमद्भुतो न ते महीप कञ्चुक । सुपुण्यकर्मभास्पदो जयप्रद सुरक्षणम् ॥ १ ॥ प्रशातृतीयोमविलोचनस्य भूत्योज्ज्वलस्येश्वरकामदातु । कामारिमुत्सृज्य मुदा सकामा उष्णीषगङ्गा तव भाति मूर्ध्नि ॥ २ ॥ चित्राभिरस्योपरि मौलिभाजा भाभिर्मणीनामनणीयसीभि । अनेकधातुच्छुरिताश्मराशेर्गोवर्धनस्याकृतिरन्वकारि ॥ ३ ॥ तमङ्गदे मन्दरकूटकोटिव्याघट्टनोत्तेजनया मणीनाम् । बहीयसा दीप्तिवितानकेन चकासयामासतुरुल्लसन्ति ॥ ४ ॥ शिरोवेष्टनव्याजतस्ते मुखेन्दो पर पक्षपाताद्ग्रसत्येव राहुम् । एषा मूर्ध्नि बद्ध कचच्छद्मनाल शशाङ्कोऽङ्गहीनो विभात्येष राजन् ॥ ५ ॥ ताराधिनाथमभिजित्य मुखश्रियाद्य राजस्त्वया पदककैतवतो व्यलम्बि । बन्दीकृता इव तदीयवधूसमूहा हारच्छलेन तव वक्षसि भान्ति नूनम् ॥ ६ ॥ घनकुसुमभास्वत्कञ्चुकस्योपरिष्टात्कनकपरिकरेण भ्राजसे राजराज । शरदि घनगणोद्यद्विद्युद्दामरेखाकलित इव धरेन्द्र प्रोन्नतो विन्ध्यशैल ॥ ७ ॥ सभागारस्थश्रीनखरसुषमानद्धकनकस्फुरद्विद्युद्दाजत्कटकयुगलाभ्या तव करौ । विभात काश्मीरद्रवविलुलिताविन्द्रविजये हृते स्वर्गद्वारार्गल इव विभो द्विष्टस्थितिकृते ॥ ८ ॥

---

## गजप्रशंसा

नीता कुम्भस्थलकठिनता कामिनीनामुरोजैस्तेय धृत्वा धृतमणिगणै कम्बुकेयूरवृत्तैः । इत्याख्यातु नरपतिगृहद्वारि कुम्भेन्द्रडिम्भा शुण्डादण्डैर्नृपि बहुला धूलिमुद्वलयन्ति ॥ १ ॥ सिन्दूरद्युतिमुग्धमूर्धनि धृतस्कन्धावधिश्यामिके व्योमान्त स्पृशि सिन्धुरेऽस्य समरारम्भोद्धुर धावति । जानीमो नु यदि प्रदोषतिमिरव्यामिश्रसंध्याधियेवास्त यान्ति समस्तवैरिहुजभुजातेज सहस्रांशव ॥ २ ॥ एतद्वन्यगजस्तृषाम्भसि भृश कण्ठान्तमज्जत्तनु फेनै पाण्डुरित स्वदिक्करिजयक्रीडायश स्पर्धिभि । द तद्वन्द्वजलानुबिम्बनचतुर्दन्त कराम्भोर्वमिव्याजादैन्यमुनलभेन विरह निर्वापयत्यम्बुधे ॥ ३ ॥ सीयोद्यानप्रग घप्रकुपितहृदयोत्तारितोद्दण्डशुण्डेरुद्यच्छ्रपुच्छगुच्छप्रतिकरटिधिया मिन्धुरैर्धावमाने । तत्पादन्यासनम्रीभवदचलभरोद्भ्रान्तिधारावघूर्णत्पाराबाराम्बुपूर्णा धरणिरनितरा शङ्कमाना चकम्पे ॥ ४ ॥

---

## तुरगप्रशंसा

मेखलीयति मेदिन्या ककुभ कङ्कणीयति । मण्डलीस्तुरग कुर्वञ्जगत पुण्डरीयति ॥ १ ॥ धावन्तमनु धावन्ति हरिण तव वाजिन । नाभिनिर्मुक्तकस्तूरीलुब्धा इव समीरणा ॥ २ ॥ अनूनवेगादयमद्वितीयश्छायातुरगादपि लज्जमान । खुरोद्धतैर्वीर तुरगमस्ते रजोभिरद्धा प्रतिमावृणोति ॥ ३ ॥ प्रयातुमस्माकमिद कियत्पद धरा तदम्भोधिरपि स्थगयताम् । इतीव वाहैर्निजवेगदर्पितै पयोधिरोधक्षममुद्धत रज ॥ ४ ॥ इयती जगती नियती

१ दवारे मग्नम् २ इह पधे चतुष्पथ आवाहनलाभ ३ विष्णु ४ हरम् ५ मदनशासकत्वात् ६ विधानम्, पते,-भाण्डागारम् ७ उद्भासनम्, पक्षे,-प्रदृष्टम्मन् ८ क्षान्तिम् पक्षे,-पृथ्वीम् ९ चक्रवाकीविरहातुर-

१ अभ्रकवे २ मनर्गल इत्यर्थ ३ धनिव ४ सूर्य- ५ प्रतिबिम्बेन ६ करवीरर इत्यर्थे ७ ऐरावतेन ८ मये-

द्वयोर्मात्रे धनैतद्दोर्दाममप्रतापज्वलज्ज्वलमिलद्वनभूमभ्रमाय । एतद्विजेत्रयात्रासमसमरभर पश्यत कस्य नासीदेतद्धासी रवाजिव्रजखुरजरजोराजिराजिस्थलीषु ॥ १९ ॥ तत्तद्विग्जेत्रयात्रोद्धुरतुरगखुराग्राद्धतैरन्धकारं निर्वाणारिप्रतापानलजमिव सृजत्येष राजा रजोभिः । भूगोलच्छायमायामयगणितविदुच्चेयरायो भियाभूदेतत्कीर्तिप्रतानैर्विधुमिरिव युवे राहुराहूयमानः ॥ २० ॥ गा धारा गुप्तदारास्त्वयि चलति गलद्वाष्पधारा निहारा रागत्रासान्वगारा क्षितिपकुलमणे गुर्जरा जर्जराशा । तैलङ्गास्त्यक्तलिङ्गाख्रिभुवनतिलक त्रिस्य दङ्गा कलिङ्गा मोरङ्गा मुक्तरङ्गा सपदि सममवन्वीर गङ्गाविहङ्गाः ॥ २१ ॥ काचित्कीर्णा रजोभिर्दिवमनुविदधो मन्दवक्त्रेन्दुलक्ष्मीरश्रीका काश्चिदन्तर्दिश इव दधिरे दाहमुद्भ्रान्तसत्त्वाः । भ्रेमुर्वात्या इवान्याः प्रतिपदमपरा भूमिवत्कम्पमाना प्रस्थाने पार्थिवानामशिवमिति पुरोभानि नार्यः शशंसु ॥ २२ ॥ जाने युष्मत्प्रयाणे क्षितितिलक रजोयोगदोषादशेषा दिग्योषा स्नाति सद्यस्त्वदरिनृपवधूनेत्रनीराप गासु । सगम्य त्वत्प्रतापैस्तदनु मिस्रु दधुर्दोहन देव तासा प्राची प्रातः प्रसूते यदियमुरुमहोऽखण्डमार्तण्डबिम्बम् ॥२३॥ घूर्णन्ते तूर्णमेतत्कुलधरणिभृतो दिग्द्विपा दिग्विदिक्षु क्षुभ्यन्ति क्षोभयन्ति क्षितिमतिमृदितो मर्मणा कूर्मराजः । प्रस्थाने यस्य गर्जत्तरटिघनघटासंभ्रमन्यञ्चदुर्वीमुर्वी दर्वीकरेन्द्र कलयितुमुदितश्रायमार्तिं बिभर्ति ॥ २४ ॥ त्वत्सैन्यद्वाजिराजिप्रसरखुरपुटप्रोद्धतैर्धूलिजालैरालोकालोकभूमीधरमतुलनिरालोकभानं प्रयाते । विश्रान्तिं यामयन्ते रजनिरिति धिया भूतले सर्वलोकाः कोका क्रन्दन्ति शोकानलविकलतया किं च नन्दन्त्युलूकाः ॥ २५ ॥ इन्द्र प्रक्षुब्धचित्तो दिशि दिशि सकलान्दिक्पतीन्सावधानान्कुर्वन्वज्राच्छस्त्राणि सुरवरवलिता देवसेना निगृह्य । स्वर्गद्वारे यदीयोद्धतमलनिहतप्रौढदक्कानिनाद श्रुत्वा तिष्ठत्प्रकम्पत्कुचकलशतटीकिंनरीगीयमानः ॥ २६ ॥ आजो त्वद्वाजिराजिप्रखरखुरतरन्यासलीलाभिरुर्व्या दीर्णाया देव निर्यत्नविरलभरनीपाल पातालवह्निः । अश्रीयाद्विश्वमेन प्रतिनृपतिवधूनेत्रधाराम्बुधारावारा यद्येनमारादरिकुलदमन द्राङ् न निर्वापयेयु ॥ २७ ॥

### पताका

भयेन कृष्णान्यरणानि रागात्पाण्डूनि वातादिवियोगभाजाम् । द्विषां मनांसि ध्वजकैतवेन लोलानि भोस्त्वा नृप सश्रयन्ति ॥ २८ ॥

### दुन्दुभि

गङ्गाम्भसि सुरत्राण तव नि स्वाणनिः स्वन । स्नातीवारिवधूवर्गगर्भपातनपातकी ॥ २९ ॥ ब्रह्माण्ड प्रविशन्नव्य भूधरगुहासुप्तान्हरीन्बोधयन् गर्भान्वैरिवधूजनस्य नृपते निष्पात्य हा पातकी । कीलाल परिशोष्य च प्रतिभटानां तेजसा तेऽद्भुत शोद्धुं निष्णुपम स्पृशत्यधिपयोराशि ध्रुवो दुन्दुभिः ॥ ३० ॥ पौरीन्द्राणां धुरीणैरखनिधरगुहागतत प्रोच्छलद्भि स्वापभ्रशापराधप्रचलितनयनप्रान्तमाकर्ण्यमानः । त्वत्प्रस्थानान्तरधवल यजलधरध्वानधिक्कारधीरो घृष्टक्षीराम्बुतीरो जगति विजयते दुन्दुभिद्वन्द्वनाद ॥ ३१ ॥

### गवाक्षविलोकनम्

आलोकमार्गं सहसा व्रजन्त्या कयाचिदुद्वेष्टनवान्तमाल्य । बद्धु न सभावित एव तावत्करेण रुद्धोऽपि च केशपाश ॥ ३२ ॥ प्रसाधिकालम्बितमग्रपादमाक्षिप्य काचिद्द्रवरागमेव । उत्सृष्टलीलागतिरागवाक्षादलक्तकाङ्का पदवीं ततान ॥ ३३ ॥ विलोचन दक्षिणमञ्जनेन सभाव्य तद्वञ्चितवामनेत्रा । तथैव वातायनसंनिकर्षं ययौ शलाकामपरा वहन्ती ॥ ३४ ॥ जालान्तरप्रेषितदृष्टिरन्या प्रस्थानभिन्नां न बबन्ध नीवीम् । नाभिप्रविष्टाभरणप्रभेण हस्तेन तस्थाववलम्ब्य वास ॥ ३५ ॥ अर्धाञ्चिता सत्वरमुत्थिताया पदे पदे दुर्निमिते गलन्ती । कस्याश्चिदासीद्रशना तदानीमङ्गुष्ठमूलार्पितसूत्रशेषा ॥ ३६ ॥ स्तन धयन्त तनय विहाय विलोकनाय त्वरया व्रजन्ती । संप्रस्नुता या पदवीं स्तनाभ्यां सिषेच काचित्पयसा गवाक्षम् ॥ ३७ ॥ अभिवीक्ष्य सामिकृतमण्डन यतीः कररुद्धनीविगलदशुका स्त्रियः । दधिरेऽधिभित्ति पटहप्रतिस्वनैः स्फुटमट्टहासमिव सौधपङ्क्तय ॥ ३८ ॥ रभसेन हाग्पद दत्तपावय प्रतिमूर्धज निहितकर्णपूरका । परिवर्तिताम्बरयुगा समापतन्वलयीकृतश्रवणपूरकाः स्त्रियः ॥ ३९ ॥ व्यतनोदपास्य चरण प्रसाधिकाकरपल्लवाद्रभसवशेन काचन । द्रुतयावकैकपदचिह्नितावनिं पदवीं गतेव गिरिजा हरार्धताम् ॥ ४० ॥ व्यचलन्विशङ्कटकटीरकस्थलीशिखरस्खलन्मुखरमेखलाकुलाः । भवनानि तुङ्गतपनीयसंक्रमक्रमणक्वणत्कनकनूपुरा स्त्रियः ॥ ४१ ॥ करयुग्मपद्ममुकुलापवर्जितैः प्रतिनेमु लाजकुसुमैरवाकिरन् । अवदीर्णशुक्तिपुटमुक्तमौक्तिकप्रकरैरिव प्रियरथाङ्गमङ्गना ॥ ४२ ॥ नलिनान्तिकोपहितपल्लवश्रिया व्यवधाय चारु मुखमेकपाणिना । स्फुरिताङ्गुलीविवरनिःसृतोल्लसद्दशनप्रभाङ्कुरमजृम्भतापरा ॥ ४३ ॥

१ वेगात्। २ सेनामुखम्। ३ रणभूमिषु। ४ वज्चदृष्ट्यल। ५ करणम्। ६ गणितशास्त्रवेत्ता। ७ ज्योतिःशास्त्रप्रमाणक यद्यतोर्भूच्छायामयं तदेतत्कीर्तिं चन्द्रबिम्बेनुपेक्षा।

१ 'सुरत्राण' इति पदस्य शोधनं सुरत्राण इति। २ निनादानाम्। ३ अर्धम्। ४ गच्छन्ती।

विराजते कुरूपता शीलतया विराजते । कुभोजनं चोष्णतया विराजते कुवस्त्रता शुभ्रतया विराजते ॥ ९१३ ॥ यथा चतुर्भिः कनकं परीक्ष्यते निघर्षणच्छेदनतापताडनैः । तथा चतुर्भिः पुरुषः परीक्ष्यते श्रुतेन शीलेन कुलेन कर्मणा ॥ ९१४ ॥ कुदेशमासाद्य कुतोऽर्थसंचयः कुपुत्रमासाद्य कुतो जलाञ्जलिः । कुगेहिनीं प्राप्य गृहे कुतः सुखं कुशिष्यमध्यापयतः कुतो यशः ॥ ९१५ ॥ मात्रा समं नास्ति शरीरपोषणं चिन्तासमं नास्ति शरीरशोषणम् । भार्यासमं नास्ति शरीरतोषणं विद्यासमं नास्ति शरीरभूषणम् ॥ ९१६ ॥ गुणी गुणं वेत्ति न वेत्ति निर्गुणो बली बलं वेत्ति न वेत्ति निर्बलः । पिको वसन्तस्य गुणं न वायसः करी च सिंहस्य बलं न मूषकः ॥ ९१७ ॥ सुखं हि दुःखान्यनुभूय शोभते घनान्धकारेष्विव दीपदर्शनम् । सुखात्तु यो याति नरो दरिद्रतां धृतः शरीरेण मृतः स जीवति ॥ ९१८ ॥ स दीक्षितो यः सकलं समीक्षते स पण्डितो यः करणैरखण्डितः । स तापसो यः परतापकर्षणः स धार्मिको यः परमर्म न स्पृशेत् ॥ ९१९ ॥ यशस्करे कर्मणि मित्रसंग्रहे प्रियासु नारीष्वधनेषु बन्धुषु । क्रतौ विवाहे व्यसने रिपुक्षये धनव्ययस्त्वेषु न गण्यते बुधैः ॥ ९२० ॥ विवादशीलां स्वयमर्थचोरिणीं परानुकूलां बहुपाकभामिनीम् । सक्रोधिनीं चान्यगृहेषु वासिनीं त्यजन्ति भार्यां दशपुत्रमातरम् ॥ ९२१ ॥ अतिप्रचण्डा बहुदुःखभागिनी विवादशीला परगेहगामिनी । भर्तुः स्वयं निन्दति या च तस्करी त्यजेत्स्वभार्यां दशपुत्रपुत्रिणीम् ॥ ९२२ ॥ कुले कलङ्कः कवले कदन्नता सुतः कुबुद्धिर्भवने दरिद्रता । रुजः शरीरे कलहप्रिया प्रिया गृहागमे दुर्गतयः षडेते ॥ ९२३ ॥ प्रकटं मृदु नाम जल्पतः परुषं सूचयतोऽर्थमन्तरा । शकुनादिव मार्गवर्तिभिः पुरुषादुद्विजितव्यमीदृशात् ॥ ९२४ ॥ मतिरेव बलाद्गरीयसी यदभावे करिणामियं दशा । इति घोषयतीव डिण्डिमः करिणो हस्तिपकाहतः क्वणन् ॥ ९२५ ॥ महता यदि निन्दने रतिर्गुणसस्यैव तदा विधीयताम् । असतामपि केलने रतिर्ननु तद्भूषणमेव गण्यताम् ॥ ९२६ ॥ अथ गरलानि मृदुचेतनः प्रियनाशः हृदि शल्यमर्पितम् । स्थिरधीस्तु तदेव मन्यते कुशलोद्धारतया समुद्धृतम् ॥ ९२७ ॥ महतस्तरसा विलङ्घयन्निजदोषेण कुधीर्विनश्यति । कुरुते न खलु स्वेच्छया शलभानिन्धनमिद्धदीधितिः ॥ ९२८ ॥ क्रियते धवलः खलु कैर्धवलैरेव सितेतरैरपि । शिरसोऽपि मधत्त शंकरः सुरभीधोर्मधुजित्तमङ्गिना ॥ ९२९ ॥ कृतिनामकृती कथं कथं मा तुलनां यातु कृतेऽपि चाश्रये । बहुभिर्विधृते कचैः कलापैर्विधना किं मधवोपमानमेति ॥ ९३० ॥ अरुचिर्निशया विना शशी शशिना सापि विना महत्तमः । उभयेन विना मनोभवस्फुरितं नैव चकास्ति कामिनोः ॥ ९३१ ॥ उपकारकमायतेर्भृशं प्रसवः कर्मफलस्य भूरिणः । अनपायि निबर्हणं द्विषां न तितिक्षासममस्ति साधनम् ॥ ९३२ ॥ जरा रूपं हरति हि धैर्यमाशा मृत्युः प्राणान्धर्मचर्यामसूया । कामो ह्रियं वृत्तमनार्यसेवा क्रोधः श्रियं सर्वमेवाभिमानः ॥ ९३३ ॥ गुणवानपि नोपयाति पूजां पुरुषः सत्पुरुषैरकथ्यमानः । न हि सौरमणिः स्वभावकान्तिं रविपादैरनधिष्ठितः करोति ॥ ९३४ ॥ सहसा विदधीत न क्रियामविवेकः परमापदां पदम् । वृणुते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव संपदः ॥ ९३५ ॥ विना गोरसं को रसो भोजनानां विना गोरसं को रसो भूपतीनाम् । विना गोरसं को रसः कामिनीनां विना गोरसं को रसः पण्डितानाम् ॥ ९३६ ॥ सकलापि कला कलावतां विकला पुण्यकलां विना खलु । सकले नयने वृथा यथा तनुभाजां हि कनीनिकां विना ॥ ९३७ ॥ सुकुलजन्म विभूतिरनेकधा प्रियसमागमसौख्यपरम्परा । नृपकुले गुरुता विमलं यशो भवति पुण्यतरोः फलमीदृशम् ॥ ९३८ ॥ कनकभूषणसंग्रहणोचितो यदि मणिस्त्रपुणि प्रणिधीयते । न स विरौति न चापि हि शोभते भवति योजयितुर्वचनीयता ॥ ९३९ ॥ सहजमलिनवक्रभावभाजां भवति भवः प्रभवात्मनाशहेतुः । जलधरपदवीमवाप्य धूमो ज्वलनविनाशमनुप्रयाति नाशम् ॥ ९४० ॥ परिहरत पराङ्गनानुषङ्गं बत यदि जीवितमस्ति वल्लभं वः । हरहर हरिणीदृशो निमित्तं दश दशकंधरमौलयो लुठन्ति ॥ ९४१ ॥ शिशुरपि निपुणो गुरोर्गरीयान्न तु वपुषैव महान्महत्त्वहेतुः । मणिरणुरपि भूषणाय पुंसां न तु पृथुलैव शिला विलासहेतुः ॥ ९४२ ॥ अनुदिनमनुकूलमाचरन्तं विहितमतिः प्रतिकूलमाचरेत्कः । शमितगरलजातकण्ठदाहं शिखिकण्ठः शशिनं शिरःसु धत्ते ॥ ९४३ ॥ नितम्बो विशालः कटिर्मध्यसूक्ष्मा कुचद्वन्द्वमत्युन्नतं भव्यं मुखं च । वचश्चेत्किंचिद्वाल स्मव्याहरन् किं ततः किं ततः किं ततः किम् ॥ ९४४ ॥ लुब्धस्य नश्यति यशो विषमस्य मैत्री नष्टक्रियस्य कुलमर्थपरस्य धर्मः । विद्याफलं व्यसनिनः कृपणस्य सौख्यं राज्यं प्रमत्तसचिवस्य नराधिपस्य ॥ ९४५ ॥ दुर्मन्त्रिणं कमुपयान्ति न नीतिदोषाः संतापयन्ति कमपथ्यभुजं न रोगाः ।

१ धैर्यम् २ गोरसम् ३ सुकुल इत्यारभ्य पद्ययोग ४ हरिणादिः ५ मद ६ निन्दा ७ दारुणता ८ ... ९ महत्सु प्रतीता ...

क श्रीर्न दर्पयति क न निहन्ति मृत्यु: क स्त्रीकृता न विषया ननु तापयन्ति ॥ ९४६ ॥ वित्तेन किं वितरण यदि नास्ति दीने किं सेवया यदि परोपकृतौ न यत्न । किं सगमेन तनयो यदि नेक्षणीय: किं यौवनेन विरहो यदि वल्लभाया ॥ ९४७ ॥ किं भूषण सुदृढमत्र यशो न रत्न किं कार्यमार्यचरितं सुकृत न दोष । किं चक्षुरप्रतिहत धिषणा न नेत्र जानाति कस्त्वदपर: सदसद्विवेकम् ॥ ९४८ ॥ प्राप्ता श्रिय: सकलकामदुघास्तत: किं दत्त पद शिरसि विद्विषता तत: किम् । सतर्पिता: प्रणयिनो विभवै-स्तत: किं कल्प स्थित तनुभृता तनुभिस्तत: किम् ॥ ९४९ ॥ आदौ न वा प्रणयिना प्रणयो विधेयो दत्तो-ऽथवा प्रतिदिन परिपोषणीय: । उत्क्षिप्य उत्क्षिपति तत्प्रक-रोति लज्जा भूमौ स्थितस्य पतनाद्भयमेव नास्ति ॥ ९५० ॥ वाञ्छैव सूचयति पूर्वतर भविष्य पुसा यदन्यतनुज त्वशुभ शुभ वा । विज्ञायते शिशुरजातकलापचिह्न: प्रत्युद्गतैरपसर-न्सरस (?) कलापि ॥ ९५१ ॥ शस्त्रैर्हतास्तु रिपवो न हता भवन्ति प्रज्ञाहताश्च नितरा सुहता भवन्ति । शस्त्र निहन्ति पुरुषस्य शरीरमेक प्रज्ञा कुल च विभव च यशश्च हन्ति ॥ ९५२ ॥ स्थानेषु शिष्यनिवहैर्विनियुज्यमाना विद्या गुरु हि गुणवत्तरमातनोति । आदाय शुक्तिषु बलाहकविप्रकीर्णै रत्नाकरे भवति वारिभिरम्बुराशि: ॥ ९५३ ॥ वार्ता च कौतुककरी विमला च विद्या लोकोत्तर: परिमलश्च कुरग-नाभे: । तैलस्य बिन्दुरिव वारिणि दुर्निवारमेतत्त्रय प्रसरति स्वयमेव भूमौ ॥ ९५४ ॥ अत्यन्तमायनकदर्थनमुत्सहन्ते मर्यादया नियमिता विभु साधवोऽपि । लक्ष्मीसुधाकरसुधा सुपनीय शेषे रत्नाकरोऽपि गरल विभु नोज्जगार ॥ ९५५ ॥ अर्था हृतस्त्ववितदानविहीनलुब्ध भूयो हृतमित मम भूमिरिति नृपाणाम् । जारा हसन्ति तनयानुपलालयन्त मृत्युर्हसत्यवनिप रणरङ्गभीरुम् ॥ ९५६ ॥ वैद्या वदन्ति कफपित्तमरुद्विकाराज्ज्योतिर्विदो ग्रहगतिं परिवर्तयन्ति । भूताभिषङ्ग इति भूतविदो वदन्ति प्राचीनकर्म बलवन्मुनयो वदन्ति ॥ ९५७ ॥ कस्यापि कोऽप्यतिशयोऽस्ति स तेन लोके ख्यातिं प्रयाति नहि सर्वविदस्तु सर्वे । किं केतकी फलति किं पनस: सुपुष्प: किं नागवल्ल्यपि च पुष्पफलै-रुपेता ॥ ९५८ ॥ लीलावलम्बनमहर्निशमिष्टचिन्ता विचारु रूपमदनाभरणादि कार्यम् । वार्ये च दुर्जनसमाजनिजप्रश साहासादि सज्जनवचो हृदये निधेयम् ॥ ९५९ ॥ पश्यन्ति नैव कवयो निजकाव्यदोष भक्षन्ति नो बलिभुजो निजजातिमासम् । जल्पन्ति नैव मधुपा निजमर्मवाक्य कुर्वन्ति नो युवतय: पुरुषेषु बीजम् ॥ ९६० ॥ कीर्ति मृणालकमनीयभुजामनिन्द्यचन्द्रानना सितसरोरुहचारुने त्राम् । ज्योत्स्नासितामपहृता दयितामिव स्वा लब्धु न क: परमुपक्रममातनोति ॥ ९६१ ॥ शास्त्र सुनिश्चलधिया परिचिन्तनीय सेव्यो नृपोऽपि सतत परिसेवनीय: । अङ्के स्थितापि युवति: परिरक्षणीया शास्त्रे नृपे च युवतौ च कुत: स्थिरत्वम् ॥ ९६२ ॥ हसो विभाति नलिनीदलपुञ्जमध्ये सिंहो विभाति गिरिगह्वरकदरासु । जात्यो विभाति तुरगो रणयुद्धमध्ये विद्वान्विभाति पुरुषेषु विचक्षणेषु ॥ ९६३ ॥ हसो न भाति बलिभोजनवृन्दमध्ये गोमायुमण्डलगतो न विभाति सिंह: । जात्यो न भाति तुरग: खरयूथमध्ये विद्वान्न भाति पुरुषेषु निरक्षरेषु ॥ ९६४ ॥ विश्वेश्वरस्तु सुधिया गलितेऽपि भेदे भावेन भक्तिसहितेन समर्चनीय: । प्राणेश्वरश्चतुरया मिलितेऽपि चित्ते चेलाञ्चलव्यवहितेन निरीक्षणीय: ॥ ९६५ ॥ किं कोकिलस्य विरुतेन गते वसन्ते किं कातरस्य बहुशस्त्रपरिग्रहेण । मित्रेण किं व्यसनकालप-राङ्मुखेन किं जीवितेन पुरुषस्य निरक्षरेण ॥ ९६६ ॥ हार प्रलम्बितपयोधरमध्यवर्ती शुष्कस्तनान्तरगतो धरकञ्चुकश्च । काणेक्षणाञ्जनमूर्ध्नि च पुष्पमाला दीनाश्रयो बुधजन: खलु पश्य दु:खम् ॥ ९६७ ॥ नीच: समृद्धमपि सेवति नीच एव त दूरत: परिहरन्ति पुनर्महान्त: । शाखोटक मधुरपक्वफले रुपेत सेवन्ति वायसगणा न तु राजहसा: ॥ ९६८ ॥ माक न्दराजशिरस्मणलालितोऽपि मल्लीनधूमधुपरागवती बभूव । दृष्ट्वापि तत्कुटिलता न जहाति चूत: प्राय: कुजातिनि वहेषु कृतोऽभिमान: ॥ ९६९ ॥ कालक्रमेण परिणामवशा दनव्या भाग्य भवन्ति खलु पूर्वमतीव तुच्छा: । मुक्तामणि-र्जलदतोयकणोऽप्यणीया सपद्यते च चिरकीचकरन्ध्रमध्ये ॥ ९७० ॥ यच्चिन्तित तदिह दूरतर प्रयाति यच्चेतसापि न कृत तदिहाभ्युपैति । इत्थ विधेर्विधिविपर्ययमाकलय्य सन्त सदा सुरसरित्तटमाश्रयन्ति ॥ ९७१ ॥ अन्त: प्रतप्तस्य रमैक्तदह्यमानमूलस्य चम्पकतरो: क्व निकासचिन्ता । प्रायो भवत्यनुचितस्थितिदेशभाजा श्रेय: स्वजीवपरिपालनमात्र-मेव ॥ ९७२ ॥ उचितमनुचित वा कुर्वता कार्यजात परिण-तिरवधार्या यत्नत: पण्डितेन । अतिरभसकृताना कर्मणामा विपत्तेर्भवति हृदयदाही शल्यतुल्यो विपाक: ॥ ९७३ ॥ व्यतिषजति पदार्थानान्तर: कोऽपि हेतुर्न खलु बहिरुपाधी न्प्रीतय: सश्रयन्ते । विकसति हि पतङ्गस्योदये पुण्डरीक

१ वृत्तान्त- २ कुकुरसवरीर्ण ३ भूतबाधा ४ वायस।

१ बीजम् २ कायममृतम् ३ परिणाम ४ गुलसा

द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः ॥ ९७४ ॥ प्रथमदिवसचन्द्रः सर्वलोकैकवन्द्यः स च सकलकलाभिः पूर्णचन्द्रो न वन्द्यः । अतिपरिचयदोषात्कस्य नो मानहानिर्नवनवगुणरागी प्रायशः सर्वलोकः ॥ ९७५ ॥ भवति हृदयहारी कोऽपि कस्यापि हेतुर्न खलु गुणविशेषः प्रेमबन्धप्रयोगे । किसलयितवनान्ते कोकिलारावरम्ये विकसति न वसन्ते मालती कोऽत्र हेतुः ॥ ९७६ ॥ परीवादस्तथ्यो भवति वितथो वापि महतां तथाप्युच्चैर्धाम्नो हरति महिमानं जनरवः । तुलोत्तीर्णस्यापि प्रकटितहताशेषतमसो रवेस्तादृक्तेजो नहि भवति कन्यां गतवतः ॥ ९७७ ॥ बहिः सर्वाकारप्रगुणरमणीयं व्यवहरन्पराभ्यूहस्थानान्यपि तनुतराणि स्थगयति । जनं विद्वानेकः सकलमभिसंधाय कपटैस्तटस्थः स्वानर्थान्घटयति च मौनं च भजते ॥ ९७८ ॥ कलरवगीतं गगनतलरत्नं दिनमणिः सभारत्नं विद्वाञ्श्रवणपुटरत्नं हरिकथा । निशारत्नं चन्द्रः शयनतलरत्नं शशिमुखी महीरत्नं श्रीमाञ्जयति रघुनाथो नृपवरः ॥ ९७९ ॥ नरा सत्काराहा जगति निलकेचित्सुकृतिनः समानाया जातानपि यमिसत्वामपि धिये । अथ दृष्टान्तोऽत्र स्फुटपरिचयादभ्यसनतः शुकः श्लोकान्वक्ति प्रभवति न काकः क्वचिदपि ॥ ९८० ॥ वरं तुङ्गाच्छृङ्गाद्गुरुशिखरिणः क्वापि पुलिने पतित्वायं कायः कठिनदृषदन्तर्विदलितः । वरं न्यस्तो हस्तः फणिपतिमुखे तीव्रदशने वरं वह्नौ पातस्तदपि न कृतः शीलविलयः ॥ ९८१ ॥ निर्दैवतं ग्राम विबुधविधुरां भूपतिसभां सुखं श्रुत्वा हीनं मनुजपतिशून्यं च विषयम् । अनाचारान्व्यापारानपहरिकथं काव्यमपि च प्रमत्तत्वापेतं गुरुमपि सुबुद्धिः परिहरेत् ॥ ९८२ ॥ मणिः शाणोल्लीढः समरविजयी हेतिनिहतो मदक्षीणो नागः शरदि सरितः श्यानपुलिनाः । कलाशेषश्चन्द्रः सुरतमृदिता बालवनिता तनिम्ना शोभन्ते गलितविभवाश्चार्थिषु नृपाः ॥ ९८३ ॥ किमासेव्यं पुंसां सविधमनवद्यं द्युसरितः किमेकान्ते ध्येयं चरणयुगलं कौस्तुभभृतः । किमाराध्यं पुण्यं किमभिलषणीयं च करुणा यदासक्त्या चेतो निरवधि विमुक्त्यै प्रभवति ॥ ९८४ ॥ वरं मौनं कार्यं न च वचनमुक्तं यदनृतं वरं क्लैब्यं पुंसां न च परकलत्राभिगमनम् । वरं प्राणत्यागो न च पिशुनवाक्येष्वभिरुचिर्वरं भिक्षाशित्वं न च परधनास्वादनसुखम् ॥ ९८५ ॥ वरं शून्या शाला न च खलु वरो दुष्टवृषभो वरं वेश्या पत्नी न पुनरविनीता कुलवधूः । वरं वासोऽरण्ये न पुनरविवेकाधिपपुरे वरं प्राणत्यागो न पुनरधमानामुपगमः

॥ ९८६ ॥ दृढं प्रेमा मम संदमिरिव संधिं न भजते भजेतापि प्रायः स्खलति खलु यत्नैरपि धृतः । स्खलेनो चेत्साम्यं भजति न भजेद्वा न भवति च्युताशङ्कश्चेत्स्यात्स्मृतिमुपगतस्तु व्यथयति ॥ ९८७ ॥ इयं प्रीतिर्वल्ली हृदयभुवि दैवात्समुदिता तथा यत्नाद्रक्ष्या प्रकृतिमृदुलापायबहुला । यथा नैनां स्फीतां पिशुनजनदुर्वाक्यदहनो दहत्यन्तः शोषं व्रजति न पुनः सौहृदनिधे ॥ ९८८ ॥ न रम्यं नारम्यं प्रकृतिगुणतो वस्तु किमपि प्रियत्वं यत्र स्यादितरदपि तद्ग्राहकवशात् । रथाङ्गाह्वानानां भवति विधुरङ्गाशकटी पटीराम्भः कुम्भः स भवति चकोरीनयनयोः ॥ ९८९ ॥ अरण्यं सारङ्गैर्गिरिकुहरगर्भाश्च हरिभिर्दिशो दिङ्मातङ्गैः सलिलमुषितं पङ्कजवनैः । प्रियाचक्षुर्मध्यस्तनवदनसौन्दर्यविजितैः सतां माने म्लाने मरणमथवा दूरगमनम् ॥ ९९० ॥ नभोभूषा पूषा कमलवनभूषा मधुकरो वचोभूषा सत्यं वरविभवभूषा वितरणम् । मनोभूषा मैत्री मधुसमयभूषा मनसिजः सदोभूषा सूक्तिः सकलगुणभूषा च विनयः ॥ ९९१ ॥ कवेः सीमा काव्यं सकलगुणसीमा वितरणं भयं सीमा मृत्युः सकलसुखसीमा सुवदना । तपःसीमा मुक्तिः सकलकृतिसीमाश्रितभृतिः प्रिये सीमाह्लादश्रवणसुखसीमा हरिकथा ॥ ९९२ ॥ शशी दिवसधूसरो गलितयौवना कामिनी सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः । प्रभुर्धनपरायणः सततदुर्गतः सज्जनो नृपाङ्गनगतः खलो मनसि सप्त शल्यानि मे ॥ ९९३ ॥ प्रसरति मनः कार्यारम्भे दृढीभवति स्पृहा स्वयमुपनयन्नर्थान्मन्त्रो न गच्छति विप्लवम् । फलति सकलं कृत्यं चित्तं समुन्नतिमश्नुते भवति च रतिः श्लाघ्ये कृत्ये नरस्य भविष्यतः ॥ ९९४ ॥ सरसि बहुशस्ताराच्छाये क्षणात्परिवञ्चितः कुमुदविटपान्वेषी हंसो निशासु विचक्षणः । न दशति पुनस्ताराशङ्की दिवापि सितोत्पलं कुहकचकितो लोकः सत्येऽप्यपायमपेक्षते ॥ ९९५ ॥ सफलनिचयं शाखाभङ्गं करोति वनस्पतेर्गमनमलसं बर्हाटोपं करोति शिखण्डिनः । चतुरगमनो जात्यो योऽश्वः स गौरिव वाह्यते गुणवति जने प्रायेणैते गुणाः खलु दूषणम् ॥ ९९६ ॥ कृमिकुलचितं लालाक्लिन्नं विगन्धि जुगुप्सितं निरुपमरसप्रीत्या खादन्नराास्थि निरामिषम् । सुरेपतिमपि श्वा पार्श्वस्थं विलोक्य न शङ्कते नहि गणयति क्षुद्रो जन्तुः परिग्रहफल्गुताम् ॥ ९९७ ॥ मधुकरगणांश्चूतं त्यक्त्वा गतो नवमल्लिकां पुनरपि गतो रक्ताशोकं कदम्ब-

१ रविवाम् २ देहम् ३ निरवरानेन्मोलिमिवि ४ अनुभवे इव धन- ५ इत्ती ६ तुरुक ७ नतुमकरतम् ८ दुश्चरिता ९ दुर्विनेतिराज्ये ३३ सु० ८. भां

१ मतीः २ मद इव २ भूते ३ गिरि ४ दिगन्ते- ५ सूर्य- ६ सभा ७ हरिद ८ मीटरमुखे ९ लक्ष्मी १० भाम नचि ११ गणितम् १२ निःसमम् [illegible] हृदयम् १४ गुणदूषणम्

वन तत । तदपि सुचिर स्थित्वा तेभ्य प्रयाति सरोरुह परिचितजनद्वेषी लोको नव नवमीहते ॥ ९९८ ॥ दधा-रसाधुर्यदि निजपदे दुर्जनाय प्रवेश तन्नाशाय प्रभवति ततो वाञ्छमान स्वय स । तस्माद्देयो विपुलमतिभिर्नावकाशोऽधमाना जारोऽपि स्याद्गृहपतिरिति श्रूयते वाक्यतोऽत्र ॥ ९९९ ॥ मोने मौनी गुणिनि गुणवान्पण्डिते पण्डितोऽसौ दीने दीन सुखिनि सुखवा-भोगिनि प्राप्तभोग । मूर्खे मूर्खो युवतिषु युवा वाग्मिषु प्रौढवाग्मी धन्य कोऽपि त्रिभुवन जयी योऽवधूतेऽवधूत ॥ १००० ॥ विद्यातीर्थे जगति विबुधा साधव सत्यतीर्थे गङ्गातीर्थे मलिनमनसो योगिनो ध्यानतीर्थे । धारातीर्थे धरणिपतयो दानतीर्थे धनाढ्या लज्जातीर्थे कुलयुवतय पातक क्षालयन्ति ॥ १००१ ॥ साध्वीस्त्रीणा दयितविरहे मानिना मानभङ्गे सल्लोकानामपि जनरवे निग्रहे पण्डितानाम् । अन्योद्रेके कुटिलमनसा निर्गुणाना विदेशे भृत्याभावे भवति मरण किं तु सभावितानाम् ॥ १००२ ॥ शीतेऽतीते वसनमशन वासरान्ते निशान्ते क्रीडारम्भ कुचलयदृशा यौवनान्ते विवाहम् । सेतोर्बन्ध पयसि चलिते वार्धके तीर्थयात्रा वित्तेऽतीते वितरणमतिं कर्तुमिच्छन्ति मूढा ॥ १००३ ॥ श्रेयो नृत्य भजति स पुमाञ्शिक्षया वर्धितो य स्वच्छन्द यश्चरति स पराभूतिमाप्नोति काले । पूज्यो वेणुर्भवति च नतिं प्रापितो भूपतीनामन्य नृत्तोचितमिति करे नर्तका कल्पयन्ति ॥ १००४ ॥ बाले बाला विदुषि विबुधा गायने गायनेशा शूरे शूरा निगमविदि चाम्नायलीलागृहाणि । सिद्धे सिद्धा मुनिषु मुनय सत्सु सन्तो महान्त प्रौढे प्रौढा इतिमिति वचसा तादृशा यादृशेषु ॥ १००५ ॥ चान्द्री लेखा दशति दशनैर्दारुण संहिकेयो नव्या वर्षा दवदहनकक्षान्दनी दन्दहीति । अम्बुमत्त कुवलयमयीं मालिकामालुनीते मूलादुन्मूलयति नलिनीं दुष्टहस्ती करेण ॥ १००६ ॥ यावत्स्वस्थमिद शरीरमरुज यावज्जरा दूरतो यावच्चेन्द्रियशक्तिरप्रतिहता यावत्क्षयो नायुष । आत्मश्रेयसि तावदेव विदुषा कार्य प्रयत्नो महान्सदीप्ते भवने तु कूपखनन प्रत्युद्यम कीदृश ॥ १००७ ॥ निर्वृत्ताध्वरकृत्य ऋत्विजमहो तीर्णापगो नाविक युद्धान्ते सुभट च सिद्धविजयो योद्धारमास्तस्थल । वृद्ध वारवधूजन च रसितो निर्गृष्टयौवनो धर्मातङ्कचयश्रितिस्सकमपि द्वेष्टि प्रदेयार्थिनम् ॥ १००८ ॥ मित्र स्वेच्छतया रिपु नयबलैर्लुब्ध धनैरीश्वर कार्येण द्विजमादरेण युवतिं प्रेम्णा शमैर्बान्धवान् । अत्युग्र स्तुतिभिर्गुरु प्रणतिभिर्मूर्ख कथाभिर्बुध विद्याभी रसिक रसेन सकल शीलेन कुर्याद्वशम् ॥ १००९ ॥ दौर्मन्त्र्यान्नृपतिर्विनश्यति यति सङ्गात्सुतो लालनाद्विप्रोऽनध्ययनात्कुल कुतनयाच्छील खलोपासनात् । स्त्री मद्यादनवेक्षणादपि कृषि स्नेह प्रवासाश्रयान्मैत्री चाप्रणयात्समृद्धिरनयात्त्यागात्प्रमादाद्धनम् ॥ १०१० ॥ कोऽर्थान्प्राप्य न गर्वितो भुवि नर कस्यापदोऽस्त गता स्त्रीभि कस्य न खण्डित बत मन को नाम राज्ञा प्रिय । क कालस्य न गोचरो धनकृते कोऽथा गतो गौरव को वा दुर्जनवागुरानिपतित क्षेमेण यातो गृहम् ॥ १०११ ॥ वैद्य पानरत नट कुपठित स्वाध्यायहीन द्विज योध कापुरुष हय गतरय मूर्ख परिव्राजकम् । राजान च कुमन्त्रिभि परिवृत देश च सोपद्रव भार्या यौवनगर्विता पररता मुञ्चन्ति ते पण्डिता ॥ १०१२ ॥ वृक्ष क्षीणफल त्यजन्ति विहगा शुष्क सर सारसा निर्द्रव्य पुरुष त्यजन्ति गणिका भ्रष्ट नृप मन्त्रिण । पुष्प पर्युषित त्यजन्ति मधुपा दग्ध वनान्त मृगा सर्व कार्यवशाज्जनोऽभिरमते तत्कस्य को वल्लभ ॥ १०१३ ॥ सन्तश्चेदमृतेन किं यदि खलस्तत्कालकूटेन किं दातारो यदि कल्पशाखिभिरल यद्यर्थिन किं तृणै । किं कर्पूरशलाकया यदि दृश पन्थानमेति प्रिया ससारेऽपि सतीन्द्रजालमपर यद्यस्ति तेनापि किम् ॥ १०१४ ॥ लोभश्चेदगुणेन किं पिशुनता यद्यस्ति किं पातकै सत्य चेत्तपसा च किं शुचि मनो यद्यस्ति तीर्थेन किम् । सौजन्य यदि किं गुणै सुमहिमा यद्यस्ति किं मण्डनै सद्विद्या यदि किं धनैरपयशो यद्यस्ति किं मृत्युना ॥ १०१५ ॥ छेदश्चन्दनचूतचम्पकवने रक्षापि शाखोटके हिंसा हंसमयूरकोकिलकुले काकेषु नित्यादर । मातङ्गेन खरक्रय समतुला कर्पूरकार्पासयोरेषा यत्र विचारणा गुणिगणे देशाय तस्मै नम ॥ १०१६ ॥ या राका शशिशोभना गतघना सा यामिनी यामिनी या सौन्दर्यगुणान्विता पतिरता सा कामिनी कामिनी । या गोविन्दरसप्रमोदमधुरा सा माधुरी माधुरी या लोकद्वयसाधनी तनुभृता सा चातुरी चातुरी ॥ १०१७ ॥ किं तीर्थे हरिपादपद्मभजन किं रत्नमच्छा मति किं शास्त्र श्रवणेन यस्य गलति द्वैतान्धकारोदय । किं मित्र सततोपकाररसिक तत्त्वावबोध सखे क शत्रुर्वद खेददानकुशलो दुर्वासनासचय ॥ १०१८ ॥ क्षान्तिश्चेद्वचनेन किं किमरिभि क्रोधोऽस्ति चेद्देहिना ज्ञातिश्चेदनलेन किं यदि सुहृद्दिव्यौषधै किं फलम् । किं सर्पैर्यदि दुर्जना किमु धनैर्विद्यानवद्या यदि व्रीडा चेत्किमु भूषणै सुकविता यद्यस्ति

१ वजारादिनम् २ दधोग ३ शीतादितयकृत्य ४ उर्वीपर्णी नरी येन स ५ योद्धारम् ६ धूत ७ निरस्तरोगसंचय ८ वैभव ९ गीतिशिरिकि

१ स्वधैरत्वाद् २ कुहना ३ गहनदीप्त्या

# चतुर्थं चित्रप्रकरणम्

## समस्याख्यानम्

सहस्रशीर्षा पुरुष सहस्राक्ष सहस्रपात् । दलितशक्ति तरुजनसर सैन्ये विसर्पति ॥ १ ॥ काम कामदुघ धुक्ष्व मित्राय वरुणाय च । वय धीरेण दानेन सर्वान्कामानशीमहि ॥ २ ॥ असमाने समानत्व भविता कलहे मम । इति मत्वा ध्रुव मानी मृगारिसिंह पलायते ॥ ३ ॥ हीन हत्वा दधात्येव लाघव महतामपि । इति मत्वा द्विपद्वेषी मृगारिसिंह पलायते ॥ ४ ॥ तिष्ठार्जुनाय सङ्ग्रामे त्वा हनिष्याम्यह शरै । तिष्ठामि कर्ण कि मूढ मृगारिसिंह पलायते ॥ ५ ॥ ऋषेरस्याश्रमे पुण्ये तापसस्तस्य मानस । सुदोषतोऽपि भयोऽस्य मृगारिसिंह पलायते ॥६॥ अय मृग समायाति त्वरितैस्त्वरितै पदै । ततो वेगात्पलायस्व मृगारिसिंह पलायते ॥ ७ ॥ निशाया दुर्मदो येषा कार्पण्य विभवे सति । तेषा दैवाभिशप्ताना सलिलादग्निरुत्थित ॥ ८ ॥ सीतासमागमोत्कण्ठाकर्णान्ताकृष्टधन्वन । रावणस्य शरेण शौरे समुद्रादग्निरुत्थित ॥ ९ ॥ दामोदरकराघातविह्वलीकृतचेतसा । दृष्ट चाणूरमल्लेन शतचन्द्र नभस्तलम् ॥ १० ॥ चञ्चत्तरङ्गरङ्गाया गङ्गाया प्रतिबिम्बितम् । सचन्द्र शोभतेऽत्यर्थं शतचन्द्र नभस्तलम् ॥ ११ ॥ पिधेहि पिधेहि शीताशु यावदायाति मे प्रिय । आगते दयिते कुर्या शतचन्द्र नभस्तलम् ॥ १२ ॥ सुमेरुशिखरप्रान्तस्फुरद्दिव्यनभुसुनम् । परित स्फुरिते शङ्खे शतचन्द्र नभस्तलम् ॥ १३ ॥ घृत न श्रूयते कर्णे दधि स्वप्नेऽपि दुर्लभम् । मुग्धे दुग्धस्य का वार्ता तक्र शक्रस्य दुर्लभम् ॥ १४ ॥ अकल्पक्षमतरुज न शीतरश्मिना हृतम् । नादत्तमिति धात्र्यार्पितक शक्रस्य दुर्लभम् ॥ १५ ॥ भीमभीष्मतुसतपश्चन्दरथ्यान्तरस्थयो । अन्योन्यालापसुस्निग्धयोर्यूनोश्चन्द्रायते रवि ॥ १६ ॥ सलिक्षत्रियदेवाय जगद्देवाय भूभुजे । यद्यश पुण्डरीकान्तर्गगन भ्रमरायते ॥ १७ ॥ स्फुरिते जठरे विष्णोर्नवनीतभुज शिशो । मक्षिकापादघातेन कम्पित भुवनत्रयम् ॥ १८ ॥ अतसीपुष्पसकाश ख वीक्ष्य जलदागमे । ये वियोगेऽपि जीवन्ति न तेषा विद्यते भयम् ॥ १९ ॥ वागर्थाविव सपृक्तौ शतकोटिप्रविस्तरम् । तुरासाह पुरोधाय नेमु सर्वे सुरा गिरौ ॥ २० ॥ आषाढी कार्तिकी माघी पथ्या शुण्ठी हरीतकी । गयाया पिण्डदानेन पुण्या श्लेष्महरा नृणाम् ॥ २१ ॥ जम्बूफलानि पक्वानि पतन्ति विमले जले । कपिकम्पितशाखाभ्यो गुलुगुग्गुलुगुग्गुलु ॥ २२ ॥ विदग्धे सुमुखे रक्ते नितम्बोपरि सस्थिते । कामिन्याश्लिष्टसुगले कूजित रतिकूजितम् ॥ २३ ॥ प्रलयसहायकरा इति गोलानाचम्य सकलमुनिरुद्धाम् । विलसति दवदहनानलिरिह जलनाह पर शरणम् ॥ २४ ॥ निजपतिराय प्रणयी हरिर्द्वितीय करोमि कि गोपि । शृणु सखि पाणिनिसूत्रे विप्रतिषेधे पर कार्यम् ॥ २५ ॥ दैत्याना नगरी दया जाता कृष्णदृष्टि रक्षितु कस्मात् । द्रष्टु देवमनस्स दैत्यसीमामपि प्रीति ॥ २६ ॥ श्रीनाथ न श्रुतमिति बहुधा भ्रमता मया लोकेषु । शील वारवधूना दैत्यसीमामपि प्रीति ॥ २७ ॥ रामाभिषेके मदविह्वलाया हस्ताच्च्युतो हेमघटस्तरुण्या । सोपानमासाद्य करोति शब्द ठठठठठठठठठठठ

(१) 'सहस्रशीर्षा पुरुष सहस्राक्ष सहस्रपात्' इति समस्या (२) 'काम कामदुघ धुक्ष्व', 'मित्राय वरुणाय च', 'सर्वान्कामानशीमहि' इति च समस्या (३, ४, ५, ६, ७,) 'मृगारिसिंह पलायते' इति समस्या (८) 'सलिलादग्निरुत्थित' इति समस्या (९) 'समुद्रादग्निरुत्थित' इति समस्या (१०, ११, १२, १३,) 'शतचन्द्र नभस्तलम्' इति समस्या (१४, १५) 'शक्रस्य दुर्लभम्' इति समस्या

(१६) 'यूनोश्चन्द्रायते रवि' इति समस्या (१७) 'गगन भ्रमरायते' इति समस्या (१८) 'मक्षिकापादघातेन कम्पित भुवनत्रयम्' इति च समस्या (१९) 'अतसीपुष्पसकाशम्', 'न तेषा विद्यते भयम्' इति च समस्या (२०) 'वागर्थाविव सपृक्तौ', 'शतकोटिप्रविस्तरम्' इति च समस्या (२१) 'पुण्या श्लेष्महरा नृणाम्' इति समस्या (२२) 'गुलुगुग्गुलुगुग्गुलु' इति समस्या (२३) 'कूजित रतिकूजितम्' इति समस्या (२४) 'प्रलयसहायकरा इति गोलानाचम्य' इति समस्या (२५) 'विप्रतिषेधे पर कार्यम्' इति समस्या (२६, २७) 'दैत्यसीमामपि प्रीति' इति समस्या

१ [illegible] २ [illegible] ३ [illegible] ४ [illegible]

१ अन्योन्यालापसुस्निग्धयो- २ [illegible] ३ [illegible] ४ आषाढी कार्तिकी माघी एकादशी [illegible] पथ्या शुण्ठी हरीतकी श्लेष्महरा [illegible] पिण्डदानेन पुण्या [illegible] इति योजना

॥ २८ ॥ कर्पूरपूरच्छनिशादविद्यासनानदूकचतिशुक्तिताभे । इन्दौ नृपद्वेपि तमोवितान सूर्योदये रोदिति चक्रवाकी ॥ २९ ॥ विलोक्य वालामुखचन्द्रविम्व कण्ठे च मुक्तावलिहारतारा । पुनर्निशाया भयभीतभीता सूर्योदये रोदिति चक्रवाकी ॥ ३० ॥ भवस्य जन्तोर्भवति प्रमोदो विरोधिवर्गे परिभूयमाने । तिरोहिते त्वद्यशसा नरेन्द्र चन्द्रोदये नृत्यति चक्रवाकी ॥ ३१ ॥ न क्वापि गमाहितमशयाया विना नमात्र(?) जनशान्मजाया । पुर सुराणाङ्कपुर सराणा मह्वारपूर्णं कमल प्रफुल्लम् ॥ ३२ ॥ पुष्पायमानारणरत्नहारे कान्तोरसि भारदनङ्ग भाति । सिध्येदमुष्योपमितिर्यदि स्यादङ्गारपूर्णं कमल प्रफुल्लम् ॥ ३३ ॥ रे पुन सत्समक्षमवाप्नुहि रममत्प्रसङ्ग त्वरया विहाय । धन्योऽपि निन्दा लभते कुमह्वारिसिन्दूरविन्दुर्विधवाललाटे ॥ ३४ ॥ श्रुत्वा प्रदग्ध तनय सगौरा पुनर्निशम्याक्षशरीरभावम् । पश्यत्सु देवेषु च धावमाना रमा मुदा [1]शङ्करमालिलिङ्ग ॥ ३५ ॥ सुत पतन्त प्रसमीक्ष्य पावके न बोधयामास पति पतिव्रता । तदा बसो तद्गतशक्तिपीडितो हुताशनश्चन्दनपङ्कशीतल ॥ ३६ ॥ उन्नमय्य सकचग्रहमास्य चुम्बति प्रियतमे हठवृत्त्या । कूजिता जयति मानधनाया हुहुहुहुहुहुहुहुहुहुहुहु ॥ ३७ ॥ मम करग्रहणाय पणीकृत न यदि राघवतोऽप्यधिरोहति । मयि तदैवमभून्मम जीविते शशकशृङ्गमय कठिन धनु ॥ ३८ ॥ नीलाब्जद्युतिनन्दन नितान्त धृतमासश्रीपरिचितचन्द्रिकाविलासम् । जाताया सरसि विलोक्य वक्त्रचन्द्र मध्याह्ने मुकुलितमम्बुज वनान्ते ॥ ३९ ॥ काचिद्दिनार्धसमये [2]रविरश्मितप्ता [3]नीलाम्बुकाञ्चलनिलीनमुखेन्दुबिम्बाम् । ता तादृशीं समनुवीक्ष्य कविर्जगाद रोहुर्दिवा ग्रसति पर्व विना किलेन्दुम् ॥ ४० ॥ बहलबलसमधा मेघनादादयो मे सपदि युधि विशन्त कीटहस्ते निपेतु । इति वदति दशास्यो हस्तताल वितत्य मशकगलकरन्ध्रे हस्तियूथ प्रविष्टम् ॥ ४१ ॥ मृगशिशुनयनाया अक्षिपक्ष्मप्रकोणे विलसति तरला या तारका तारकेन्द्र । प्रतिफलति इहोष्ठे भ्रान्तिरास्ते जनाना तिलतुषपुटकोणे मक्षिकोष्ट्र प्रसूता ॥ ४२ ॥ मधौ मन्द मन्द मरुति शिशिरे वाति रुचिरे कुलस्त्रीभि कृष्णे विहरति तथा वृष्णिनिकरे । उषा योषा तोषाद्बदनमलिम्बस्य मिषतो पुर पत्यु कामाच्छ्वशुरमियमालिङ्गति सती ॥ ४३ ॥ सभ सराध्येश पुरभिदमनल्पेन तपसा महेन्द्र सतोष्य त्रिदशरिपुनाशादसुकरात् । समायाते पार्थ द्रुपदतनया क्लेशविकला पुर पत्यु कामाच्छ्वशुरमियमालिङ्गति सती ॥ ४४ ॥ कदाचित्सा स्वाली विपिनभुवि भीमेन बहुश कृशाङ्गि श्रान्तासि क्षणमिह निषीदेति गदिता । शनै शीतच्छाय तटनिटपिन प्राप्य मुदिता पुर पत्यु कामाच्छ्वशुरमियमालिङ्गति सती ॥ ४५ ॥ तपापाये गोदावरतटभुवि स्नातुमनसि प्रविष्टे तत्पूर भगवति मुनौ कुम्भजनुषि । द्रुत लोपामुद्रा स्वयमविकल गन्तुमुदिता पुर पत्यु कामाच्छ्वशुरमियमालिङ्गति सती ॥ ४६ ॥ सर्वस्य द्वे सुमतिकुमती सपदापत्तिहेतू वृद्धो गोत्रे प्रभवति पुमान्य कुटुम्ब बिभर्ति । वृद्धो यूना सह परिचयात्त्यज्यते कामिनीभि स्त्रीपुवच्च प्रभवति यदा तद्धि गेह विनष्टम् ॥ ४७ ॥ [3]ये पाप शमयन्ति सगतिभृता ये दानशङ्कारिणो येषा चित्तमतीव निर्मलतर येषा न मम मतम् । ये सर्वान्सुनयन्ति हि प्रतिदिन ते साधवो दुर्लभा गङ्गावङ्गजगण्डवद्गगनवद्गाङ्गेयवद्वैयनत् ॥ ४८ ॥ हारो भाति कुचद्वय तव शुभे मध्य वपु सद्वच केशा नासिकमौक्तिक सुवदने दर्पाङ्गरागो दृश । गङ्गाजगण्डवद्गगनवद्गाङ्गेयवद्वैयजम्बूफलबिन्दुवज्जलजवज्जम्बालवज्जालवत् ॥ ४९ ॥ यत्कण्ठे गरल विराजतितरा शीर्षे च मन्दाकिनी उत्सङ्गे च गिरिजामुख

(२८) 'ठठठठठठठठठठठ' इति समस्या (२९, ३०) 'सूर्योदये रोदिति चक्रवाकी' इति समस्या (३१) 'चन्द्रोदये नृत्यति चक्रवाकी' इति समस्या (३२, ३३) 'अङ्गारपूर्णं कमल प्रफुल्लम्' इति समस्या (३४) 'सिन्दूरबिन्दुर्विधवाललाटे' इति समस्या (३५) 'रमा मुदा शङ्करमालिलिङ्ग' इति समस्या (३६) 'हुताशनश्चन्दनपङ्कशीतल' इति समस्या (३७) 'हुहुहुहुहुहुहुहुहुहुहु' इति समस्या (३८) 'शशकशृङ्गमय कठिन धनु' इति समस्या (३९) 'मध्याह्ने मुकुलितमम्बुज वनान्ते' इति समस्या (४०) 'राहुर्दिवा ग्रसति पर्व विना किलेन्दुम्' इति समस्या

(४१) 'मशकगलकरन्ध्रे हस्तियूथ प्रविष्टम्' इति समस्या (४२) 'तिलतुषपुटकोणे मक्षिकोष्ट्र प्रसूता' इति समस्या (४३, ४४, ४५, ४६) 'पुर पत्यु कामाच्छ्वशुरमियमालिङ्गति सती' इति समस्या (४७) 'सर्वस्य द्वे', 'वृद्धो गोत्रे', 'वृद्धो यूना', 'स्त्रीपुवच्च' इति चत्वारि पाणिने सूत्राणि समस्या (४८) 'गङ्गावङ्गजगण्डवद्गगनवद्गाङ्गेयवद्वैयवत्' इति समस्या (४९) 'गङ्गावङ्गजगण्डवद्गगनवद्गाङ्गेयवद्वैयवत्', 'जम्बूफलबिन्दुवज्जलजवज्जम्बालवज्जालवत्' इति च समस्या

१ श्वेतचन्दनम् २ कैरामदखण्डितम् ३ मुखम् ४ चुम्बनं कुर्वति सति ५ कान्ते ६ सूर्यातापेन ७ कण्ठेऽश्यकशब्द ८ मान एव धन यस्या मानिन्या इत्यर्थ ९ मध्याह्ने १० सूर्यकिरणसंतप्ताम् ११ नीलवस्त्राञ्चलनिलीनमुखचन्द्राम् १२ स्वर्भानु

१ द्रौपद्या श्वशुरो वायु २ लोपामुद्राया श्वशुर पूरतरण भाषन कुम्भ ३ ये गङ्गाजलसंगतिभूता पाप शमयन्ति ये गजगण्डवद्दानशङ्कारिण, येषा चित्त गगनवदतीव निर्मलतरम्, येषा मन गाङ्गेयवत् अभम्, ये वैयवत्सर्वान्सुनयन्ति इति योजना ४ कस्तूरिकारूचोऽङ्गराग ५ कर्दमवत्

जाक्षि कृतक मन्ये भय योषिताम् ॥ ६८ ॥ उग्रमाहमुदन्वतो जलमतिक्रामत्यनालम्बने व्योम्नि भ्राम्यति दुर्गमक्षितिभृता मूर्धानमारोहति । व्याम याति विषाकुलैरहिकुलै पातालमेकाकिनी कीर्तिस्ते मदनाभिराम कृतक मन्ये भय योषिताम् ॥ ६९ ॥ चित्र नतनमम्बरे शिखरिणी शीतांशुबिम्बे तम सचार जलज कपोतरणित कामागमप्रक्रिया । मीनौ विद्युति तारका विहरण ज्योत्स्ना विकोशाम्बुजे कुर्वाते कुरुते करोति कुरुत कुर्वन्त्यलकुर्वते ॥ ७० ॥ यस्य द्वारि सदा समीरवरुणौ समार्जन हव्यवाट् पाक शीतगुरातपत्रकरण दस्रौ प्रतीहारताम् । देवा लक्षविधि च दासममरा यस्यो दशास्य कथ कुर्वाते कुरुते करोति कुरुत कुर्वन्त्यलकुर्वते ॥ ७१ ॥ कश्चित्तापर्यस्तृषार्ते पथि तेपान्यदनो गम्यमानोऽन्यपान्थ पप्रच्छानन्दलीनो वद पथिक कुतो जह्नुकन्याप्रवाह । तेनासो शीघ्रवाचा प्रचलितमनसा विप्रवर्येण चोचे सूच्यग्रे कूपषट्क तदुपरि नगरी तत्र गङ्गाप्रवाह ॥ ७२ ॥ राम त्वत्कीर्तिवृक्षाद्बहुतरममलादुत्थिता कोरका ये त मध्ये रुद्ररूपोऽप्यजनि खलु यश कोरकस्तस्य चाग्रे । अग्र श्रोणाक्षिकूपास्तदुपरि च शिरस्तत्र चास्ति स्रवन्ती सूच्यग्रे कूपषट्क तदुपरि नगरी तत्र गङ्गाप्रवाह ॥७३॥ उद्दामार्कोग्रदीप्यद्दिनमणिमणिभिर्मिलितान्ते मम ताद्यायुव्याधूयमानज्वलनकणगणाकीर्णधूलिप्रकीर्णे । कान्तारऽम्भिसृपार्ते पथि पथिकमवे क्वापि पाथोदसेना(?)सूच्यग्रे कूपषट्क तदुपरि नगरी तत्र गङ्गाप्रवाह ॥ ७४ ॥ मा साक्षीकृत्य मुग्धे विजयमभिलपँल्लेखयामास शम्भुर्मूल्या मन्मौलिमाला सदशेनवशतीमक्षपातान्विजित्य । गौर्यप्यानङ्गदृष्टीर्जितनखनवभूर्लन्वि शेषा तदिरथ शीर्षाणा सैव बन्ध्या मैम नयनिरभूल्लोचनानामशीति ॥ ७५ ॥ प्रत्येक दिक्पतीशानिलतपनवसून्मन्नतस्त्व यथा भूश्रोपीस्त्व यथा च स्वरसहितलम मूर्छनाग्रामतालात् । कृष्णान्यस्तान्यमौलीक्षणवदवसरे सा च सा च प्रसादाच्छीर्षाणा शेप वन्ध्या नवनवतिरभूल्लोचनानामशीति ॥ ७६ ॥ इन्द्राद्या लोकपाला हरिविधुतपना नागविद्याधराद्या द्वेष्या सर्वेऽपि देवा प्रिय तव वरद कोऽस्ति वन्द्यो गरीयान् । श्रुत्वा याच प्रियाया इति दशमुखत प्राह वाक्य दशास्य शूली शभु पिनाकी शिवभवपशुप शर्व ईशश्च भर्ग ॥ ७७ ॥

(६८, ६९) 'कृतक मन्ये भय योषिताम्' इति समस्या (७०, ७१) 'कुर्वाते कुरुते करोति कुरुत कुर्वन्त्यलकुर्वते' इति समस्या (७०, ७२, ७४) 'सूच्यग्रे कूपषट्क तदुपरि नगरी तत्र गङ्गाप्रवाह' इति समस्या (७५) 'शीर्षाणा सैव बन्ध्या मम नवनिरभूल्लोचनानामशीति' इति समस्या (७६) 'शीर्षाणां शेष वन्ध्या नव नवतिरभूल्लोचनानाम शीति' इति समस्या

१ निदाघे २ १९२० इति संख्या ३ सहस्रशिरसो दिग्गज्ञास्य समायां प्रति गौरीगिरीशपत्नीर्हो भास

---

## प्रहेलिकाः

अपदो दूरगामी च साक्षरो न च पण्डित । अमुख स्फुटवक्ता च यो जानाति स पण्डित ॥ १ ॥ वने जाता, वने त्यक्ता वने तिष्ठति नित्यश । पण्यस्त्री न तु सा वेश्या यो जानाति स पण्डित ॥ २ ॥ गोपालो नैव गोपालस्त्रिशूली नैव शकर । चक्रपाणि स नो विष्णुर्यो जानाति स पण्डित ॥ ३ ॥ उच्छिष्ट शिव निर्माल्य वमन शवकर्पटम् । काकविष्ठासमुत्पन्न पञ्चैतेऽतिपवित्रका ॥ ४ ॥ अनेकसुषिर वाद्य कान्त च ऋषिसंज्ञितम् । चक्रिणा च सदाराध्य यो जानाति स पण्डित ॥ ५ ॥ वने वसति को वीरो योऽस्थिमांसविवर्जित । असिवत्कुरुते कार्य कार्य कृत्वा वन गत ॥ ६ ॥ रविजा शशिकुन्दाभा तापहारी जगत्प्रिया । वर्धते घनमङ्गेन न तापि यमुनापि न ॥ ७ ॥ तरुण्यालिङ्गित कण्ठे नितम्बस्थलमाश्रित । गुरूणा सनिधानेऽपि क कूजति मुहुर्मुहु ॥ ८ ॥ अवलोक्य स्तनौ यस्या गुञ्जाफलविभूषितौ । नि श्वस्य रोदितु लग्ना कुतो व्याधकुटुम्बिनी ॥ ९ ॥

(७७) 'शूली शभु पिनाकी शिवभवपशुप शर्व ईशश्च भर्ग' इति समस्या

१ लेखपत्रम् (२) नौका (३) महोक्ष (४) दुग्ध गङ्गा मधु पट्टसूत्र पिप्पलश्च (५) वल्मीकम् (६) कुलालदोरक (७) तक्रम् (८) कलश (९) शबरस्त्री पुत्रवधूया स्तनौ गुञ्जाफलालकृतौ दृष्ट्वा कुतो नि श्वस्य रुरोद यतो मत्पुत्र यतामनुरक्तस्तया क्षीणशक्तो यथा गजानिहत्य तत्कुम्भस्थलमुक्ताफलहारे स्तनौ विभूषयितु नालम्, अतोऽतिप्रियासक्त्यैर्गुञ्जाफलैर्विभूषयति क्षीणे च सति पुत्रे तदर्जितधननिर्वाह्यवृत्तिकस्य सर्वस्यापि कुटुम्बस्य जीवितसंदेह अतो व्याधकुटुम्बिनी दु खाभिश्वस्य रोदितु लग्ना

१ अरण्ये काष्ठरूपेणोत्पन्ना २ उदके ३ मूल्य दत्त्वा भोग्या स्त्री गणिका यथा द्रव्यदानेन भोग्या तथैवमपीत्यर्थ ४ धेनुर्नापतिव्रतात्वात्क ५ तत्रिशूलाङ्कितत्वाच्चिह्नवान् ६ नादो तत्र च त्रिशूलितत्वाच्चिह्नवान् ७ विलम् ८ वकार आद्यो यस्य ९ कवारोऽन्ते यस्य १० सर्पेण ११ रविरिति महाराष्ट्रभाषायां मन्थानदण्डस्य नाम १२ कुम्भ कूपसरोवरादौ जलेन भृत्वा शिरस्यारोपणसमये तरुण्या हस्ताभ्यामालिङ्ग्यते भर्तापि तरुण्या सोत्कण्ठमालिङ्ग्यते १३ कुम्भो नितम्बस्थाने गृह्यते भर्तापि नितम्बस्थाने गुह्यप्रदेशे तिष्ठति १४ कुम्भो गुरूणां वृद्धजनानामुपगुपविश्य मृत्तानि वदवदायते भर्तापि गुरूणां मातृपितृश्वश्रूश्वशुरजनानामग्रे स्त्रियं कामयते १५ शब्द करोति

भूतेश्वरो दोषानिष्ठको न घमनिरत कीलाल्पो नासुर । नृणा पृष्ठपलाशनो न पिशुन शीघ्रगमो नो हय शश्वद्रात्रिचरो न राक्षसगण कोऽप्य सखि नृष्टि मे ॥ ३७ ॥ सर्वस्वापहरो न तस्करगणो रक्षो न रक्ताशन सर्पो नैव बिलेशयोऽखिलनिशाचारी न भूतोऽपि च । अन्तर्धानपटुर्न सिद्धपुरुषो नाप्याशुगो मारुतस्तीक्ष्णास्यो न तु सायकस्त्वमिह ये जानन्ति ते पण्डिता ॥३८॥ जाता शुद्धकुले जघान पितर हत्वापि शुद्धा पुन स्त्री चेषा वनिता पितेव सतत विश्वस्य या जीवनम् । सङ्गं प्राप्य पितामहेन जनक प्रासूत या कन्यका सा सर्वैरपि वन्दिता क्षितितले सा नाम का नायिका ॥३९॥

## अपह्नुतयः

वदन्ती जारवृत्तान्त पत्यौ धूर्ता सखीधिया । पतिं बुद्ध्वा सखि तत प्रबुद्धास्मीत्यपूरयत् ॥१॥ रुचिरस्वरवर्णपदा रस भाववती जगन्मनो हरति । तत्कि तरुणी नहि नहि वाणी बाणस्य मधुरशीलस्य ॥ २ ॥ सीत्कार शिक्षयति व्रणयत्यधर तनोति रोमाञ्चम् । नागरिक किं मिलितो नहि नहि सखि हैमन पवन ॥ ३ ॥ बाले पयोधराणामपतितया नेत्र शक्यते स्थातुम् । उत्कण्ठितासि बाले नहि नहि सखि पिच्छिल पन्था ॥ ४ ॥ प्रहरति न पञ्चबाण केवलमबले निमेषोऽपि । वपति परं न देव क्षणदायी निष्प्रयोग ते ॥ ५ ॥ मधुरस्वना धृतोर्णा मण्याभरणा सुशोभना सुदती । मत्स्कन्धोचितदण्डा भिक्षो दयितास्ति किं न मे वीणा ॥ ६ ॥ रागी भिनत्ति निद्रा तल्प न जहाति निष्ठुर दशति । चतुर किं प्राणेशो नहि नहि सखि मत्कुणव्रात ॥ ७ ॥ आदौ गृहीतपाणि पश्चादारूढजघनकटिभागा । नखमुखलालनसुखदा सा किं रामास्ति नैव भो पामा ॥ ८ ॥ नाथ विलोक्य मेघं नहि नहि पाप तवातिपुण्याया । नहि कथयामि पयोधरमपसारय कञ्चुकीमुरस ॥ ९ ॥ पद्मदृशीरजनिसमा तारामणिभूषणापि कोकिलवाक् । चन्द्रसमा गतवसना हस्तगता स्त्री न मे वीणा ॥ १० ॥ नाथ मयूरो नृत्यति तुरगाननवक्षस कथ नृत्यम् नहि कथयामि कलापिनमिह सुखलापी प्रिये कोऽस्ति ॥११॥ अक्षरमैत्रीभाज सात्कारस्य चारुवृत्तस्य । किं भ्रमो सखि यूनो नहि नहि सखि पद्यबन्धस्य ॥ १२ ॥ इह पुरोऽनिलकम्पितविग्रहा मिलति का न वनस्पतिना लता । स्मरसि किं सखि कान्तरतोत्सव नहि घनागमरीतिरुदाहृता ॥ १३ ॥ तन्वी चारुपयोधरा सुवदना श्यामा मनोहारिणी नीता निष्करुणेन केनचिदहो देशान्तरादागता । उत्सङ्गोचितया तया रहितया किं जीवन प्रेक्षसे भिक्षो ते दयितास्ति किं नहि नहि प्राणप्रिया तुम्बिका ॥ १४ ॥ या पाणिग्रहलालिता सुसरला तन्वी सुवशोद्भवा गौरी स्पर्शसुखावहा गुणवती नित्य मनोहारिणी । सा केनापि हृता तया विरहितो गन्तु न शक्तोऽस्म्यह रे भिक्षो तव कामिनी नहि नहि प्राणप्रिया यष्टिका ॥ १५ ॥

## कूटानि

केशैय पतित दृष्ट्वा द्रोणो हर्षमुपागत । रुदन्ति कौरवा सर्वे हा केशव कथ गत ॥१॥ पानीय पातुमिच्छामि त्वत्त कमललोचने । यदि दास्यसि नेच्छामि नो दास्यसि पिबाम्यहम् ॥ २ ॥ त्रिष भुङ्क्ष्व महाराज सज्जने परिवारित । विना केनै विना नाम्या कृष्णाजिनमकण्टकम् ॥ ३ ॥ अर्जुनस्य इमे बाणा नेमे बाणा शिखण्डिन । सीदन्ति मम गात्राणि माघमा सेगवा इव ॥ ४ ॥ यस्य षष्ठी चतुर्थी च विहस्य च विहाय च । अह कथ द्वितीया स्याद्द्वितीया स्यामह कथम् ॥ ५ ॥ ममर हेमरराङ्क बाण मुञ्चति राघव । सरावणोऽपि मुमुचे मंयेरीनिधर शरम् ॥ ६ ॥ शिरोर्पितपदद्वन्द्वा नासार्पितकरद्वया । अभ्रुद्यत्कस्तनी नारी कथमेतद्भविष्यति ॥ ७ ॥ सुवर्णस्य सुरे-

---

(३७, ३८) मत्कुण (३९) जलवृष्टि यत सा शुद्धनलसमुदाय भूतमेघादुद्भूय स्वजनकस्योत्पादक मेघ विनाशयति, तथापि स्वय शुद्धा स्वच्छजलास्ति पितुरिव समस्तस्य जगतो जीवन च भवति सूर्यकिरणै समुद्रोदके शोषिते सति तस्मान्मेघोत्पत्तिर्भवतीति समुद्रो मेघपिता सा पूर्वोक्ता जलवृष्टिर्मेघस्य पित्रा स्वपितामहीभूतेन सागरेण सह नद्यादिद्वारा संगम प्राप्य तेन तज्जल वर्धयित्वा पुनर्मेघोत्पत्तय एव हेतुर्भवतीति जनक प्रासूतेत्यस्याभिप्राय

---

१ हेमन्तसंबन्धी २ पतिं विना, पक्षे,–पतनाभावेन ३ पङ्किल ४ भ्रूनोत्क्षेपिका, पक्षे,–भ्रूनोत्क्षेपका ५ शोभना दन्ता यस्या सा, पक्षे,–हस्तिदन्तनिर्मितालंकारवती ६ अनुरक्त, पक्षे,–रक्तवर्ण ७ कण्डूरोग ८ अम्बुदम्, पक्षे,–भेऽपापम् ९ मेघम्, पक्षे,–स्तनम्

१ 'न उर' इति पदच्छेद २ समीपे स्थातु योग्यया, पक्षे,–अङ्कमारोढु योग्यया ३ विवाह, पक्षे,–पाणौ धारणम् ४ कुलम्, पक्षे,–वेणु ५ जले ६ मृतकम् ७ कृष्णकाक ८ शृगाला ९ यदि दासी असि नेच्छामि ना दासी असि तदा पिबाम्यहमिति पदच्छेद १० विगत ककारो यस्मात् ११ ककारेण विना १२ नकारद्वयरहितम् १३ कृष्णाजिनम् अत्र ककार षकार नकाराणा निष्कासने 'क आसि अम्' इति स्थिते संधौ कृते 'राज्यम्' १४ शत्रुरहितम् १५ 'माघमासे कर्कटी प्रोक्ता तदपत्यानि सेगवा' इत्युक्त कर्कट्या अपत्यानि यथा जन्मसमये तस्या अङ्गानि विदार्य बहिर्यान्ति तद्वदिमे बाणा ममाङ्गानि विदारयन्तीत्यर्थ १६ सहधर्मिणी १७ मध्यभागे रीति पित्तल तद्विशिष्टम्, पक्षे,–मध्ये रीकारविशिष्ट शरम् शरीरमित्यर्थ १८ 'अधराद्दारुणि पादुका' १९ 'नासा दारूपरि स्थितम्' २० उन्नतस्तनस्य २१ शोभना वर्णा नामाक्षराणि यत्र तस्य

मिति पित्रा नियोजित । तदेव शस्त्र कृतमग्निपितुराज्ञा न लङ्घिता ॥ २९ ॥ कान्ते धावय मे पादाविति भर्त्रा निवेदिता । न तया धावितौ पादौ भर्तुराज्ञा न लङ्घिता ॥ ३० ॥ देवराजो मया दृष्टो वारिवारणमस्तके । भक्षयित्वार्कपर्णानि विष पीत्वा क्षय गत ॥ ३१ ॥ कुमारसम्भव दृष्ट्वा रघुवंशे मनोऽदधत् । राक्षसाना कुलश्रेष्ठो रामो राजीवलोचन ॥ ३२ ॥ विना यौवनमार्गेण गच्छन्तौ लक्षितौ मया । हरे कृत्य दर्शयता पश्येन्मुक्ते न दृश्यते ॥ ३३ ॥ विनायकपते शत्रुस्तस्य नाम षडक्षरम् । पूर्वार्धे तव राजेन्द्र उत्तरार्धे तु वैरिणाम् ॥ ३४ ॥ घोलाकृतिरपारेयो मोरोहसो जलोदरी । कमारिरात्तलीलो वो पाघलो भूकलोऽवतु ॥ ३५ ॥ रामेरा मेऽतिरामेऽतिरमे रामे मनोरमे । सहस्रनामतत्तुल्य रामनाम वरानने ॥ ३६ ॥ यथा नयति कैलास नग गानसरस्वती । तथा नयति कैलास न गङ्गा न सरस्वती ॥ ३७ ॥ मोमारामममादद्वे हयागदलनभष । यस्यैतानि न विद्यन्ते स याति परमा गतिम् ॥ ३८ ॥ तातेन कथित पुत्र लेख लिख ममाज्ञया । न तेन लिखितो लेख पितुराज्ञा न लोपिता ॥ ३९ ॥ वासनावासुदेवस्य वासित भुवनत्रयम् । सर्वभूतनिवासीना वासुदेव नमोऽस्तु ते ॥ ४० ॥ अग्निलोचनसमुत्पन्नज्योतिरुद्गमभासिभि । सदृश शोभतेऽत्यर्थं भूपाल तव चेष्टितम् ॥ ४१ ॥ मुद्गदाली घृतव्याली कवीन्द्र वितुषा कथम् । भक्तमलभसयोगाजाता विगतकञ्चुकी ॥ ४२ ॥ श्रीअभ्राड्घ्रिविष्णुधामाप्य विषमाश्व करोत्ययम् । निद्रां महसपर्णानां पलायनपरायणाम् ॥ ४३ ॥ वति ते कबरीभार सुमन सङ्गात्प्रियेऽति [11] नीलरत्नात् । भवति च [12] [13] वैलापनत्वान्निर्जरसेव्यं कथ न स्यात् ॥ ४४ ॥ यामि विधोरभ्युदिते पुनरेष्यामीति यदुदित भवता । जातैत्तु दन्तमेत नेद तत्त्वेन मुग्धमधु ॥ ४५ ॥ अधुना मधुकरपतिना गिलितोऽप्ययकारदपती येन । भ्रात स पालयेत्त्वा

---

१ नतया नम्रीभूतया २ हे देवर' अनदछाम ३ सेतु ४ पानीयम् ५ वास ६ रघुवंशे कुलश्रेष्ठो राजीवलोचनो रामो राक्षसाना कु पृथिवीं मारयति पीडयतीति कुमार पृथ्वीपीडक इति यावत् तादृश सम्भवमुद्भव दृष्ट्वा तत्र तेषा नाशे मनोऽदधत् निक्षिप्तवानित्यर्थ ७ यौ विना पक्षिणा गरुडेन वाहनेन वनमार्गेण जलमार्गेण क्षीराब्धाविति यावद् गच्छन्तौ स्त ,अत्र वाक्ये मया लक्ष्म्या सहितस्य हरेर्विष्णो कृत्य नमिन प्रोक्तमस्ति, पर दर्शयता दर्शन कारयति वेपामन पश्येत्सुखे सत्यपि अविमृष्टाक्लिष्टत्वाय न दृश्यते न ज्ञायते ८ वीना पक्षिणा नायको गरुडस्तस्य पतिर्विष्णुस्तस्य ९ 'हिरण्य कशिपु ' इत्यर्थ १० हिरण्य सुवर्णम् ११ कशिपुस्तल्पम् तव शत्रवो निद्रिता भवन्त्विति भाव १२ कमारि श्रीकृष्णो वो युष्मान् अवतु रक्षतु कथभूत कमारि ? घोलाकृति , घोलकस्य मुकुरस्य रूप यस्य स पु० क०, अपारेय अपारे संसारे क्वणति रमति तथा यद्वा,-अपारे समुद्रे वसतीति क्षीरमे , समुद्रशायीत्यर्थ पु० क०, मोरोहस माया लक्ष्म्या उरो वक्षस्तत्र हस इव हस पु० क०, जलोदरी जले उन्ये उदर गृह यस्यास्तीति [illegible] पु० क०, आत्त लीला आत्ता कृष्टा गृहीता लीला विलासो येन स पु० क०,पाघल पा शिश्येन अघ लुनातीति स पु० क०, भूकल भुव कल्पयति उद्धरतीति स १३ हे वरानने ! अह रामे अतिरमे कथभूते रामे अतिरामे अतिक्रान्ता रामा येनासौ तस्मिन्सुन्दे महाणि पु० क०, मनोरमे मनो रमयतीति तस्मिन् कथभूत अहम् ? रामरा राम एव रा द्रव्य यस्य स यत कारणान्मे मम सहस्रनामभिस्तुल्य रामनाम अत इति कारणात् । अथवा अह रामे अतिरमे कथभूते रामे ? वरानने वरमानन यस्यासौ तस्मिन् उत पार्वत्या संबोधनं वा कथभूतं रामनाम ? सहस्रनामतत् सहस्रनाम तनोतीति सहस्रनामतत् 'रमन्ते योगिनो यत्र परानन्दे चिदात्मनि । अतो रामपदेनासौ परं ब्रह्माभिधीयते ॥' इति १४ गानसरस्वती यथा कैलासं नग नयति तथा न गङ्गा न सरस्वती प्रापयति १५ मोह माया राग मद मत्सरा । दम्भ द्वेष इति प्रथमाक्षरानुक्रमेण ग्रहणम्

¹ नतेन नम्रीभूतेन २ हे वामन वासयतीति वासनस्तस्य संबुद्धौ त्व भुवनत्रय अव रक्ष पालय कथभूत भुवनत्रयम् सर्वभूतनिवासि सर्वाणि भूतानि निवसन्त्यस्मिंस्तत् हे असुदेव प्राणेश्वर ! हला पामादीना वासित स्य अन्त कुरु हे वासुदेव ! ते तुभ्य नम अस्तु ॥ अथवा असुते न स्तौतीति असुत् तस्मै स्तोतुमशक्याय वसुभिदा द्यतीति वासुदेव तस्य संबुद्धौ हे वासुदेव ! अथवा वसुदेवशब्दितं शुद्धं सत्त्वं तत्र भवो वासुदेवस्तस्य संबुद्धौ ते तुभ्य नम अस्तु अमून्प्नातीति असुदेव , यद्वा, असता देव असुदेव हे असुदेव ॥ गणेश पक्षे,—हे सर्वभूतनिवासीन सर्वभूते मह निवासकारी रुद्र म इन पितृत्वात्स्वामी यस्येति तथोक्तस्तथा हे अम्बासुत ! अम्बा पार्वती माता तस्यै सुख ददाति तथोक्त हे पार्वतीनन्दनेत्यर्थ तथा हे इव इ मही याति भक्तानुग्रहीतु प्राप्नोतीति तत्संबुद्धौ ते तुभ्य नमो नतिरस्तु त्व भुवनत्रय त्रिलोकीं अवसि पालयसि कथभूत भुवनत्रयम् ? अवासितम् वास आश्रयो जातो यस्येति वासितम्, न वासित अवासितम् निराश्रयमित्यर्थ क्या अवसि ? वासन एवाश्रय एव नौ दु खमागरतरणाय हनुभूता तरी तया विं०, सुरे शोभनपदे वरदानपरायणे वरद समूहे श्रेष्ठे इति शेष ॥ हरिपक्षे,—हे इन स्वामिन् ! तथा हे अम्बासुर अम्बाव मातृवत् [illegible] शोभन ददातीति हे तथोक्त तथा हे इव ई लक्ष्मी वाति प्राप्नोति म इव तत्संबुद्धौ यद्वा,-हे अम्बासुदेव इत्येक संबोधन पदम् अम्बा माता असुद प्राणदाता पिता कथ्यते तथैव लक्ष्मी वाति प्राप्नोतीति हे तथोक्त जगता मातृत्वं पितृत्व चेति संबोधनाभिप्राय ते नमोऽस्तु ३ चन्द्रविलसितैभि कुमुदैरित्यर्थ ४ बलदे स्नानमान ५ आकाशम् ६ ससाक्ष , सूर्य इत्यर्थ ७ संकोचम् ८ पद्मानाम् ९ क इव ब्रह्मेव आचरति १० पुष्पाणाम्, पक्षे,-देवानाम् ११ अ इव विष्णुरिवाचरति १२ भव इव शिव इवाचरति-१३ कलापो भूषण तद्धरात्, पक्षे -कलापश्च दस्तधरत्वात् १४ जरारहितैस्तरुणै सेव्य ; पक्षे,-निर्जरैर्देवै सेव्य १५ ?रे, पक्षे,-चन्द्रे १६ वृत्तान्तम्, पक्षे,-उष्मरश्मिम् १७ इद तत्त्वेन सत्यत्वेन पक्षे,-दन्तत्वेन दशनत्वेन १८ अपगतो धुकारो यस्यासौ १९ मधुकरपतिर्भ्रमरपतिस्तेन २० यकारदपौ यो दंपती दन्तीत्यर्थ

धिग्धिक् ॥ ६२ ॥ [1]गोगेन्द्रवाहनभोजनभक्ष्योद्भतपमित्र सपत्नजशत्रो । वाहनवैरिकृतामनतुष्टा मामिह पातु जगत्त्रयजुष्टा ॥ ६३ ॥ नदीज लङ्केशवनारिकेतुर्नगाह्वयोनाम नगारिसूनु । एषोऽङ्गनावेषधर प्रमाथी जित्वाव य नेष्यति चाद्य गा च ॥ ६४ ॥ [3]गोकर्णशाडाभरण यदीय यद्व्यहव्यादजमाददाह । भेनचूडामणिरादिगन्तात्पायादपायादुरगात्मजार्धं ॥ ६५ ॥ विलासिनी काञ्चनपट्टिकाया पौटीरपङ्कैर्विरही विलिख्य । तस्या कपोले व्यलिखत्पवर्गं तवर्गमोष्ठे चरणे टवर्गम् ॥ ६६ ॥ काचिद्वियोगानलतप्तगात्री प्राणान्समाधारयितु लिलेख । बाह्वोर्भुजग हृदि राहुबिम्ब नाभौ च कर्पूरमय महेशम् ॥ ६७ ॥ नेत प्रयाणोन्मुखता समीक्ष्य नक्षत्रमुक्तावलिमस्य कण्ठे । जधा रयत्सा स तु वासराणा सग्यापरोऽभूत्सखि कोऽत्र भाव ॥ ६८ ॥ गौरीक्षण भूधरजाहिनाथ पत्र तृतीय दयितो पवीतम् । यस्याम्बर द्वादशलोचनाख्य काष्ठा सुत पातु

सदाशिवो च ॥ ६९ ॥ [1]पुष्पेषुमाता पुरुषायमाणा लज्जावती विश्वसृज विलोक्य । नाभीसरोजे नयन मुरारेर्वामेतर वारयति स्म चित्रम् ॥ ७० ॥ [2]मृगत्रय भाति वपुष्यवेशे फलानि चत्वारि सुमानि पञ्च । कपोलपट्टक प्रमदालताया पृच्छन्ति मध्य विदुष कवीन्द्रा ॥ ७१ ॥ इन्दीवराक्ष्या स्फुटविद्रुमोष्ठ्या सकेतमुद्दिश्य वने चरन्त्या । चौरे समस्ताभरणानि हृत्वा नासामणिर्नापहृत किमेतत् ॥ ७२ ॥ नृसिंहदेवे चलिते भरेण प्रत्यर्थिभूते क्रियते भरेण । कण्ठे कुठार कमठे ठकार शेषे ढकारस्तपने चकार ॥ ७३ ॥ कुभेनसुपीनयनाश्रयाशदग्धोन्मदा दर्दुरहर्षकाले । स्वजम- भक्षप्रियभोजनाशा नृत्यन्ति भीमानुजगोजभाज ॥ ७४ ॥ शिरसि देवनदीं पुरवैरिण सपदि वीक्ष्य धराधरकन्यका । निविडमानवती रमणाङ्कके क्वचन चुम्बनमारभते स्म सा ॥ ७५ ॥ काचिद्विलोलनयना रमणे स्वकीये दूर गते सति मनोभवबाणखिन्ना । त्यक्तु शरीरमचिरा मलयाद्रिवायु सौरभ्यशालिनमहो पिबति स्म चित्रम् ॥ ७६ ॥ कोऽता रुचिं

१ गवागच्छतीति गोग शिवस्तज्ज कार्तिकेयस्तस्य वाहन मयूरस्तस्य भोजन भक्ष्य सर्पस्तस्य भक्ष्य वायुस्तज्जनो हनूमास्त पातीति स तस्य सुग्रीवस्तस्य मित्र रामस्तस्य सपत्नो रावणस्तज्जन इन्द्रजित्तस्य शत्रुरिन्द्रस्तस्य वाहन ऐरावतस्तस्य वैरी सिंहस्तेनोपविष्टा अत एव सर्वोपरि तुष्टा अम्बिका मा पातु रक्षतु २ भो नदीज गङ्गातनय भीष्म एष दृश्यमान अङ्गनावेषधर स्त्रीरूपधारी लङ्केशवनारिकेतु रावणवनभञ्जकहनूमध्वज नगाह्वयोऽर्जुननामा नगारिसूनुरिन्द्रपुत्र भो भो कौरवा । जय प्रमाथी हन्ता अद्य वो युष्माञ्जित्वा गाश्च नेष्यतीत्यर्थ ३ उ शिव त्वं धरणिं अपायादपायाद्रक्षतु स क गोकर्णा सर्पास्तेषा राट् वासुकि यदीय आभरणम् हव्यते तद्धव्यम गोरिद गव्य, गव्य च तद्धव्य च गव्यहव्यम् गव्यहव्यमत्तीति गव्याद व्याद् वह्नि यस्य शिवस्य गव्यहव्याद्वह्निरिल्लनेन यस्यकस्य तृतीयनेत्रोत्थवह्निरित्यर्थ स अज अनङ्ग आददाह यस्य तृतीयनेत्रोत्थो गव्यहव्याद्वह्नि मदन भस्मीकृतवानित्यर्थ इभूत भाना नक्षत्राणा इन स्वामी चन्द्र एव चूडामणिमुकुटरत्न यस्य स पु० क० अगात्मजा पार्वती अर्धे अर्ध वा यस्य स आदिग अन्ताद्दिगन्तेभ्य आ इति दिगन्तमर्यादीकृत्य आदिगन्त तस्मात् ४ चन्दनद्रवे ५ गले ६ पवर्गस्य ओष्ठस्थानीयत्वात् ओष्ठाभ्यां तव चुम्बन करिष्यामीति सूचितम् ७ तवर्गस्य दन्तस्थानत्वाद्दन्तैस्तवौष्ठौ खण्डयिष्यामीति सूचितम् ८ टवर्गस्य मूर्धस्थानत्वाद्यदि त्व गच्छसि तर्हि त्वा शिरसा नमामीति सूचितम् ९ सर्पग्रासभीत्या प्राणा स्वतो न निर्गमिष्यन्तीत्यभिप्रायेण बाह्वोर्भुजग लिलेख चन्द्रश्च स्वभावतया सुतिसिद्धमृताना मनो महीतुमागच्छेदित्यभिप्रायेण हृदि राहुम्, मन्मथत्रासाय शिव च लिलेखेति भाव १० नक्षत्रमालाधारणेन नक्षत्रोदयवेलाया मागमन कृत भविता तथा सूच्यते वासरसंख्याकरणेन सप्तदिनमध्य एव मया गन्तव्य इति तेन सूचितम् ११ स भवानीशिवो वो युष्मान्पातु स क । यस्य गौ वृषभ पत्र रथ तथा ईक्षण तृतीय यस्य भूधरजा पार्वती दयिता यस्य अहिनाथ शेष उपवीत यस्य अम्बर वस्त्र काष्ठा दिशो यस्य द्वादशलोचनाख्य कुमार सुतो यस्य इत्यन्वय

१ पुष्पेषोर्मदनस्य माता लक्ष्मी पुरुषायमाणा पुरुषवदाचरन्ती, विपरीतरत कुर्वतीत्यर्थ, विश्वसृज भगवन्नाभिसरोजस्थ ब्रह्माण विलोक्य लज्जावती सती मुरारेर्दक्षिण नयन धारयति स्म यतो भगवन्नेत्रे हि सूर्यचन्द्रात्मके, तत्र दक्षिणस्य सूर्यात्मकत्वात्तद्वारणेन सरोज मुकुलित भवेत् ततश्च ब्रह्मापि सरोजकोशेऽन्तर्हितो भवेत् इति मनसि कृत्वा तद्धारयामासेति भाव २-३ उपरि अक्ष्णो नीलच्छाया अधस्तात् ओष्ठस्य रक्तवर्णच्छाया तयो प्रतिबिम्बितं नासामौक्तिक गुञ्जाफलमिति मनसि कृत्वा चोरैर्न हृतम् इत्यभिप्राय ४ नृसिंहदेवे सेनाभरेण सह यात्रार्थं चलति प्रत्यर्थिभूते शत्रुभूपतिभि सेनाभि सह पलायमानैर्भरेण मानसमाधिक्येन कण्ठे कुठार क्रियते कुठारघाततुल्या पीडानुभूयते तथा च भरेण सेनासमूहगुरुत्वेन कमठे ठकार क्रियते भूमरधर कूर्मावतारोऽङ्गसंमर्दभीत्या पाणिपादमुन्नमय्य सर्वोच्चठकारतुल्योऽभूत् तथा केवल मण्डलाकृतिस्तस्थौ तथा शेषोऽपि एवमिवैव मुख प्रदेशेऽधिकभरेण ढकारतुल्यो वक्रीकृतग्रीवकुण्डलिनोऽभूत् तपने सूर्ये च चकार समुच्चय क्रियते अतिभीत्या तेषां शत्रूणां शतमूर्धेन्यस्तत्र पश्यता इत्यर्थ ५ कु पृथ्वी धरन्ति ते कुभ्रा पर्वता स्तेषामिन स्वामी हिमाचलस्तस्य सू पुत्री पार्वती ता प्रीणातीति प्रीर्महादेवस्तस्य नयनस्य आश्रयाशो नेत्रवह्निस्तेन दग्धो य कामस्तेन उन्मदा उन्मत्ता ६ दर्दुराणा मण्डूकाना हर्षकालो वर्षाकालस्तस्मिन् ७ स्वसात्मजम येषा तानि स्वजन्मानि स्वापत्यानि तानि भक्षयन्ति ते स्वजनमभक्षा सर्पास्त एव प्रिया भोजनस्य आशा येषां ते ईदृशा मयूरा इत्यर्थ ८ अत्र भीमानुजगोजभाज इत्यस्य भीमानुजोऽर्जुन स्तत्संज्ञका ये गोजा गो पृथिव्या जायन्ते ते गोजा वृक्षास्तत्रैव पिनस्पृत्ताज्जुनवृक्षा येनाधितिष्ठन्त इति यावदित्यर्थ एषा टीका विद्वन्मुखमण्डलेऽपि न्यूनैव ९ सविषे गले १० मलयस्थचन्दनैस्तनिर्भपत्निकामात्यकुटसंपृक्तस्य वायो सविषस्याघ्राणेन शीघ्रं मे मरण स्यादिति बुध्या न पपाविति गूढाशय ११ कान्ता हारे रुचिं धत्ते, मुनिजनो हरे रुचि धत्ते, अवियोगी तरुणो हिमकरे रुचि धत्ते, कामो मकरे निजचिह्नभूते रुचि धत्त, रत्नमणिजडवन्यद्धोत्तर सह करे कुचभूषणेन सह पयोधरयुगे च रुचि धत्ते

द्विजेन्द्रेण । अपि गरलं फणिफूत्कृतिरीक्षणतीक्ष्णांशुशुशुक्षणि
क्षात ॥ ७ ॥ निजकरनिकरसमृद्ध्या धवलय भुवनानि
पार्वण शशाङ्क । सुचिरं हन्त न सहते हतविधिरिह
सुस्थितं कमपि ॥ ८ ॥ यद्यपि शिरोऽधिरोहति रौद्रं कोपेन
सिंहिकातनयः । त्यजति न शरणं यातं सागरसूनुर्मृगं
तदपि ॥ ९ ॥ प्रोषितजति रजनिकरे बन्धुतया न खलु
कैरवाण्येव । म्लायन्ति किंतु सहसा भुवनान्यपि तमसि
मज्जन्ति ॥ १० ॥ शंकरशिरसि निवेशितपदेति मा गर्व-
मुद्वहेन्दुकले । फलमेतस्य भविष्यति तव चण्डीचरणरेणु-
मृजा ॥ ११ ॥ या महेशशिरसो विभूषणं या त्रिलोक-
जनलोचनोत्सवः । सेयमिन्दुकलिका दिनात्यये तापिता
कमिह नातितापयेत् ॥ १२ ॥ रञ्जिता न ककुभो निवेशिता
नार्चिषो बत चकोरचक्षुषु । यद्यमिन्दुरुदये निपीयते दारुणेन
तमसा बलीयसा ॥ १३ ॥ क्षिपति प्रकरं गवां प्रकर्षं सुमनः
स्वच्छतरं विधो कलानाम् । कति चेत्कलयन्ति यत्प्र-
बोधं कति चेत्रेति स तत्त्वभाव एव ॥ १४ ॥ निधे कला-
नामपि रीतिरेषा मर्माणि मे संस्पृशतीव भूयः । कुतो
विशेषात्कुमुदेऽनुरागः कुतो विरागश्च कुशेशयेषु ॥ १५ ॥
निष्पीडितो यद्यपि दैवयोगान्निशाकरश्चापि विधुंतुदेन ।
तथापि पीयूषविशेषवर्षी सुधाकरः कैरवकाननेषु ॥ १६ ॥
वक्रोऽस्तु बाल्ये तदनु प्रवृद्धः कलङ्कवानस्तु जडोऽस्तु
चन्द्रः । महेशमौलौ च पदं दधातु जायेत वन्द्यो विविधो-
पकारात् ॥ १७ ॥ तारागणाश्चन्द्रमसं भजन्ते न जातु
नाथं नलिनाकराणाम् । एतावता तस्य किमस्ति हानिर्नांता
तयोरन्तरमेव लोकः ॥ १८ ॥ यस्योदयेनैव दिशां प्रसाद-
स्तापापनोदोऽपि जगत्त्रयस्य । चकोरचक्षुःपुटपारणे तु
चन्द्रस्य तस्यास्ति कियान्प्रयासः ॥ १९ ॥ प्रकुर्वता संगति
मिन्दुनाधुना किं किं च लब्धं जगदीश्वरेण वै । कलङ्क
हानिं सुरसिन्धुसंगमं कलाक्षयित्वं च पदं तयोश्चके ॥२०॥
नयनमसि जनार्दनस्य शम्भोर्मुकुटमणिः सुदृशां त्वमादि-
देवः । त्यजति न मृगमात्रमेकमिन्दो विरमिति येन कल-
ङ्किनं वदन्ति ॥ २१ ॥ विरम तिमिर साहसादमुष्माद्यदि
रविरस्तमितः स्वतस्ततः किम् । कलयसि न पुरो महोर्मि
धारायुतिनिधिरभ्युदयत्ययं शशाङ्कः ॥ २२ ॥ आस्ते विधुः
परमनिर्वृत एव मौलौ शम्भोरिति त्रिजगतीजनचित्तवृत्तिः ।
अन्तर्निगूढनयनानलदाहदुःखं जानाति कः परमृते बत
दीनरत्ने ॥ २३ ॥ एषैव साम्रतमयी सुतरामनर्घ्या काप्य
स्त्यसौ हिमकरस्य कला यथेव । आरोपितो गुणविदा

१ मुनीयनेत्रभिरस्तोऽशाशि २ राहुणा ३ राहुणा ४ कुमुद
वनेषु ५ मूढम् ६ अयथावदारम्भाद् ७ पश्यसि ८ शुद्ध

परमेश्वरेण चूडामणौ न गणितोऽस्य कलङ्कदोषः ॥ २४ ॥
श्रेयान्विधोर्बहुलपक्षपरिक्षयोऽपि नो पूर्णतापि जलधैरिह
वर्णनीया । यद्वारि न स्पृशति हन्त पृथग्जनोऽपि यस्यामृतै-
र्मखभुजोऽपि मुदं लभन्ते ॥ २५ ॥ मारस्य मित्रमसि
किं च सुधामयूख शम्भावपि प्रणयिता प्रकटीकरोषि । विश्वास
पात्रमसि यद्द्विपतोस्तयोरप्येतत्तव प्रकृतिशुद्धतनोश्चरि-
त्रम् ॥ २६ ॥ रत्नाकरो जनयिता सहजश्च वर्गः किं कथ्यता
ममृतकौस्तुभपारिजाताः । किं तैरचिन्त्यमिह तत्पुन-
रन्यदेव तत्त्वान्तरं कुमुदबन्धुरसौ यदिन्दुः ॥ २७ ॥
नानन्दि कैरवमवर्षि न चाम्बुराशिरादीपि नाम्बरमहारि न
चान्धकारः । धिग्दैवदुर्विलसितं यदसौ सुधांशुरभ्युद्यतश्च
तमसा कवलीकृतश्च ॥ २८ ॥ चन्द्रः समाश्रयति नाम तिथि-
स्त्वनेकाः क्षीणस्तु बिम्बपरिपूर्णमपूरणाय । एवं पुनः सकल-
मण्डलपूर्णवर्णं सा पूर्णिमैव खलु पूरयितुं समर्था ॥ २९ ॥
मेरा दिशः कुमुदमुद्रिदुरं पिबति ज्योत्स्नाकरम्भमुदर-
म्भरयश्चकोराः । आः कीदृगत्रिमुनिलोचनदूषिकायाः पीयूष-
दीधितिरिति प्रथितोऽनुरागः ॥ ३० ॥ हिमकर परभागं भूष
यिष्यन्सुमेरोर्नजसि यदि तदाहं न क्षमः सन्निरोद्धुम् । इति
तु बहुविधाभिः काकुभिः प्रार्थये त्वां पुनरपि कुमुदानामेत्य-
हार्यो विषादः ॥ ३१ ॥ कलत्रस्तारा सम्यग्वहसि यदसि
त्वं द्विजपतिर्द्युतिस्तादृमूर्वा जनिरपि च रत्नाकरकुले । बहु
भूमः किंवा पुरहरशिरोमण्डलमसि त्वदीयं तत्सर्वं शशधर
कलङ्काद्विफलितम् ॥ ३२ ॥ पादन्यासं क्षितिधरगुरोर्मूर्ध्नि
कृत्वा सुमेरोः क्रान्तं येन क्षपिततमसा मध्यमं धाम विष्णोः ।
सोऽयं चन्द्रः पतति गगनादल्पशेषैर्मयूखैर्दूरारोहो भवति
महतामप्यपभ्रंशहेतुः ॥ ३३ ॥ [redacted] मो शम्भोर्निवससि
शिरोदेशमाश्रित्य नित्यं तत्त्वा याचे जगदुपकृतिव्यापृतिव्यग्र
मिन्दो । यः सद्भावस्तव परिणतः कैरवे या चकोरे स्पृहय-
स्तेन प्रतिनिशमसौ चक्रवाको वराकः ॥ ३४ ॥ यज्ञा-
तोऽसि पयोनिधौ हरजटाजूटे प्रसिद्धोऽसि यद्विश्वसोदर-
दीपत्रोऽसि विधिना सृष्टोऽसि यच्चामृतं । भ्रातः शीत-
मयूख सर्वमधुना म्लानीकृतं तत्त्वया राजीवं यदपास्य कैरव-
कुलं नीतं विकासास्पदम् ॥ ३५ ॥ पीयूषं वपुषोऽस्य हेतु-
रुदयो विश्वस्य नेत्रोत्सवः पुष्टं भानुकरैरिदं त्रिभुवनं
ज्योत्स्नाभरे सिञ्चति । सर्वाशाप्रतिरोधकान्धतमसप्रध्वंसाय
बद्धोद्यमो धिग्धातारमिहापि लक्ष्म लिखितं यस्य प्रवृत्तं
मनः ॥ ३६ ॥ उच्चैः स्थानकृतोदयैर्बहुविधैर्ज्योतिर्भिरुद्यत्प्रभै
दुत्राधैः त्रिममीभिरत्र वितथा प्रौढिं दधानैरपि । यावल्लोक-
तमोपहेन भवता लक्ष्मीर्न विस्तार्यते तावचन्द्र कथं

१ मन्मथस्य २ प्रीतिम् ३ राहुणा ४ नश्वरे

परादिषु क्वापि । तत्किं तत्र न मुञ्चसि मुक्ता मुक्ता भवति यत्राप ॥ १७ ॥ धीरध्वनिभि[1]रल ते नीरद मे मासिको गर्भ । उन्मदवारणबुद्ध्या[2] मध्येजठर समु[3]च्छलति ॥ १८ ॥ जलद समुद्रसेवामा[4]चरसि समग्रभुवनभर णाय । कुरुते तामपि [5]हतमति[6]रात्मभरिरनिशमो[7]र्वाग्नि[8] ॥१९॥ सर्वं[9] वन तृणाल्या पिहित पीता मिताशुरविताश । प्रध्वस्ता पन्थानो मलिनेनोद्भम्य मेघेन ॥ २० ॥ प्रावृषि शैलश्रेणीनितम्बमुज्झन्दिगन्तर भ्रमसि । चपलान्तर घन किं तव वचनीय पवनवश्योऽसि ॥ २१ ॥ यद्यपि सन्ति बहूनि सरासि स्वादुसुशीतलसुरभिपयासि । चातकपोत स्तदपि च तानि त्यक्त्वा याचति जलदजलानि ॥ २२ ॥ एतदत्र पथिकैकजीवित पश्य शुष्यतितरा महत्सर । धिङ् मुधाम्बुधर रुद्धसन्ततिवर्धिता निमिह तेऽद्रिवाहि नी ॥ २३ ॥ मुञ्च मुञ्च सलिल दयानिधे नास्ति नास्ति समयो विलम्बने । अद्य चातककुले मृते पुनर्वारि वारिधर किं करिष्यसि ॥ २४ ॥ चातकस्य खलु चञ्चुसपुटे नो पतति किल वारिबिन्दव । सागरीकृतमहीतलस्य किं दोष एष जलदस्य दीयते ॥ २५ ॥ ऊपरेषु विवरेषु चाम्भसा वीचयोऽपि भवता विनिर्मिता । क्षेत्रसीम्नि निहितास्तु बिन्दवो वारिवाह भवतो नमो नम ॥ २६ ॥ आपो विमुक्ता क्वचिदपि एव कश्चिन्न किंचिद्वरल क्वचिच्च । यस्मिन्विमुक्ता प्रभवन्ति मुक्ता पयोद तस्मिन्विमुख कुत स्त्वम् ॥ २७ ॥ पानीयमानीय परिश्रमेण पाथोद पाथो निधिमप्यतस्त्वम् । कल्पद्रुमे सीदति साभिलाषे महोषरे मुञ्चसि किंनिमित्तम् ॥ २८ ॥ पपात पाथ कणिका न भूमावबाप शान्ति ककुभा न ताप । दृष्टेन जीवातुरय तडित्वान्कृषीवलाना मुदमातनोति ॥ २९ ॥ प्रथितोऽसि यत स्तत पृथिव्यामपि जीमूत जनस्य जीवनेन । निपयानपि गच्छत किमेतान्ध्वनिभिर्भापयसीह राजहसान् ॥ ३० ॥ गर्जितबधिरीकृतककुभा किमपि कृत न घनेन । कियती चातकचञ्चुपुटी सापि भृता न जलेन ॥ ३१ ॥ गर्जसि मेघ न यच्छसि तोय चातकपक्षी व्याकुलितोऽहम् । दैवा दिह यदि दक्षिणवात क्व त्व क्वाह क्व च जलपात ॥३२॥ वितर वारिद वारि दवातुरे चिरपिपासितचातकपोतके । प्रचलिते मरुति क्षणमन्यथा क्व च भवान्क्व पय क्व च चातक ॥ ३३ ॥ किसलयानि कुत कुसुमानि वा क्व च फलानि तथा नवनीरधाम् । अयमकारणकारुणिको न चेद्वितरतीह पयासि पयोधर ॥ ३४ ॥ पयोद हे वारि ददासि वा न वा त्वदेकचित्त पुनरेष याचक । वर महत्या म्रियते पिपासया तथापि नान्यस्य करोत्युपासनाम् ॥ ३५ ॥ दीनानामिह परिहाय शुष्कसस्यान्यौदार्य प्रकटयतो महीधरेषु । औन्नत्य परममवाप्य दुर्मदस्य ज्ञातोऽय जलधर तावको विवेक ॥ ३६ ॥ अन्योऽपि चन्दनतरोर्महनीयमूर्ते सेकार्थमुत्सहति तद्गुणबद्धतृष्ण । शाखोटकस्य पुनरस्य महाशयोऽयमम्भोद एव शरण यदि निर्गुणस्य ॥ ३७ ॥ आश्वास्य पर्वतकुल तपनोष्मतप्त दुर्दावबह्निविधुराणि च काननानि । नानानदीनदशतानि च पूरयित्वा रिक्तोऽसि यज्जलद सैव तवोत्तमा श्री ॥३८॥ एतेषु हा तरुणमारुतधूयमानदावानले कवलितेषु महीरुहेषु । अम्भो न चेज्जलद मुञ्चसि मा विमुञ्च वज्र पुन क्षिपसि निर्दय कस्य हेतो ॥ ३९ ॥ शोषं गते सरसि शैवलमञ्जरीणामन्तस्तिमि[1]र्लुठति तापविशीर्णदेह । अत्रान्तरे यदि न वारिद वारिपूरैराप्लावयेस्तदनु किं मृ[2]तमण्डनेन ॥ ४० ॥ शृण्वन्पुर पुरुषगर्जितमम्य हन्त रे पान्थ विह्वलमना न मनागपि स्या । विश्वार्तिवारणसमर्पितजीवनोऽय नाकर्णित किमु सखे भवताम्बुवाह ॥ ४१ ॥ यत्तादृशेषु सरलेषु न पक्षपातो जातो बत स्फुटमसौ कुटजेषु राग । विश्वैकजीवनपटोरपि वारिवाह दुर्वारवायुवशगस्य न तद्वि चित्रम् ॥ ४२ ॥ यत्पल्लव समभवत्कुसुम यदासीत्तत्सर्वमस्य भवत पयस प्रसाद । यन्महीरुहे फलविधौ न ददासि वारि प्राचीनमम्बुद यशो मलिनीकरोषि ॥ ४३ ॥ नैपाल बालवलय भरित द्रुमाणा नार्द्रीकृतापि बत चातकपोत चञ्चु । दावानलाकुलतरु शमितो न शीघ्र भाराय वारिधर वारिपद तवाभूत् ॥ ४४ ॥ के वा न सन्ति भुवि वारिरुहावतसा हसावलीवलयिनो जलसनिवेशा । किं चातक फलमपेक्ष्य स वज्रपाता पौरदरीं कलयते नववारिधाराम् ॥ ४५ ॥ वातैर्विधूनय विभीषय भीमनादै सचूर्णय त्वमथवा करकाभिघातै । त्वद्वारिबिन्दुपरिपालितजीवितस्य नान्या गतिर्भवति वारिद चातकस्य ॥ ४६ ॥ व्याजस्तुति स्तत्र पयोद मयोदितेय यज्जीवनाय जगतस्तव जीवनानि । स्तोत्र तु ते महदिद धन धर्मराजसाहाय्यमर्जयसि यत्पथिकान्निहत्य ॥ ४७ ॥ सपादिता सपदि दर्दुरदीर्घनादा यत्कोकिलाकलरुतानि निराकृतानि । निष्पीतमम्बु तरण न तु देवनद्या पर्जन्य तेन भवता विहितो विवेक ॥ ४८ ॥ यस्योदये गुरुमनोरथमन्थरेण सचिन्तित किमपि चेतसि

१ गम्भीरध्वने: २ मत्तहस्तिबुद्ध्या ३ उद्धमन करोति ४ समुद्रसेवाम् ५ मन्दमति ६ स्वोदरपूरक- ७ अहोरात्रम् ८ वाडवाग्नि ९ दावानलपीडिते १० मार्गे

१ मत्स्यविशेष- २ शोभया

चातकेन । आ कल्पमिष्टफलदानविधानहेतोरम्भोधरास्ततति सम्प्रति वज्रवृष्टिम् ॥ ४९ ॥ दैवदहननष्टजलाशयाश्रितानां परिगलितनलानां ध्यायतां भूरुहाणाम् । अयि जलधर शैलश्रेणिशृङ्गेषु तोयं वितरसि बहु कोऽयं श्रीमदस्यावलेपः ॥ ५० ॥ नयसि निरवलम्बैः सीदता दीर्घकालं त्वदभिमुखनिपण्णोत्तानचञ्चूपुटेन । जलधर जलभारं दूरतस्तावदास्तां ध्वनिरपि मधुरस्ते न श्रुतश्चातकेन ॥ ५१ ॥ अये हेलानेवालुलितकुलशैले जलनिधौ कृतो वारामोघ घन जलदमोघ वितरसि । समं तादृक्ताल्कमलकलनगम्भीरावरलनक्रमोपेतानेतानुपकुरु पयोभिर्विटपिनः ॥ ५२ ॥ अमुं कालक्षेपं त्यज जलद गम्भीरमधुरैः किमेभिर्निर्घोषैः सृज झटिति धाराभिः सलिलम् । अये पल्यायस्याभवरणमर्मरव्यतिकरज्वलद्दावज्वालानलैर्जटिलमूर्तिर्विटपिनः ॥ ५३ ॥ अकूपाराद्वारि प्रचुरतरमादाय जलद स दानाध्यक्षोऽपि प्रभिरगिनि जडनाद्भुतमिदम् । स मेघो धन्यो यत्परिकिरति मुक्ताफलतया यदीयासौ कीर्तिर्नटति नृपनारीकुचतटे ॥ ५४ ॥ तवैव प्रावीण्यं जलद जगदानन्दकरणं यदम्भः पालीयाहरसि खलसत्त्वाज्जलनिधेः । निसर्गात्क्षारास्तां नयसि च कथंचिन्मधुरतामथासारैस्तासां युगपदुपकर्षीनसि जगत् ॥ ५५ ॥ विलपति तथा सारङ्गोऽयं भवानयमुन्नतो जलमपि च ते सर्वोगोऽयं कथंचिदुपस्थितः । उपकुरु कुरु मद्वचो नो वेत्सि यदमतो जलधर पुनः कस्त्वं क्वायं क्व ते जलबिन्दवः ॥ ५६ ॥ नीरं दूरं तदपि विरसं जगमा नो स्त्वाधारस्मिन्दातर्यपि जलनिधौ को लभेताम्बुबिन्दुम् । दानाध्यक्षे त्वयि जलधर क्वापि धुनापि शैला शालानन्तोऽमृतनिभजलैः स्वर्पिताः सर्व एते ॥ ५७ ॥ तृस्या नय कमलसरसीराजहंसावतंसा पुण्याश्वेतो हिमगिरिसुतस्तनकृते येन मुक्ता । सन्मार्गेऽस्मिञ्जलद दहनोच्चण्डदाहे निदाघे पर्जन्य स्वीकुरु तमधुना चातकः पानकं वा ॥ ५८ ॥ शैलेयेषु शिलातलेषु च गिरः शृङ्गेषु गर्तेषु च श्रीखण्डेषु विभीतकेषु च तथा पूर्णेषु रिक्तेषु च । स्निग्धेन ध्वनिनाखिलेऽपि जगतीचक्रे समं वर्षतो वन्दे वारिद सार्वभौम भवतो विश्वोपकारि व्रतम् ॥ ५९ ॥ नीहाराकरसारसागरसरित्कासारनीरश्रियं त्यक्त्वा तोयद चातकेन महती सेवा समालम्बिता । तस्यैतत्फलितं समुज्झसि शिलासंताडनं मस्तके गाढं गर्जसि वज्रमुन्दासि तडिल्लेखाभिघातं नमसि ॥ ६० ॥ आरामासमगणस्य पटलचर्यैरापीतनिम्नान्विपपाथोद प्रणम

नयागुप्तगैरेतस्य दानव्रतम् । भूमन्नामुपकारकातर गतप्राया पय सपदो दशोऽप्येष तथर्दिश परिमलैरपूर्यं निर्यास्यति ॥ ६१ ॥ यावत्तिष्ठति चातकोऽयममुमि कण्ठस्थलस्थायिभिः प्राणैर्देहि पय पयोद फलतु त्वद्वारि कल्पद्रुम । नो चेन्मम तृषार्तपीडिततनो प्राणैः प्रयाणे कृते कस्मै दास्यसि को ग्रहीष्यति पुनस्तापस्तु ते स्यास्यति ॥ ६२ ॥ कूपे पानमधोमुखं भवति मे नद्या नयत्कर्य श्रिय सामान्यशकटिहिभिः सह सर्वेषु समालोकयन् । शुष्यत्तालुगलोऽपि कम्पिततनुः श्रुत्वा गभीरध्वनिं धैर्यादुद्धृतकन्धरो जलधर त्वां याचते चातकः ॥ ६३ ॥ मार्गा भूरि जलं मरुस्थलभुवि स्वप्नेऽपि नो लभ्यते तीव्रो वाति समीरणः क्वचिदपि च्छायाभृतो न द्रुमाः । अङ्गारप्रकरानिव रविर्ग्रीष्मे तपत्यम्बरे तद्वो पान्थहिताय पूरय धरां पाथोद पाथोभरैः ॥ ६४ ॥ मेघे कोटरशायिभिर्मृतमिव क्ष्मान्तर्गतं कच्छपैः पाठीनैः पृथुपङ्कपीठलुठितैर्यस्मिन्मुहुर्मूर्च्छितम् । तस्मिञ्छुष्कसरस्यकालजलदेनागत्य तच्चेष्टितं यत्राकुम्भनिमग्नवन्यकरिणा यूथैः पयः पीयते ॥ ६५ ॥ कालाविर्भवणकुरुष्व तडिता विस्फूर्जितैस्त्रासय स्फारैर्भीषणगर्जितैरवितथं कार्ष्ण्यं मुखे दर्शय । अस्मान्नन्यगते पयोद मनसो निश्वासया चातकस्त्वारेद्धि त्वामिच्छाम्बिल तदपि न त्यक्त्वा परं याचते ॥ ६६ ॥ भूयो गर्जितमम्बुद प्रकटिता विद्युल्लता पूरितं दृग्वक्त्रं तिष्ठ तिष्ठ तत्र धृष्टया तनोतु परम् । निर्दग्धाखिलमालिहालिरनघूसनदलैर्नैः परं नैरास्यादिह वर्णितव्यमधुना केनापूरं पयः ॥ ६७ ॥ गर्जनमम्बु ददाति तव कणिकारूपेण यत्र क्वचिद्दूर्वाकाम्यमपेक्ष्य दानसमये कार्ष्ण्यं बिभर्षि मुखे । पश्चात्पाण्डुरतामुपैति लघुतामप्येति भूयस्तनं श्रीमद्दाम नृपालशेखर विभो दाता कियान्वारिद ॥ ६८ ॥ आसक्ता प्रतिकोटरं विषधरा मानो करा मूर्धनि ज्वालाजालकरालदावदहनः प्रत्यङ्गमालिङ्गति । सर्वानन्दनचारुचन्दनतरोरेतस्य जीवातवे रे जीमूत विमुञ्च वारि बहुशो युष्मद्यशो जृम्भताम् ॥ ६९ ॥ रे रे चातकपोतकाः निवृपिना दानाभिमानं घन सन्निर्वापितमुष्णतापिनमयी निर्वापिता सर्वतः । कासारः परिपूरिता पृथुपयोभारैरम्भोधर त्वय्येवायमहो महोर्जितमहादानावदानक्रम ॥ ७० ॥ तारं दुम्यसि सर्वतो वितरसे मुक्ताफलं शुक्तिषु क्षेत्र सिञ्चसि किं च पटलयसि श्रीखण्डमुख्यान्द्रुमान् । क्षारं क्षारमिदं जलं जलनिधेरादाय जीमूत हे विश्वं जीवयसि प्रवीतु जगति प्रौढोऽपि कस्ते गुणान् ॥ ७१ ॥ सतारं जगतो

---

१ दानाब्धि २ ग्लानि प्राप्नुवताम् ३ स्योनो चिनैर्दैन्यमाश्रिते ४ शीघ्रम् ५ स्यात्तदेहस्य ६ कृपस्य ७ उत्तानमुखस्य

१ कृष्णताम् २ प्रतिबिम्ब ३ क्रमादया-

विलुम्पसि धरा धाराभिरामिश्रसि क्षेत्राण्यङ्कुरयस्यमूमुकुलयस्यहाय नीपद्रुमान्। सारङ्गस्य नभोनिवेशितदृशश्चञ्चूपुटीपूरणे वैमुख्य वहसि त्वमम्बुद यदि प्रब्रूहि को नाम तत् ॥ ७२ ॥ कूपाम्भांसि पिबन्तु कूपरसिका वापीषु वापीजुषो नादेयाश्च पतत्रिणोऽपि मुदिता आस्वादयन्त्वम्भः। सारङ्गस्य नभोनिवेशितदृशः किं तेन यावन्महीमम्भोभिः स्नपयन्ननाबुदयते न प्रावृषेण्यो घन ॥ ७३ ॥ कर्तव्यो हृदि वर्तते यदि तरोरस्योपकारस्तदा मा काल गमयाम्बुवाह समये सिञ्चेनमम्भोभरैः। शीर्णे पुष्पफले दले विगलिते मूले गते शुष्कता वृक्षे किं हितमाचरिष्यति परीतापस्तु ते स्यास्यति ॥७४॥ नो चिन्तामणिभिर्न कल्पतरुभिर्नो कामधेन्वादिभिर्नो देवैश्च परोपकारनिरतैः स्थूलैर्न सूक्ष्मैरपि। अम्भोदेह निरन्तर जलभरैस्तामुर्वरा सिञ्चता धौरेयेण धुरः त्वयाद्य वहता मन्ये जगज्जीवितम् ॥ ७५ ॥ हे पाथोद यथोन्नतेन भवता दिग्व्यावृता सर्वतो मन्ये धीर तथा करिष्यसि खलु क्षीराब्धितुल्य सर। किं त्वेष क्षमते नहि क्षणमपि ग्रीष्मोष्मणा व्याकुल पाठीनादिगणस्त्वदेकशरणस्तद्वर्ष तावत्क्वचित् ॥ ७६ ॥ नोच्चैः स्वं ध्वनति सरःसु न मनो वापीषु नापीहितं वर्णेऽप्यर्णवसकथा न च कृता नाद्यापि नद्या मन। सारङ्गेण समुत्सुकाद्गरसनादण्डेन चण्डातपक्लान्तेनापि निरन्तर जलद हे त्वय्येव दत्त मन ॥ ७७ ॥ निःपद्म शिशिरेण धीवरगणैर्निर्मत्स्यनिः कूर्मकं व्याधैर्निर्विहगं निरम्बु रविणा निर्मालूरं दन्तिभि। निःशालूकमकारि शूकरगणैर्नामैकमात्र सरो हे जीमूत परोपकारक पयोदानेन मा पूरय ॥ ७८ ॥ कासारेषु सरित्सु सिन्धुषु तथा नीचेषु नीरग्रह धिक्तत्रापि शिरोनति क्रिमपरं हेय भवेन्मानिनाम्। इत्यालोच्य विमुच्य चातकयुवा तेषु स्पृहामादराद्बद्धोवलय वारिवाह कुरुते धाराधरालोकनम् ॥ ७९ ॥ रे धाराधर धीर नीरनिकरैरेषा रसा नीरसा दोषा पूरकरोत्करैरतिखरैरापूरि भूरि त्वया। एकान्तेन भवन्तमन्तरगत सान्तेन सचिन्तयन्नाश्चर्यं परिपीडितोऽभिरमते यश्चातकस्तृष्णया ॥ ८० ॥ आरामाधिपतिर्विवेकविकलो नून रसा नीरसा वात्याभि परुषीकृता दश दिशश्चण्डातपो दु सह। एव धन्वनि चम्पकस्य सकले संहारहेतावपि त्व सिञ्चन्नमृतेन तोयद कुतोऽप्याविष्कृतो वेधसा ॥ ८१ ॥ ग्रीष्मे भीष्मतरैः करैर्दिनकृता दग्धोऽपि यश्चातकस्त्वा ध्यायन्घन वासरान्कथमपि द्राघीयसो नीतवान्। दैवाल्लोचनगोचरेण भवता तस्मिन्निदानीं यदि स्वीचक्रे करकानिपातनकृपा तत्क प्रति ब्रूमहे ॥ ८२ ॥ स क्षारो जलधिमरासि वितरन्नभ्यागतेभ्यो मित गृह्णन्ते सरित श्रमेण परितोऽप्याधावयन्नब्बलात्। प्राप्य वृषकृत कथचन विमृश्यारोप्य कण्ठे पद तत्त्वा त्यागिनमेकमेव भगवन्पर्जन्य मन्यामहे ॥ ८३ ॥ हर्षं वर्षविधत्से चिरसमयतृषाशुष्यता चातकाना भूमेस्तापोपशान्ति वितरति तरसा लोकशोक धुनोषि। अम्भोदैतत्तवैक परममनुचित यद्विधत्से सुधांशुच्छायामीश करैर्वा बुधमपि वहसि प्रेम खद्योतवर्गे ॥ ८४ ॥

---

## वाय्वन्योक्तयः

वायुरेव महद्भूत वदन्तु निखिला जना। आयुरेवैष भूतानामिति मन्यामहे वयम् ॥ १ ॥ अलिपटलैरनुयाता सहृदयहृदयज्वर विलुम्पन्तीम्। मृगमदपरिमललहरीं समीर किं पामरेषु रे किरसि ॥ २ ॥ परमो मरुत्सखाग्नेस्तेजोवृद्धिं तनोतु त जेतुम्। दीप हरति तदस्य ज्ञान प्रतिपत्तिनिर्वहणम् ॥ ३ ॥ प्राथमिकी घनवृष्टि प्राप्ता शिखिनो निदाघतप्तस्य। आकस्मिकेन सा पुनरपनीता क्वापि पवनेन ॥ ४ ॥ वरतरुविघटनपटव कटवश्चश्चन्ति वायवो बहव। तत्कुसुमबहुलपरिमलगुणविन्यासे कृती त्वेक ॥ ५ ॥ गन्धवाह गहनानि गाहसे गन्धजातमिह सञ्चिनोषि च। नैपुणच्युतिरियं तु तावकी यत्र तत्र सदसद्विवेचनम् ॥ ६ ॥ अहह चण्डसमीरण दारुण किमिदमाचरित चरित त्वया। यदिह चातकचञ्चुपुटोदरे पतति वारि तदेव निवारितम् ॥ ७ ॥ अनिल निखिलविश्वप्राणितिति त्वत्प्रयुक्तसपदि च विनिमीलत्याकुल त्वद्वियोगात्। वपुरसि परमेश सोचित नोचित ते सुरभिमसुरभिं वा यत्समं स्वीकरोषि ॥ ८ ॥ राजीविनीविपिनसौरभसारगन्धियोऽभूदसौ तदिवसेषु जनैकबन्धु। स्थ्यारजांसि विकिरन्विरजन्नगेन्द्रान् मत्तवद्भ्रमति पश्यत सोऽद्य वायु ॥ ९ ॥ ये जाता लघव सदैव गणना याता न ये कुत्रचित्पद्भ्यामेव विमर्दिता प्रतिदिन भूमौ विलीनाश्चिरम्। उत्क्षिप्ताश्चपलाशयेन मरुता पश्यान्तरिक्षे सखे तुङ्गानामुपरि स्थितिं क्षितिभृता कुर्वन्त्यमी पासव ॥ १० ॥ हहो दर्पसमीर सर्पति भवत्यस्मिन्वने शाखिना शाखाघर्षणज स कोऽपि सुचिर जज्वाल दावानल। येनादाहि पलायमानहरिण भस्मीभवद्भूरुह शुष्यन्निर्झरमुत्पतत्खगकुल चेष्टद्भुजग वनम् ॥ ११ ॥ हहो धीर समीर हन्त जनन ते चन्दनक्ष्माभृतो दाक्षिण्य जगदुत्तर परिचयो गोदावरीवारिभि। प्रत्यङ्ग दहतीह मे त्वमपि चेदु-

१ दूरे २ भुजशिरस्सरोज ३ दैन्यिमार्थ

१ मन्यामहेति नना वर्णितत्वात् २ वायुरित्यत्र वायुशब्देनप्राणवायोर्ग्रहणम् भूतानामायुरेवेति भाव ३ जीवति ४ मन्यावश्यम्

द्दामदावाग्निरमत्तोऽयं मलिनात्मको वनचर किं वक्ष्यते कोकिल ॥ १२ ॥ कोऽयं भ्रान्तिप्रकारस्तव पवन घनावस्करस्थानजातं तेजस्विव्रातसेव्ये नभसि नयसि यत्पांसुपूरं प्रतिष्ठाम् । अस्मिन्नुत्थाप्यमाने जननयनपथोपद्रवस्तावदास्तां केनोपायेन सह्यो वपुषि कलुषतादोष एषस्तवैव ॥ १३ ॥

## पर्वतान्योक्तयः

नाथन्यानां निवास विदधति गिरय शेखरीभूतचन्द्रा शङ्गैर्ज्योत्स्नाप्रवाह द्रुतमिव तुहिनं दिक्षु येषु क्षिपन्त । येषामुच्चैस्तरूणामविहतगतिना वायुना कम्पितानामाकाशे विप्रकीर्णं कुसुमचय इवाभाति ताराप्रहौघ ॥ १ ॥

### हिमाचल

तरकुलसुधमापहरा जनयन्तीं जगति जीवजातार्तिम् । केन गुणेन भवानीतात हिमानीमिमां वहसि ॥ २ ॥ विन्ध्यमन्दरसुमेरुभूभृता यत्पतिस्तुहिनपर्वतोऽभवत् । ईश्वरश्वशुरताप्रभावतस्तद्गुन जगति जृम्भते यश ॥ ३ ॥ क्षोणी यस्य हिरण्मयी मणिमय प्राकारशिल्पोच्चय कुञ्जा कल्पलतामया सुरधुनीधारामयो निर्झर । किं चेन्द्रादिसमस्तदिक्पतिपुरीमभ्यति यत्पल्लना शैल सोऽपि गिरिर्वयं च गिरयस्तन्येन मे का मति ॥ ४ ॥

### मेरु

ये सतोपसुरप्रबुद्धमनसलेपामपिनो मृदो येऽप्यन्ये घनलोभसकुलधियस्तेषा तु दूरे नृणाम् । इत्थं कस्य कृते कृत स विधिना तादक्पद सपदा स्वात्मन्येव समाप्तहेम महिमा मेरुर्न मे रोचते ॥ ५ ॥

### विन्ध्य

आचक्ष्महे तन किमयतनीमवस्था तस्याथ विन्ध्यशिखरस्य मनोहरस्य । यत्रैव सप्त मुनयस्तपसा निषेदु सोऽयं विलासवसति पिशिताशनानाम् ॥ ६ ॥

### मलय

किं तेन हेमगिरिणा रजताद्रिणा वा यत्राश्रिता हि तरवस्तरवस्त एव । मन्यामहे मलयमेव यदाश्रयेण शाखोटनिम्बकुटजा अपि चन्दनानि ॥ ७ ॥ वियोतन्ते कति न गिरयस्तेषु किं नोदयन्ते शाखान्त खदिरबदरीशालशाखोटकाद्या । धन्यस्त्वाव मलयशिखरी यत्र जातास्त एव स्वैरामोदैस्त्रिभुवनमथ प्रीणयन्त स्फुरन्ति ॥ ८ ॥

### मन्दर

मुरारातिर्लक्ष्मीं त्रिपुरविजयी शीतकिरण करीन्द्र पौलोमीपतिरपि च लेभे जलनिधे । त्वया किं वा लब्ध कथय मथितो मन्दरगिरे शरण्य शैलाना यदयमदय रत्ननिलय ॥ ९ ॥

### मैनाक

शक्रादरक्षि यदि पक्षयुग तथापि मैनाक सन्ति तव नेह गतागतानि । निःसत्त्वता च निरपत्रपता च किंतु पाथोनिधौ निवसता भवतार्जितानि ॥ १० ॥ वर पक्षच्छेद समदमघवन्मुक्तकुलिशप्रहारैरुद्गच्छद्बहुलदहनोद्गारगुरुभि । तुषाराद्रे सूनोरहह पितरि क्लेशविवशे न चासौ सपातः पयसि पयसा पत्युरुचित ॥ ११ ॥

### लोकालोक

एकस्यायमुदेति मूर्धनि गिरेरन्यस्य चैव क्रमादस्त याति कलानिधिस्तदुभयोरस्त प्रशस्तोऽचल । को नामोदयिन करोति न शिरोमाणिक्यमस्त पुनर्यात य कुरुते भवानिव स दुष्प्रापोऽस्ति पृथ्वीतले ॥ १२ ॥

### रोहण

रोहणाचल शैलेषु कस्तुल्य तुलयेत्तव । यस्य पाषाणखण्डानि मण्डनानि महीभृताम् ॥ १३ ॥ रत्नाना न निमालयो जलनिधि किं न स्थिरा मेदिनी किं न व्योम महत्पद सुकृतिना किं नाम नैवोन्नतम् । हहो रोहण किं न याचकचमूनि शङ्कटङ्काहितक्षान्तिसीकरणेन गोत्रतिलकस्त्रैलोक्यवन्द्यो भवान् ॥ १४ ॥ यामस्ते शिरमस्तु रोहणगिरे मत्त स्थितिप्रच्युता वर्तिष्यन्त इमे कथं कथमिति स्वप्नेऽपि मैव कृथा । भ्रातस्ते मणयो वय यदि भवन्नामप्रसिद्धास्तत किं शृङ्गारपरायणा क्षितिभुजो नाङ्गीकरिष्यन्ति न ॥ १५ ॥

### पर्वतदरी

यस्या स केसरियुवा पदमाबबन्ध गन्धद्विपेन्द्ररुधिरारुणिताङ्गनायाम् । तामद्य पर्वतदरीं धुतधूम्रलोमा गोमायुरेष वपुषा मलिनीकरोति ॥ १६ ॥

### गिरिनिर्झर

कल्लोलसचलदगाधजलैरलोलै कल्लोलिनीपरिवृढै किम पेयतोयै । जीयास्स जर्जरतनुर्गिरिनिर्झरोऽय यद्बिन्दुनापि तृषिता वितृषीभवन्ति ॥ १७ ॥

---

## समुद्रान्योक्तयः

नैवज्ञा नाप्येनेदम्ध्यमुदधेर्महिमैव ॥ । यत्तीरभङ्गभमानि महारत्नानि शेरते ॥ १ ॥ यद्यपि स्वच्छभावेन दर्शयत्युदधिर्मणीन् । तथापि जानुदघ्नोऽयमिति चेतसि मा कृथा ॥ २ ॥ रत्नैरापूरितस्यापि मदलेशोऽस्ति नाम्बुधे । मुक्ता कतिपया प्राप्य मातङ्गा मदविह्वला ॥ ३ ॥ अध करोषि रत्नानि मूर्ध्ना धारयसे तृणम् । दोषस्तवैव जलधे रत्न रत्न तृण तृणम् ॥ ४ ॥ वातोल्लासितकल्लोल धिक्ते सागर गर्जितम् । यस्य तीरे तृषाक्रान्त पान्थ पृच्छति वापिकाम् ॥ ५ ॥ अयं रत्नाकरोऽम्भोधिरित्यसेवि धनाशया । धन दूरेऽस्तु वदनमपूरि क्षारवारिभि ॥ ६ ॥ यद्यपि बद्ध शैलैर्यद्यपि गिरिमैथनमुषितसर्वस्व । तदपि

१ राक्षसानाम् २ मेरुणा ३ कैलासेन ४ निर्वेदत्वम् ५ निर्लज्जत्वम्

१ अवमानः २ अचतुरत्वम् ३ आनुप्रमाणः ४ वायुनोल्लासिता उत्पादिता कल्लोला महोर्मयो यस्य ५ गिरिमथनेन हृत सर्वं स्व चतुर्दशरत्नात्मक धन यस्य

परमीतभूधररक्षाया दीक्षितो जलधि ॥ ७ ॥ किं खलु रत्नैरेतैः किं पुनरभ्रायितेन वपुषा ते। सलिलमपि यस्य तावक मर्णव वदन प्रयाति तृषितानाम् ॥ ८ ॥ मा कुरु गुरुता गर्वं लघुरन्यो नास्ति सागर त्वत्त । जलसग्रहमन्यस्मात्त्वयि सति कुर्वन्ति पोतस्था ॥ ९ ॥ किमधिकमस्य ब्रूमो महिमान वारिधेर्हरिर्यत्र । अज्ञात एव शेते कुक्षौ निक्षिप्य भुवनानि ॥ १० ॥ लघुरयमाह न लोक कामं गर्जन्तमपि पतिं पयसाम् । सर्वमलज्जाकरमिह यत्कुर्वन्तीह परिपूर्णा ॥ ११ ॥ तृषा धराया शमयत्यशेषा य सोऽम्बुदो गर्जति गर्जतूच्चै । यस्त्वेष कस्यापि न हन्ति तृष्णा स किं वृथा गर्जति निस्त्रपोऽब्धि ॥ १२ ॥ त्वमथ सिन्धो जगदेकबन्धो रत्नानि दातु विमुखोऽसि कस्मात् । किं वा सुत कल्पमहीरुहस्ते दानै कृतार्थीकुरुते जगन्ति ॥ १३ ॥ अयि रोषमुरीकरोषि नो चेत्किमपि त्वा प्रति वारिधे वदाम । जलदेन तवार्थिना विमुक्तान्यपि तोयानि महान्न हा जहासि ॥ १४ ॥ तोयानामधिपतिराकरो मणीना शैलानामभयपद महान्महत्त्व । अम्भोधे भवति यदि त्वमेव तावत्को नु त्वाज्जगति तदा जनावलम्ब ॥ १५ ॥ स्वस्त्यस्तु विद्रुमवनाय नमो मणिभ्य कल्याणिनी भवतु मौक्तिकशुक्तिमाला । प्राप्त मया सकलमेव फल पयोधे यद्दारुणैर्जलचरैर्न विदारितोऽस्मि ॥ १६ ॥ आदाय वारि परित सरिता मुखेभ्य किं तावदर्जितमनेन दुरर्णवेन। क्षारीकृत च वडवादहने हुत च पातालकुक्षिकुहरे विनिवेशित च ॥ १७ ॥ निपीतपीनतिमिराणि मनोहराणि रत्नानि सन्ति न कियन्ति तवान्तिकेषु । एतस्य कौस्तुभमणेर्भजत परन्तु पाथोनिधे स्मरणमान्तरमावहेया ॥ १८ ॥ कल्लोलवेल्लितदृषत्परुषप्रहारै रत्नान्यमूनि मकराकर माऽवमस्था । किं कौस्तुभेन विहितो भवतो न नाम याच्ञाप्रसारितकर पुरुषोत्तमोऽपि ॥ १९ ॥ लज्जामहे वयमहो वचनेऽपि हन्त सायात्रिका सलिलराशिममी विशन्ति । अस्माधिरोपिततदीयतटोपकण्ठकौपेयकाम्बुरतयो यदुदीर्णतृष्णा ॥ २० ॥ चपलतरतरङ्गैर्दूरमुत्सारितोऽपि प्रथयति तव कीर्तिं दक्षिणावर्तशङ्ख । परिगणय पयोधे पद्मनाभार्थयोग्यस्तव निकटनिषण्णे क्षुल्लके श्लाघ्यता का ॥ २१ ॥ यद्वीचीभि स्पृशसि गगन यच्च पातालमूल रत्नैरुद्दीपयसि पयसा यत्पिधत्से धरित्रीम्। धिग् सर्वं तदपि जलनिधे यद्विमुच्याश्रुधारासीरे नीरग्रहणरसिकैरुष्ट्रमुख्यैरुज्झितोऽसि ॥ २२ ॥ अय वारामेको निलय इति रत्नाकर इति श्रितोऽस्माभिस्तृष्णातरलितमनोभिर्जलनिधि । क एव जानीते निजकरपुटीकोटरगत क्षणादेन ताम्यत्तिमिमकरमापास्यति मुनि ॥ २३ ॥ अये वारांराशे कुलिशकरकोपप्रतिभयादय पक्षप्रेम्णा गिरिवरसुतस्त्वामुपगत । त्वदन्तर्वास्तव्यो यदि पुनरय वाडवशिखी प्रदीप्त प्रत्यङ्ग ग्लपयति तत कोऽस्य शरणम् ॥ २४ ॥ इत स्वपिति केशव कुलमितस्तदीयद्विषामितश्च शरणार्थिन शिखरिपत्त्रिण शेरते। इतोऽपि वडवानल सह समस्तसवर्तकैरहो विततमूर्जित भरसह च सिन्धोर्वपु ॥ २५ ॥ ग्रावाणो मणयो हरिर्जलचरो लक्ष्मी पयोमानुषी मुक्तौघा सिकता प्रवाललतिका शैवालमम्भ सुधा। तीरे कल्पमहीरुहा किमपर नाम्नापि रत्नाकरो दूरे कर्णरसायन निकटतस्तृष्णापि नो शाम्यति ॥ २६ ॥ एतस्मादमृत सुरै शतमुखेनोच्चै श्रवा सद्गुण कृष्णेनाद्भुतविभ्रमैकवसतिर्लक्ष्मी समासादिता। इत्यादि प्रचुरा पुरातनकथा सर्वेभ्य एव श्रुता अस्माभिर्न च दृष्टमत्र जलधौ मृष्ट पयोऽपि क्वचित् ॥ २७ ॥ सख्येया न भवन्ति ते युगशतैर्गाम्भीर्यमुख्या गुणा सत्य वारिनिधे तथापि तदिद चित्ते विधत्ते व्यथाम्। स्वच्छन्देन तिमिंगिलान्निजकुलग्रास मुहु कुर्वतो यत्ते वारयितु निजेऽपि विषये न स्वामिता विद्यते ॥ २८ ॥ कल्लोले स्थगयन्मुखानि ककुभामभ्रलिहैरम्भसा क्षारेणापि दिवानिश जलनिधे गर्जन्न विश्राम्यसि। एतत्ते यदि घोरनक्रनिलय स्वादु व्यधास्यद्विधि किं कर्तासि तदा न वेद्मि तरलै स्वैरेव दुश्चेष्टितै ॥ २९ ॥ धामारोहति वाञ्छति स्थगयितु तेजोऽपि तेजस्विनामुच्चैर्गर्जति पूरयन्नपि महीमम्भोभिरम्भोधर । कश्चिद्यामुपजीव्य तोयचुलुकान्सिन्धौ भवत्यसनिधौ पानीयप्रचयेषु सत्स्वपि न ते जातो विकार क्वचित् ॥ ३० ॥ किं वाच्यो महिमा तवात्र जलधे यस्येन्द्रवज्राहतित्रस्यत्क्ष्माभृदमज्जदम्बुनिचये मज्जत्कलङ्काकृति । मैनाकोऽपि गभीरनीरनिलसत्पाठीनपृष्ठोल्लसच्छैवालाङ्कुरकोटिकोटरपुटीकुञ्जान्तरे निर्वृत ॥ ३१ ॥ आस्ता तावदहो समुद्रमहिमा दूरेऽपि कर्णप्रियस्तीरे यस्य पिपासयैव मरण प्राप्नोति शीघ्र जन । तस्मादम्बुनिधेर्वर लघुसर कूपोऽथवा वापिका यत्र स्वीय करद्वयेन सलिल पेपीयते स्वेच्छया ॥ ३२ ॥ देवैर्यदपि तन्त्रद्विमथित वेदारवद्धारैर्बद्ध सिद्धवदङ्गनाविजनुषा

१ नौकाश्रिता, नाविका इत्यर्थ २ नौकया व्यापार कुर्वाणा ३ दक्षिणभागे आवर्तो यस्यैतादृश शङ्ख ४ नातीदि ५ विष्णुपूजायोग्य ६ क्षुद्रशङ्खे

१ जन्तूनाम् २ स्थानम् ३ पिपासा, पक्षे,-अभिलाष ४ अगस्त्य ५ गिरयश्च पर्वतास्त एव पक्षिण पक्षिश्च ६ संवर्तकसंज्ञकैर्मेघै ७ इन्द्रवज्राघात-

कुल्यावदुल्लङ्घित । किं चासीच्चुलुकेऽम्बुबिन्दुवदय द्राक्कुम्भयोनेर्मुनेर्नातारोऽयमिति प्रथा जलनिधेरासीदथापि श्लथा ॥ ३३ ॥ पीयूषेण सुरा श्रिया मुररिपुर्मर्यादया मेदिनी शक्र कल्परुहा शशाङ्ककलया श्रीशकरस्तोषित । मैनाकाहिनगा निजोदरगता सस्थानत स्थापितास्त्वच्चूलीकरणे घटोद्भवमुनि केनापि नो वारित ॥ ३४ ॥ हे हेलाजित बोधिसत्त्व वचसा किं विस्तरैस्तोयधे नास्ति त्वत्सदृश पर परहिताधाने गृहीतव्रत । तृष्यत्पान्यजनोपकारघटनावैमुख्यलब्धायशोभारप्रोद्वहने करोषि कृपया साहायक य मरो ॥ ३५ ॥ पीयूषेण कृतार्थिता दिविषदो लक्ष्म्या हरि प्रीणितश्चन्द्रार्धेन विभूषित पशुपति कल्पद्रुमैर्वासव । आत्मान परिपन्थिनाप्युदधिना किं किं न तेषा कृत तस्यागस्त्यमुनिप्रपीतपयसो नोचै कृतैकाङ्गुलि ॥ ३६ ॥ लक्ष्म्या श्रीपुरुषोत्तमो हिमरुचा गौरीप्रियोऽलकृतो देवेन्द्रोऽपि विमानवारणहयस्त्रीरत्नकल्पद्रुमै । पीयूषैरमितैस्त्वया दिविषदश्चान्ये कृतार्थाकृता श्रीमन्वारिनिधे त्वदीयमहिमा नून न वाग्गोचर ॥ ३७ ॥ हहो वारिनिधे विधे समुचित येनासि रत्नाकरो रत्नाश्चेदवमन्यसे वद विभो नैतत्पद विन्दसि । पश्यालकरण पुरदरपुरे चिन्तामणि कौस्तुभो विष्णोर्वक्षसि मीनकेतनरिपो शीर्षे कलाना निधि ॥ ३८ ॥ पीत्वा गर्जन्त्यपस्ते दिशि दिशि जलदास्त्व शरण्यो गिरीणा सुनामत्रासभाजा त्रिदशविटपिना जन्मभूमिस्त्वमेव । गाम्भीर्य तच्च तादृक्त्वयि सलिलनिधे किंतु विज्ञाप्यमेतत्स्वैरोपायेन मैत्रावरुणिमुनिकृपापात्रय काङ्क्षणीया ॥ ३९ ॥

## क्षीरसागर

दिशि दिशि गिरिमायाण स्वा वमन्तु सरस्वतीं तुलयतु मिथस्तामापातस्फुरद्ध्वनिडम्बराम् । स परमपर क्षीरोदन्वान् यदीयमुदीर्यते मथितुरमृत खेदच्छेदि प्रमोरनुमोदनम् ॥ ४० ॥ साक भोगगणैर्लुठन्ति मणयो बालार्कबिम्बोपमा नीरे नीरचरै सम स भगवान्निद्राति नारायण । एव वीक्ष्य तवाविवेकमथ च प्रौढिं परामुन्नते किं निन्दाम्यथवा स्तवीमि कथय क्षीरार्णव त्वामहम् ॥ ४१ ॥

## अगस्त्य

मुनिर्जयति योगीन्द्रो महात्मा कुम्भसभव । येनैक चुलुके दृष्टौ दिव्यौ तौ मत्स्यकच्छपौ ॥ ४२ ॥ अखर्वपर्वगर्तेषु विच्छिन्नो यस्य वारिधि । हा स एव मुने पाणिरधस्ताद्विन्ध्यभूभृत ॥ ४३ ॥ अल्पीयसैव पयसा यत्कुम्भ पूर्यते प्रसिद्ध तत् । माहात्म्य [3]तेज पश्यत कुम्भोद्भूत पपौ वार्धिम् ॥ ४४ ॥ गतोऽस्मि तीर जलधे पिपासया स चापि शुष्कश्चुलुकीकृतो मया । न लक्ष्यते दोषलवोऽपि तोयधेर्ममैव तत्कर्मफल विजृम्भते ॥ ४५ ॥ कम्पन्ते गिरय पुरदरभिया मैनाकमुख्या पुन क्रन्दन्त्यम्बुधरा स्फुरन्ति वडवानलोद्धता वह्नय । भो कुम्भोद्भव मुच्यता जलनिधि स्वस्त्यस्तु ते साम्प्रत निद्रालुश्लथबाहुवल्लिकमलाश्लेषो हरि सीदति ॥ ४६ ॥

## रत्नानि

मणिर्लुठति पादेषु काच शिरसि धार्यते । यथैवास्ते तथैवास्ता काच काचो मणिर्मणि ॥ ४७ ॥ अप्याकरसमुत्पन्ना मणिजातिरसस्कृता । जातरूपेण कल्याणि नहि सयोगमर्हति ॥ ४८ ॥ आस्तमितमारस्य तेजसस्तद्विजृम्भितम् । येन पाषाणखण्डस्य मूल्यमल्प वसुधरा ॥ ४९ ॥ धन्योऽय मणिरेकदिच्छन्नो भिन्नश्च चक्रनिर्घृष्ट । युक्तस्तेजोनिचयैर्धन्यो दु खेऽपि योऽधिकाभास ॥ ५० ॥ भ्रष्ट नृपतिकिरीटाद्भूमौ पतित [1]तिरोहित रजसा । [2]विधिविलसितेन रत्न जनचरणविडम्बना सहते ॥ ५१ ॥ वपु-पॅरीणाहगुणेन तेभ्यो यशस्विन किं मणयो भवन्ति । तथापि चूडासु महीपतीना त एव खेलन्ति न गण्डशैला ॥ ५२ ॥ सिन्धुस्तरङ्गैरुपकल्प्य फेनान्रत्नानि पङ्कैर्मलिनी करोति । तथापि तान्येव महीपतीना किरीटकोटीषु पद लभन्ते ॥ ५३ ॥ विरम रत्न मुधा तरलायसे त्वन न कश्चिदिहास्ति परीक्षक । विधिवशेन परिच्युतमाकरात्त्वमपि काच मणीकृतमीश्वरै ॥ ५४ ॥ अनिभालित एष केवल खनिगर्भ निधिरेष जीर्यतु । न तु सीदतु मूल्यहानितो वणिजालोकनगोचरीकृत ॥ ५५ ॥ समुद्रेणान्त स्थलतटभुवि तरङ्गैरकरुणं समुत्क्षिप्तोऽसीति त्वमिह परिताप त्यज मणे । अवश्य क्वापि त्वद्गुणपरिचयाकृष्टहृदयो नरेन्द्रस्त्वा कुर्यान्निजमुकुटकोटिप्रणयिनम् ॥ ५६ ॥ पयोधे सनस्य शिरसि धृतवान् य नृपगण मणौ यस्य क्षोणी चतुरुदधिसीमाप्यधिरभूत् । स एवाय दैवाच्छबरवनितापाणिपतितो मणिर्मेषश्रीवाद्विगुणगुणबद्धो विहरति ॥ ५७ ॥ आघ्रात परिलीढमुग्रनखरै क्षुण्ण च यच्चर्वित क्षिप्त यद्गत नीरसस्त्वनुपितेनेति व्यथा मा कृथा । हे मद्रत्न तवैतदेव कुशल यद्वानरेणाग्रहादन्त सारविचारणव्यसनिना चूर्णीकृत नाश्मना ॥ ५८ ॥ उत्तसेषु न नर्तित क्षितिभुजा न प्रेक्षकैर्लक्षित साकाङ्क्ष लुठितो न च स्तनतटे लीलावतीना क्वचित् । कष्ट भो श्रिरम तरेण जलधेर्दैवाद्विशीर्णोऽश्मवत्खलव्यालकुलाङ्गघर्षणपरिक्षीणप्रमाणो मणि ॥ ५९ ॥ ये गृह्णन्ति हठात्तृणानि मणयो ये चाप्यय खण्डय ते दृष्टा प्रतिधाम

१ भ्रमहारि २ पाषाणसमूहे ३ माहात्म्यतेज प्रभाव ४ समुद्रम्

१ १ द्रम्भयेन २ हादिनाम् ३ दैवदुर्विपाकेन ४ विशाल्ना ५ आस्वादितम् ६ वसरेण ७ पाषाणेन ८ तेजोरहित

दग्धमणयो विच्छिन्नसम्याश्रिरम् । नो जाने किममावत किमथवा दैवादहो श्रूयते नामाप्यत्र न तादृशस्य हि मणे रत्नानि गृह्णाति य ॥ ६० ॥ यन्मुक्तामणयोऽम्बुधेरुदरत क्षिप्ता महावीचिभि पर्यन्तेपु लुठन्ति निर्मलरुच सप्तट्टहासा इव । तत्तस्य परिक्षयो जलनिधेर्द्वीपान्तरालम्बिनो रत्नाना परिग्रहव्यसनिन सन्त्येव सांयात्रिका ॥ ६१ ॥ यत्रामुल्लिखितास्यमेव निखिल निर्माणमेतद्विधेरुत्कर्पप्रतियोगिकल्पनमपि न्यक्कारकोटि परा । याता प्राणभृता मनोरथगतीरुल्लङ्घ्य यत्सपदस्तस्याभासमणीकृताश्मसु मणेरश्मत्वमेवोचितम् ॥ ६२ ॥ काचा काञ्चनभूषिता कति न वा मुष्णन्ति रत्नश्रियं मौलौ वा कति नोद्वहन्त्यपधियस्तानेव रत्नभ्रमात् । अक्ष्णा ये पुनरुन्मृजन्ति तिमिर येनाम रत्नाकर सिन्धुस्ते पृथगेव हन्त मणयस्तेष्वप्यभिज्ञा पृथक् ॥ ६३ ॥

## वज्रमणि

यस्य वैज्रमणेर्भेदे भिद्यन्ते लोहसूचय । करोति तत्र किं नाम नारीनखविलेखनम् ॥ ६४ ॥

## कौस्तुभमणि

न श्वेताशुवदन्धकारदलनादुद्द्योतिते रोदसी नाप्यैरावतवन्निरस्तदितिजत्रास कृतो वासव । नो चिन्तामणिरत्नवत्त्रिभुवने छिन्ना विपद्वाऽर्थिना भूत्वा तस्य हरेरुर प्रणयिना किं कौस्तुभेनार्जितम् ॥ ६५ ॥

## चन्द्रकान्त सूर्यकान्तौ

सोमकान्तो मणि स्वच्छ सूर्यकान्तस्तथा न किम् । उद्गारे तु विशेषोऽस्ति तयोरमृतवह्नय ॥ ६६ ॥

## चन्द्रकान्त

सुधाकरकरस्पर्शाद्बहिर्द्रवति सवत । चन्द्रकान्तमणेस्तेन मृदुत्व लोकविश्रुतम् ॥ ६७ ॥

## स्फटिक

स्फटिकस्य गुणो योऽसौ स एवायाति दोषताम् । धत्ते स्वच्छतया छाया यस्मा मलरतामपि ॥ ६८ ॥

## मरकत

त्यज निजगुणाभिमान मरकत पतितोऽसि पामरे वणिजि । काचमणेरपि मौल्य लभसे यत्तदपि ते श्रेय ॥ ६९ ॥ केनासीन सुखमकरुणेनाकरादुद्धृतस्त्व विक्रेतु वा समभिलपित केन वाऽसि कुदेशे । यस्मिन्वित्तव्ययभरसहो ग्राहकस्तावदास्ता नास्ति भ्रातर्मरकतमणे त्वत्परीक्षाक्षमोऽपि ॥ ७० ॥ आसीत्पूर्वे विमलजलधौ मण्डन भूपतीना नारीणा च प्रबलमुकुटे काञ्चनेन प्रसङ्गात् । तन्नीवद्धकथमिदमहो काचखण्डेन सार्धं भिल्लीकण्ठे मरकतमणे वामवस्था गतोऽसि ॥ ७१ ॥

## माणिक्यम्

पौरस्त्यैर्दाक्षिणात्यै स्फुरदुरमतिभिर्भिन्न पाश्चात्यसचै रौदीच्यैर्यत्परीक्ष्य क्षितिपतिमुकुटे न्यासि माणिक्यमेकम् । यद्येतस्मिन्कथचित्कथयति कृपण कोऽपि मालिन्यमन्ये प्रेक्षाव तस्तदा त निरवधिजडतामन्दिर सगिरन्ते ॥ ७२ ॥

## काच

अज्ञतया प्रेम्णा वा चूडामणिमाकलय्य काचमणिम् । नृपतिर्निहते शिरसा तेनासौ न क्षेमर्यमणि ॥ ७३ ॥

## शङ्ख

अन्त कुटिलता विभ्रच्छङ्ख खलु निष्ठुर । हुकरोति यदा घ्मातस्तदैव बहु गण्यते ॥ ७४ ॥ उच्चैरुच्चरति चिर झिल्ली वर्त्मनि तरु समारुह्य । दिग्व्यापिनि शब्दगुणे शङ्ख समानभूमि ॥ ७५ ॥ कीटगृह कुटिलोऽन्त कठिन क्षाराम्बुसभव शून्य । शङ्ख श्रीपतिनिकटे केन गुणेन स्थितिं लेभे ॥ ७६ ॥ जलनिधौ जननं धवल वपुर्मुररिपोरपि पाणितले स्थिति । इति समस्तगुणान्वित शङ्ख भो कुटिलता हृदये न निवारिता ॥ ७७ ॥ ध्वनिरनिमधुर शुचित्वमुच्चैर्जनिरपि शङ्ख नदीनतस्तवाभूत् । अवगतमखिल बहिस्तवेद कुटिलतर पुनरन्तर न विद्म ॥ ७८ ॥ क्व वाऽम्भोधौ जन्म क्व च वपुरिद कुन्दधवल क्व चावासस्थान कृतमहह विष्णो करतलम् । क्व नीचानामास्ये परिणतिरिय चुम्बनविधावितीवाय शङ्ख करुणकरण रोदिति मुहु ॥ ७९ ॥ तात क्षीरनिधि स्वसा जलधिजा भ्राता सुरेशद्रुम सौजन्य सह कौस्तुभेन शुचिता यस्य द्विजेशादपि । धिक्कर्माणि स एव कम्बुरधुना पाखण्डकाताक्करे विश्रान्त प्रतियासर प्रतिगृह भैक्ष्येण कुक्षिंभरि ॥ ८० ॥

## पाञ्चजन्य

सर्वाशापरिपूरिहुकृतिमदो जन्मापि दुग्धोदधेर्गोविन्दाननचुम्बि सुन्दरतर पूर्णेन्दुबिम्बाद्वपु । श्रीरेषा सहजा गुणा किमपर मध्यत एते हि यत्कौटिल्य हृदि पाञ्चजन्य भवतस्तेनातिलज्जामहे ॥ ८१ ॥ शङ्खा सन्ति सहस्रशो जलनिधेर्वीचिच्छटाघट्टिता पर्यन्तेपु लुठन्ति ये दलशतै कल्मापितक्ष्मातला । एक कोऽपि स पाञ्चजन्य उदभूदाश्चर्यधामा सता य ससर्तमरक्षमैर्मधुरिपो श्वासानिलै पूर्यते ॥ ८२ ॥

---

## नद्यन्योक्तयः

तटिनि चिराय विचारय विन्ध्यभुवस्तव पवित्रायाः । शुष्यन्त्या अपि युक्त किं खलु रथ्योदकादानम् ॥ १ ॥ कतिपयदिवसस्थायी पूरो दूरोन्नतोऽपि भविता ते । तटिनि तटद्रुमपातनपातकमेक चिरस्थायि ॥ २ ॥ यास्यति जलधर समदस्त्र च समृद्धिर्लघीयसी भविता । तटिनि तटद्रुमपातनपातकमेक चिरस्थायि ॥ ३ ॥ कुरु गम्भीराशयता

१ नीकाव्यापारिन- २ हीरकमण- ३ नीचे ४ भूषणम् ५ कामचनिना ६ सह

१ अमूल्य २ कौटिल्यम् ३ नदीन सरितानिलस्मात् ४ कुन्दपुष्पवच्छुभ्रम् ५ भगिनी ६ लक्ष्मी ७ अलभरा

कल्लोलैर्जनय लोकविभ्रान्तिम् । वीतपयोधरलक्ष्मी कस्य न चरणैर्विलङ्घ्यासि ॥ ४ ॥ मलयस्य गिरेरपत्यमादौ तदनु भ्रातृमती पटीरवृक्षैः । किमु चित्रमपांनिधे कलत्रं तटिनी काचन मौक्तिकानि सूते ॥ ५ ॥ नावर्ता न च तरला स्तरंगमाला नेदानीं जलरयजा रवा कराला । सेव त्वं तटिनि तटद्रुमान्निपात्य प्रौढानामपयशसामिदानीमसि पात्रम् ॥ ६ ॥ छाया प्रकुर्वन्ति नमन्ति पुष्पैः फलानि यच्छन्ति तटद्रुमा ये । उन्मूल्य तानेव नदी प्रयाति तरंगिणा क्व प्रतिपन्नमस्ति ॥ ७ ॥ न वारयामो भवतीं विशन्तीं वर्षानदि स्रोतसि जह्नुजायाः । न युक्तमेतत्तु पुरो यदस्याः स्तरंगभङ्गान्प्रकटीकरोषि ॥ ८ ॥

**गङ्गा**

यद्यपि दिशि दिशि सरितः परितः परिपूरिताम्भसः सन्ति । तदपि पुरंदरतरुणीसंगतिसुखदायिनी गङ्गा ॥ ९ ॥ न विभुः सहेत सुधांशुः स्मरहरभालानलज्वाला । शिशिरैः शीकरनिवहैः सिञ्चति सुरनिम्नगा नो चेत् ॥ १० ॥

**शोण**

आजन्मस्थितयो महीरुह इमे कूले समुन्मूलिता कल्लोला क्षणभङ्गुरा पुनरमी नीता परामुन्नतिम् । अन्तर्मोहपरिग्रहो बहिरपि भ्राम्यन्ति गन्धद्विपा भ्रातः शोण न सोऽस्ति यो न हसति स्वैरंपदां विप्लवान् ॥ ११ ॥

---

## तडागान्योक्तयः

आगच्छतामपूर्णानां पूर्णानामपि गच्छताम् । यदध्वनि न संघट्टो घटानां किं सरोवरम् ॥ १ ॥ अयमवसरः सरस्ते सलिलैरुपकर्तुमर्थिनामनिशम् । इदमतिसुलभं चाम्भो भवति पुरा जलधराभ्युदये ॥ २ ॥ कस्य तृषं न क्षपयति पिबति न कस्तव पयः प्रविश्यान्तः । यदि सन्मार्गसरोवर नक्रो न क्रोडमधिवसति ॥ ३ ॥ तानि तानि कमलानि तज्जलं तानि षट्पदकुलानि ते खगाः । सर्वमेकपद एव विच्युतं पङ्कशेषमसि पादभूस्सर ॥ ४ ॥ विहगैर्गतं मधुकरैश्चलितं प्रकरैः प्रयातमपि पद्मदृशाम् । विभवे गते सकलमेव गतं ध्रुवमेकमञ्चति यशः सरसः ॥ ५ ॥ आपेदिरेऽम्बरपथं परितः पतङ्गा भृङ्गा रसालमुकुलानि समाश्रयन्ति । सङ्कोचमञ्चति सरस्त्वयि दीनदीनो मीनो नु हन्त कतमां गतिमभ्युपैतु ॥ ६ ॥ इयत्या सम्पत्तावपि च सलिलानां त्वमधुना न तृष्णार्तानां हरसि यदि वैमारं सहसा । निदाघे चण्डांशौ किरति परितोऽङ्गारनिकरं कृशीभूत क्षेपमहह परिहर्तासि खलु ताम् ॥ ७ ॥ क्रौञ्च क्रीडतु कूर्दतां च कुरर कङ्क परिभ्रज्यतां मद्गुर्माद्यतु सारसश्च रसतु प्रोड्डीयतां टिट्टिभः । भेकाः सन्तु बका वसन्तु चरतु स्वच्छन्दमाटिस्तटे हंस पद्मसर कुतः कतिपयैर्हंसैर्विना श्रीस्तव ॥ ८ ॥ एतस्मिन्मरुमण्डले परिचलत्कल्लोलकोलाहलक्रीडत्कङ्कमपङ्कमद्गुविलसन्निःशङ्कमत्स्यव्रजम् । केनेदं विकसत्कुशेशयकुटीकोणक्वणत्षट्पदं स्वेणप्रीणितपान्थमुज्ज्वलजलं चक्रे विशालं सरः ॥ ९ ॥ स्तोकाम्भःपरिवर्तिताङ्गशफरीग्रासार्थिनः सर्वतो लभ्यन्ते बकटिट्टिभप्रभृतयः स्वल्पेषु साधु स्थितिम् । सद्यः शोषमुपागतेऽद्य सरसि श्रीसद्मपद्माकरे तस्मिन्पङ्कजिनीनिलीनसरुचयो हंसाः क्व यास्यन्त्यमी ॥ १० ॥ मायद्दिग्गजदानलिप्तकरटप्रक्षालनक्षोभिता व्योम्नः सीम्नि निचोलप्रतिहता यस्योर्मयो निर्मलाः । कष्टं भाग्यविपर्ययेण सरसः कल्पान्तरस्थायिनस्तस्याप्येकबकप्रचारकलुषं कालेन जातं जलम् ॥ ११ ॥ रे पद्माकर यावदस्ति भवतो मध्ये पयः पूरितं तावच्चक्रचकोरकङ्ककुररश्रेणीं समुल्लासय । पश्चात्त्वं समटट्टकोठचटुलत्रोटीपुटव्याहतिनुद्यत्कर्कटकर्परव्यतिकरैर्निन्दास्पदं यास्यसि ॥ १२ ॥ याते मय्यचिरान्निदाघमिहिरज्वालाशतैः शुष्कतां गन्ता कं प्रति पान्थसंततिरसौ संतापमालाकुला । एवं यस्य निरन्तराधिपटलैर्नित्यं वपुः क्षीयते धन्यं जीवनमस्य मार्गसरसो धिग्वारिधीनां जनुः ॥ १३ ॥ सोपानानि तिरोहितानि पदवी छन्ना तृणैर्नूतनैः कालुष्यं पयसां विलोक्य शनकैरुड्डीय हंसा गताः । माधुर्यं न मधुव्रतोदितगिरः पद्मानि सद्मानि के भेकानामिह गर्जितं परमहो वृथैव नष्टं सरः ॥ १४ ॥ आपूर्येत पुनः स्फुरच्छफरिकासारोर्मिभिर्वारिभिर्भूयोऽपि प्रविजृम्भमाणनलिनं पश्येम तोयाशयम् । इत्याशाशततन्तुबद्धहृदयो नक्तंदिवं दीनधीः शुष्यत्यातपशोषितस्य सरसस्तीरे जरत्सारसः ॥ १५ ॥ उद्दामाम्बुदवर्धमानशिखिनीकेकातिरेकाकुले संप्राप्य सलिलं स्थलेष्वपि सदा निर्लज्जपांगमे । भीष्मग्रीष्ममदे परस्परभयादालोक्यमानं मुहुर्दीनं मीनकुलं न पालयसि चेत्कासार का वार्ता ॥ १६ ॥ सौवर्णं कमलाकरं शशिशिलासोपानवन्तं स्फुरद्वारि क्षीरमहोदरं तटतरुश्रेणीसुखं क्षोणयः । सर्वं ते रचिरं सरोवर परं निन्द्य कुतोऽयं विधिः कूटाहमयात्ययान्ति विमुखाः पान्थाः निदाघेऽप्यमी ॥ १७ ॥ उड्डीनं विहगैर्मृतं जलचरैः स्थानान्तरं कच्छपैः पाठीनैः पृथुपङ्कपीठलुठनाद्यस्मिन्मुहुर्मूर्च्छितम् । तस्मिन्नेव

---

१ पुष्पैः सह फलानि ददतीत्यर्थः २ तरंगवत्या नद्या स्वल्पजलवत्याः ३ अङ्गीकृतम् ४ इन्द्रस्त्रीणां रम्भोर्वश्यादीनां समागमसुखदात्री ५ आकाशगामिनाम् ६ प्राप्नुवति सति ७ हे सरः ८ ग्रीष्मे ९ सर्वे

१ खेलतु २ जलकाक ३ सर्व ४ गमिष्यति ५ भवतो व्यवहाररयाभिः ६ मार्गे वर्तमानं सरः तस्य

सरस्वकालनलदेनागत्य तच्चेष्टित येनाकुम्भनिमग्नवन्यकरिणा यूथै पय पीयते ॥ १८ ॥ हसैर्लब्धप्रशसैस्तरलितकमलम्र स्तरङ्गैस्तरगैर्नीरैरन्तगभीरैश्चपरश्वक्रकुलनामलीनश्च मीनै । पालीरूढद्रुमालीतलसुखशयितस्त्रीप्रणीतैश्च गीतैर्भाति प्रक्रीड दातिसन्नसलिलचलचक्रवाकस्तडाग ॥ १९ ॥

### मानसम्

नो वा कियन्त परित स्फुरन्ति जलाशया निर्मल-भूरितोया । सदावदात परमेकमेव हसस्य विश्रामपद वदति ॥ २० ॥

---

## कूपान्योक्तय

हे कूप त्व चिर जीव स्वल्पतोये बहुव्यय । गुणवद्भिरक्त-पात्राणि प्राप्नुवन्ति हि पूर्णताम् ॥ १ ॥ रे कूप जीवन्न-गार यदि दातृत्वमिच्छसि । तदा त्व गुणवत्पात्रमेक वा सनिधौ कुरु ॥ २ ॥ अमुना मरुकूपेन के के नाम न वञ्चिता । रुदत्पथिकनेत्राम्बुपिच्छिलप्रान्तभूमिना ॥ ३ ॥ सगुणै सेवितोपान्तो विनतै प्राप्तदर्शन । नीचोऽपि कूप सत्पात्रैर्जीवनार्थं समाश्रित ॥ ४ ॥ यद्यपि बहुगुणगम्य जीवनमेतस्य कूपमुख्यस्य । जयति तथापि विवेको दान पात्रानुमानेन ॥ ५ ॥ नितरा नीचोऽस्मीति त्व खेद कूप मा कदापि कृथा । अत्यन्तसरसहृदयो यत परेषा गुण ग्रहीतासि ॥ ६ ॥ चित्र न तदयमम्बुधिरम्बुदौघसिन्धुप्र वाहपरिपूरणया महीयान् । त्व त्वर्थिनामुपकरोषि यदल्पकूप निष्पीड्य कुक्षिकुहर हि महत्त्वमेतत् ॥ ७ ॥ दिनमवसित विश्रान्ता स्म त्वया मरुकूप हे परमुपकृत शेष वस्तु वय न पुन क्षमा । भवति सुकृतैरध्वन्यानामशेषजलो भवानि-यमपि घनच्छाया भूयात्त्वयोपतट शमी ॥ ८ ॥ भीमश्याम प्रतनुवदन क्रूरपातालकुक्षिक्रोडप्रान्तोपहितविभवस्साथ किं ते ब्रवीमि । येन त्वत्त समभिलषित वाञ्छन क्षुद्र कूप क्षाम्य मूर्तेर्भवति सहसा कस्य नाधोमुखत्वम् ॥ ९ ॥

---

## मरुस्थलान्योक्तय

मरौ नास्त्येव सलिल कृच्छ्राद्यदपि लभ्यते । तत्कटु स्तोकमुष्ण च न करोति वितृष्णताम् ॥ १ ॥ सत्पादपान्वि पुलपल्लवपुष्पभारसपत्परीतवपुष फलभारनम्रान् । यो मञ्जु-सिञ्जितशकुन्तशताश्रितोरुशाखान्मरौ मृगयते न ततोऽस्ति मुग्ध ॥ २ ॥ पाय पाय पिब पिब पय सिञ्च सिञ्चाङ्गमङ्ग भूयो भूय कुरु कुरु सखे मज्जनोन्मज्जनानि । एषोऽशेष

१ रजुमदिने पणे—गुणयुते २ उदकार्थम् ३ अन्य त्रम् ४ निम्न ५ रमयुक्त हृदय यस्य ६ भीम भयकरं दवार्भ अभकारयुक्त वाद भयनु संकुचित मुख यस्य

श्रमशमपटुर्दुर्लभिताध्वन्यबन्धु सिन्धुर्दूरीभवतु भवतो मारव पान्थ पन्था ॥ ३ ॥ कल्याण न किमधिकमितो जीवनार्थं यतस्त्व छित्त्वा वृक्षानहह दहसि भ्रातर-ङ्गारकार । न चेतस्मिन्नशनिपिशुनैरातपैराकुलानामध्वन्याना मशरण मरुभ्रान्त रे कोऽप्युपाय ॥ ४ ॥ किमसि विमति किं चोन्मादी क्षणादभिलक्ष्यसे पुनरपि सखे प्रेक्षापूर्वा न काचन ते क्रिया । स्वयमजलदा जानानोऽपि प्रविश्य मरु-स्थलीं शिशिरमधुर वारि प्राप्तु यदध्वग वाञ्छसि ॥ ५ ॥ भो भो कि किमकाण्ड एव पतितस्त्व पान्थ कान्या गति-स्तत्तादृक्तृषितस्य मे खलमति सोऽय जल गूहते । अस्थानोपगतामकालसुलभा तृष्णा प्रति क्रुध्य हे त्रैलोक्य प्रथितप्रभावमहिमा मार्गोऽस्त्यसौ मारव ॥ ६ ॥

---

## दावानलान्योक्तय

हे दावानल शैलाग्रवासिन साधुशाखिन । मुग्ध व्यर्थे त्वया दग्धा प्रेरितेन प्रभञ्जनै ॥ १ ॥ यस्मा महत्त्वभाजो भवन्ति गुणिनोऽमितैर्धनुर्दण्डा । दहतस्ता धर्षाललिं को वन-वह्ने विवेकस्ते ॥ २ ॥ दववहनादुत्पन्नो धूमो घनतामवाप्य वर्षैस्तम् । यच्छमयति तद्युक्त सोऽपि च दवमेव निर्दहति ॥ ३ ॥ अभ्युन्नतेऽपि जलदे जगदेकसारसाधारणप्रणय-हारिणि ▪ यदेते । उल्लासलाभ्यललित तरवो न यान्ति हे दावपावक स तावक एव दोष ॥ ४ ॥ छाया फलानि मुकुलानि च यस्य विश्वमाह्लादयन्ति सहकारमहीरुहस्य । आमूल्य तस्य शिखया नवपल्लवानि भस्मासि रे दवहुताश हताश कष्टम् ॥ ५ ॥ दुर्दैवप्रभवप्रभञ्जनभयादुद्धूत भूमीर हानेता सत्त्वगुणाश्रयानकरुण क्षुभ्यन्किमु भाषसे । भूमस्त्वा येनहव्यवाह यदमी दग्धार्धदग्धा अपि द्रष्टव्यास्तव तत्क्षणा-द्विलयिनो नामापि न ज्ञायते ॥ ६ ॥ विध्वस्ता मृगपक्षिणो विधुरता नीता स्थलीदेवता धूमैरन्तरिता स्वभावमलिनैराशा मही तापिता । भस्मीकृत्य सपुष्पपल्लवफलैर्नम्रान्महापादपा-नुद्धृतेन दवानलेन विपिन वल्मीकशेष कृतम् ॥ ७ ॥ दिक्चक्र तृणभक्षणा कवलित मूलान्यपि क्ष्मारुहा निर्द-ग्धानि न चार्भकोऽपि हरिणीयूथस्य शेषीकृत । आ कष्ट विपिनौकसोऽपि मुनय मुग्धा कृतान्तक्रिया कृत्वेत्य वन वह्निना किमधुना शान्तेन दीप्तेन वा ॥ ८ ॥

### वडवानल

तेजासि यस्य प्रथम प्रयान्ति वार्धि प्रवाहेण स वह्निरन्य । अय पुनर्वाडवनामधेय समुद्रमापीय बिभर्ति तेज ॥ ९ ॥

१ अनुचितस्थाने २ वायुभि ३ अर्वाग्या ४ वेणुग्रहिम् ५ वनानल

## व्योमचरान्योक्तयः

### गरुड

दामोदरसुंदराहितभुवन यो वहति लीलया गरुड । कस्य तरोरुपरिष्टात्खिन्नोऽसौ श्रान्तिमपनयतु ॥ १ ॥ अहिरहिरिति सभ्रमपदमितरजन किमपि कातरो भवतु । विहंगपतेराहारे स तु सरलमृणालदलरुचिर ॥ २ ॥

### हस

कसारिचरणोद्भूतसिन्धुकल्लोललालितम् । मन्ये हस मनो नीर कुल्याना रमते न ते ॥ ३ ॥ अस्ति यद्यपि सर्वत्र नीर नीरजमण्डितम् । रमते न मरालस्य मानस मानस विना ॥ ४ ॥ एकेन राजहसेन या शोभा सरसो भवेत् । न सा बकसहस्रेण परितस्तीरवासिना ॥ ५ ॥ हस श्वेतो बक श्वेत को भेदो बकहसयो । नीरक्षीरविभागे तु हसो हसो बको बक ॥ ६ ॥ बककोयष्टिभिर्जुष्टे पल्वले मानस कुत । मोदते हि मरालस्य सन्मानसविहारिण ॥ ७ ॥ अपसरणमेव शरण मौन वा तत्र राजहसस्य । कटु रटति निकटवर्ती वाचाटष्टिट्टिभो यत्र ॥ ८ ॥ यदि नाम दैवगत्या जगदसरोज कदाचिदपि जातम् । अवकरनिकर विकिरति तत्किं कृकवाकुरिव हस ॥ ९ ॥ नीरक्षीरविवेके हसालस्य त्वमेव तनुषे चेत् । विश्वस्मिन्नधुनान्य कुलव्रत पालयिष्यति क ॥ १० ॥ सैव सैव सरसी रमणीया यत्र यत्र वलते तव राग । राजहस रसिक स्मरणीया श्रीमता तदपि मानसकेलि ॥ ११ ॥ गाङ्गमम्बु सितमम्बु यामुन कज्जलाभमुभयत्र मज्जत । राजहस तव सैव शुभ्रता चीयते न च न चापचीयते ॥१२॥ कचिदेव समय समागत त्वा न विस्मरति शश्वदम्बुजम् । मानसे विहर हस मानसे मा विमुञ्च पुनरस्य सौहृदम् ॥ १३ ॥ यत्रापि कुत्रापि भवन्ति हसा हसा महीमण्डलमण्डलानि । हानिस्तु तेषा हि सरोवराणा येषा मरालै सह विप्रयोग ॥ १४ ॥ अम्भोजिनीवनविलासनमेव हन्त हसस्य हन्तु नितरा कुपितो विधाता । न त्वस्य दुग्धजलभेदविधिप्रसिद्धा वैदग्ध्यकीर्तिमपहर्तुमसौ समर्थ ॥ १५ ॥ भृङ्गाङ्गनाजनमनोहरहारिगीतराजीवरेणुकणकीर्णपिशङ्गतोयाम् । रम्या हिमाचलनदीं प्रविहाय हस हे हे हताश वद का दिशमुत्सुकोऽसि ॥ १६ ॥ स्थित्वा क्षण विततपक्षतिनान्तरिक्षे मातङ्गसङ्गकलुषा नलिनीं विलोक्य । उत्पन्नमन्युपरिघर्घरनिस्वनेन हसेन साधु परिहृत्य गत नलिन्या ॥ १७ ॥ रे राजहस किमिति त्वमिहागतोऽसि योऽसौ बक स इह हस इति प्रतीत । तद्गम्यतामनुपदेन पुन स्वभूमौ यावद्वदन्ति न बक खलु मूढलोक ॥ १८ ॥ ये वर्धिता कनकपङ्कजरेणुमध्ये मन्दाकिनीविमलनीरतरगभङ्गै । ते साप्रत विधिवशात्खलु राजहसा शैवालजालजटिल जलमाश्रयन्ति ॥ १९ ॥ हा हन्त मानससर सलिलावतस रे राजहस पयसो प्रविवेचनाय । चेच्छक्तिमान्खलु भवान्न तदा किमु स्यात्किल कपोत उत वा कलविङ्कपोत ॥ २० ॥ नेद सर सरसवारि न वारिज वा नैतन्मधूनि मधुपा सहवामिनो वा । हेमारविन्दवनवासविलासभाजो रे हस मानसजुषस्तव मानसेऽपि ॥ २१ ॥ हस प्रयाति शनकैर्यदि यातु तस्य नैसर्गिकी गतिरिय नहि तत्र चित्रम् । गत्या तया जिगमिषुर्बक एव मूढश्वेतो दुनोति सकलस्य जनस्य नूनम् ॥ २२ ॥ भुक्ता मृणालपटली भवता निपीतान्यम्बूनि यत्र नलिनानि निषेवितानि । रे राजहस वद तस्य सरोवरस्य कृत्येन केन भवितासि कृतोपकार ॥ २३ ॥ तरौ तीरोद्भूते कचिदपि दलच्छादिततनु पतद्धारासारा गमय विषमा प्रावृषमिमाम् । निवृत्तायां तस्या सरसि सरसोत्फुल्लनलिने स एव त्व हस पुनरपि विलासास्त इह ते ॥ २४ ॥ गतं तद्गाम्भीर्यं तटमपि चित जालिकशतै सखे हसोत्तिष्ठ त्वरितममुतो गच्छ सरस । न यावत्पङ्कान्त कलुषिततनुर्भूरिविलसद्बकोऽसौ वाचालश्चरणयुगल मूर्ध्नि कुरुते ॥ २५ ॥ पुरा सरसि मानसे विकचसारसालिस्खलत्परागसुरभीकृते पयसि यस्य यात वय । स पल्वलजलेऽधुना मिलदनेकभेकाकुले मरालकुलनायक कथय रे कथ वर्तताम् ॥ २६ ॥ वातान्दोलितपङ्कजस्थितरज पुञ्जाङ्गरागोज्ज्वलो य कृण्वन्कलकूजित मधुलिहा सजातहर्ष पुरा । कान्ताचञ्चुपुटापवर्जितविसग्रासग्रहेऽप्यक्षम सोऽय सप्रति हसको मरुगत कौप पयो याचते ॥ २७ ॥ यो दिव्याम्बुजलोलमत्तमधुपप्रोद्गीतरम्य सरस्त्यक्त्वा मानसमल्पनारिणि रतिं बध्नाति कैदारिके । तस्यालीकसुखाशया परिभवक्रोडीकृतस्याधुना हसस्योपरि टिट्टिभो यदि पद धत्तेऽत्र को विस्मय ॥ २८ ॥ अन्या सा सरसी मराल मुनिभिर्यत्रीरसोपानिकाविन्यस्ताखिलतण्डुलान्वलयन्दृष्टोऽसि हृष्टैर्मुखै । एषा पङ्कणवापिका कमलिनीखण्डेन गुप्तात्मभिर्व्याधैस्त्वद्विधमुग्धबन्धनविधौ क नाम नो सूत्र्यते ॥ २९ ॥ कस्त्व लोहितलोचनास्यचरणो हस कुतो मानसात्किं तत्रास्ति सुवर्णपङ्कजवनान्यम्भ सुधासनिभम् । रत्नाना निचया प्रवालमणयो वैडूर्यरोहा कचिच्छम्बूका अपि सन्ति नेति च बकैराकर्ण्य हीहीकृतम् ॥ ३० ॥ य सतापमपाकरोति जगता यश्चोपकारक्षम सर्वेषाममृता-

१ उन्नते आहित स्थापित भुवन ब्रह्माण्ड येन २ श्रान्त ३ गरुडस्य ४ विष्णु ५ कृत्रिमसरिताम् ६ मानससरोवरम् ७ संकरसंचयम् ८ ताम्रचूड- ९ चातुर्येण

१ अलसगमनाश्रयजले २ दर्दुरस्थाने ३ रत्नम् ४ जलपुष्प

भ्रुवोरायतलेखयोर्या । ता वीक्ष्य लीलाचतुरामनङ्गस्त्वचापसौन्दर्यमद मुमोच ॥ ५७ ॥ अस्या प्रियाया भवतोमनोभूचापेन चापे घनसारभाव । निजा यदङ्गोपदशामपेक्ष्य सप्रत्यनेनाधिकवीर्यतार्जि ॥ ५८ ॥ सार धनुर्यद्विधुनोज्झितास्या याम्येन भूतेन च लक्ष्मलेखा । एतद्भ्रुवौ जन्म तदाप युग्म लीलाचलत्कोचितवालभावम् ॥ ५९ ॥

नेत्रद्वयम्

नूनमापाकरलस्या सुभ्रुवो मकरध्वज । यतस्तन्नेत्रसचारसूचितेषु प्रवर्तते ॥ ६० ॥ निःसीमशोभासौभाग्य नताङ्ग्या नयनद्वयम् । अन्योन्यालोकनानन्दविरहादिव चञ्चलम् ॥ ६१ ॥ आसा व्रतमतीवाक्ष्णोर्यत्पुर परिसर्पणम् । सह यात मनस्तत्र त्यक्त्वा भूयो निवर्तनम् ॥ ६२ ॥ अर्जुन कृष्णसयुक्त कर्णे यत्रानुधावति । तन्नेत्र तु कुरुक्षेत्रमिति मुग्धे मृशामहे ॥ ६३ ॥ एकमेवाक्षि वामाक्षि रञ्जयाञ्जनलेखया । जायतामैन्दवे बिम्बे खञ्जनाम्बुजसगम ॥ ६४ ॥ अमुष्य मुषिता लक्ष्मीश्चक्षुषेति न नूतनम् । न वेद्मि कथयत्यस्या कर्णे लग्नमिन्दुत्पलम् ॥ ६५ ॥ मृगसबन्धिनी दृष्टिरसौ यदि न सुभ्रुव । धावति श्रवणोत्तसलीलादूर्वाङ्कुरे कुत ॥ ६६ ॥ तस्या श्रवणमागण चलिते यदि लोचने । कुत प्रकामधवले धत्त कृष्णानुरक्तताम् ॥ ६७ ॥ श्रूयता कौतुक सोऽपि स्मर शृङ्गारिणा गुरु । अमुष्या शिष्यतामेति श्रवणोन्मुखयोर्दृशो ॥ ६८ ॥ भास्वत्कुण्डलमाणिक्यप्रभाप्रतिहतेरिव । नताङ्ग्या श्रवणोत्सङ्गमारूढा नयनद्वयी ॥ ६९ ॥ नयनस्य कुत्र चक्रे मलिनेन नतभ्रुव । ञ्जनेन चलिते भृङ्ग मामरंमाद्विधिर्दधौ (?) ॥ ७० ॥ अनङ्गमङ्गलमुषस्तदपाङ्गस्य भङ्गय । जनयन्ति मुहुर्यूनामन्त सतापसततिम् ॥ ७१ ॥ यदि स्यान्मण्डले सक्तमिन्दोरिन्दीवरद्वयम् । तदोपमीयते तस्या वदन चारु लोचनम् ॥ ७२ ॥ श्रमयति शरीरमधिक भ्रमयति चेत करोति सतापम् । मोह मुहुश्च कुरुते विषविषम वीक्षण तस्या ॥ ७३ ॥ अतिपूजिततारेय दृष्टि श्रुतिलङ्घनक्षमा सुतनु । जिनसिद्धान्तस्थितिरिव सवासना क न मोहयति ॥ ७४ ॥ नयनच्छलेन सुतनोर्वदनजिते शशिनि पुष्पनौ क्रोधात् । नासानालनिबद्ध स्फुटितमिन्दीवरं द्वेधा ॥ ७५ ॥ आयामिनोस्तदक्ष्णोरञ्जनरेखाविधिं वितन्वत्या । पाणि प्रसाधिकाया प्रापदपाङ्ग चिरेण विश्रम्य ॥ ७६ ॥ प्रभातनीलोत्पलनिर्विशेषमधीरविप्रेक्षितमायताक्ष्या । तया गृहीत नु मृगाङ्गनाभ्यस्ततो गृहीत नु मृगाङ्गनाभि ॥ ७७ ॥ मुग्धारति दोषविरागसस्य नेत्रद्वय खञ्जनमामनन्ति । प्रफुल्लपद्मामुखपार्श्ववर्ति दलद्वय भृङ्गयुत मत मे ॥ ७८ ॥ इन्दीवर लोचनयोस्तुलायै निर्माय यत्नेन विधि कदाचित् । अतुल्यता वीक्ष्य ततो रजामि निक्षिप्य चिक्षेप स पङ्कमध्ये ॥ ७९ ॥ इषुत्रयेणैव जगत्त्रयस्य विनिर्जयात्पुष्पमयाशुगेन । शेषा द्विबाणी सफलीकृतेय प्रियादृगम्भोजपदेऽभिषिच्य ॥ ८० ॥ सेय मृदु कौसुमचापयष्टि स्मरस्य मुष्टिग्रहणार्हमध्या । तनोति न श्रीमदपाङ्गमुक्ता मोहाय या दृष्टिशरौघवृष्टिम् ॥ ८१ ॥ आघूर्णित पक्ष्मलमक्षिपद्म प्रातद्युति श्वेत्यजितामृताशु । अस्या इवास्याश्चलदिन्द्रनीलगोलामलश्यामलतारतारम् ॥ ८२ ॥ कर्णोत्पलेनापि मुख सनाथ लभेत नेत्रद्युतिनिर्जितेन । यदेतदीयेन तत कृतार्था स्वचक्षुषी किं कुरुते कुरङ्गी ॥ ८३ ॥ त्वच समुत्तार्य दलानि रीत्या मोचात्वच पद्मपाटलानाम् । सारैर्गृहीतैर्विधिरुत्पलौघादस्यामृदीक्षणरूपशिल्पी ॥ ८४ ॥ चकोरनेत्रेणदृगुत्पलाना निमेषयन्त्रेण किमेष सृष्ट । सार सुधोद्धारमय प्रयत्नैर्निधातुमेत प्रयने निधातु ॥ ८५ ॥ तरुणीदृशा किं हरिणीभिरासीदस्या सकाशान्नयनद्वयश्री । भूयोगुणेय सकला पलायत्ताम्योऽनवालम्यत विस्मयतीय ॥ ८६ ॥ दृशौ किमस्याश्चपलस्वभावे न दृग्माक्रम्य मिथो मिलेताम् । न चेत्कृत स्यादनयो प्रयाणे विघ्न श्रव कूपनिपातभीत्या ॥ ८७ ॥ केदारभाजा शिशिरप्रवेशात्पुण्याय मन्ये मृतमुत्पलिन्या । जाता यतस्तत्कुसुमेक्षणेय यतश्च तस्योरकटाक्षकोर ॥ ८८ ॥ नतभ्रुवो लोचनखञ्जरीटौ विहारमानन्दमिहारभेते । कथ न मानदहदौ युवानस्तारण्यमत्तानिविमुञ्चयन्तु ॥ ८९ ॥ स्वदृशोर्जनयति सान्द्रता खुरकण्डूयनकैतवान्मृगा । जितयोरुदयत्प्रमीलयोस्तदसत्प्रेक्षणशोभया भयात् ॥ ९० ॥ नलिन मलिन विवृण्वती पृषतीमस्पृशती तदीक्षणे । अपि खञ्जनमञ्जनाञ्चिते विदधाते रुचिगर्वदुर्विधम् ॥ ९१ ॥ श्रुतिलङ्घनमीहमानयोर्मलिनाम्भ तरयोरधीरयो । स्मृतितापरलमेतयोरुचित लोचनयोर्मृगीदृश ॥ ९२ ॥ लोचने हरिणगर्वमोचने मा विदूषय नताङ्गि कज्जलै । सायक सपदि जीवहारक किं पुनर्हि गरलेन लेपित ॥ ९३ ॥ कामिनी नयनकज्जलपङ्कादुत्थितो मदनमत्तमरालः । कामिमानसवनान्तरचारी मुग्धमुग्धनति मानमराला ॥ ९४ ॥ रामाविलोलनयने किमु मीनयुगले नीलोत्पले किमथवा किमु खञ्जरीटौ । किं वा जगत्त्रयजयाय कृतिनि जाने कन्दर्पभूपरचिता नव वार्मणस्य ॥ ९५ ॥ मुग्धरिपुररिपुतोतानलाटक्ष्यासावधि-

१ नेत्रद्वयाधारेऽपि सचिरेषु

१ मिथ

चरितचकोरीकान्तिचोरं तदक्षि । त्रिभुवनयुवचेतोबन्धसंकेतहेतोः सहचरमिव कर्तुं पाशमाशां प्रयाति ॥ ९६ ॥

कटाक्षः

यान्ती गुरुजनैः सार्धं स्मयमानमुखाम्बुजा । तिर्यग्ग्रीवं यदद्राक्षीत्तन्निष्पत्राकरोज्जगत् ॥ ९७ ॥ कश्चित्कृष्णार्जुनगुणा क्वचित्कर्णान्तगामिनी । अपाङ्गश्रीस्तवाभाति सुभ्रूर्भारतगीरिव ॥ ९८ ॥ विशालाक्षीकटाक्षस्य साक्षी त्र्यक्षो महेश्वरः । नाद्यापि प्रकृतिं याति येन विद्धो दिगम्बरः ॥ ९९ ॥ यासां कटाक्षविशिखैः स्मरचौरेण ताडिताः । हृतचैतन्यसर्वस्वा मोक्ष्यन्ते मुग्धकामुकाः ॥ १०० ॥ रे रे घरट्ट मा रोदीः कं कं न भ्रामयन्त्यमूः । कटाक्षवीक्षणादेव कराकृष्टस्य का कथा ॥ १०१ ॥ हत्वा लोचनविशिखैर्गत्वा कतिचित्पदानि पद्माक्षी । जीवति युवा न वा किं भूयो भूयो विलोकयति ॥ १०२ ॥ अस्याः कररुहखण्डितकाण्डपटप्रकटनिर्गता दृष्टिः । पटविगलितनिकलुषा स्रवते पीयूषधारेव ॥ १०३ ॥ वसन्तनीलोत्पलषट्पदानां गीतामृतं श्रोतुमिवोत्तरङ्गौ । नतभ्रुवो लोचनकृष्णसारौ कर्णान्तिकं सततमाश्रयेते ॥ १०४ ॥ नयनाञ्चलचञ्चरीकपूरो वलतेऽयं यत एव पक्ष्मलाक्ष्याः । तत एव भवन्ति नीलपक्षप्रकराणां ननु वृष्टयो नवीनाः ॥ १०५ ॥ यत्र यत्र वलते शनैः शनैः सुभ्रुवो नयनकोणविभ्रमः । तत्र तत्र शतपत्रधोरणी तोरणीभवति पुष्पधन्वनः ॥ १०६ ॥ भवनभुवि सृजन्तस्तारहारायतारा दिशि दिशि विकिरन्तः केतकानां कुटुम्बम् । वियति च रचयन्तश्चन्द्रिकां दुग्धमुग्धां प्रतिनयननिपाताः सुभ्रुवो विभ्रमन्ति ॥ १०७ ॥ प्रणालीदीर्घस्य प्रतिपदमपाङ्गस्य सुहृदः कटाक्षव्याक्षेपाः शिशुशफरफालप्रतिभुवः । युवानां सर्वस्वं कुसुमधनुषोऽस्मान्प्रति सखे नवं नैनाद्वैतं कुवलयदृशः संनिदधति ॥ १०८ ॥ दिनान्ते क्लान्तीनां कनककलशाकारकुचयोरुपर्यस्यन्तीनां कमलकलिकाकोमलकरौ । समुद्यत्कालिन्दीतरलतरकल्लोलकुटिलः कटाक्षः कान्तानां कमिह कमितारं न कुरुते ॥ १०९ ॥ शिलासम्यग्धौतोज्ज्वलधवलधारापरिसरानिमानन्तः श्यामानिव विषमबाणस्य विशिखान् । दृढप्राणायामाण्यपि हृदयमर्माणि रजतः कटाक्षानेतस्या मुनिरपि न सोढुं प्रभवति ॥ ११० ॥ पिपासुरिव चञ्चलं विकटकर्णकूपाञ्जलं ततः प्रतिचलन्मुहुः श्रवणपाशभीतोऽभितः । तनोति तरलाकृतिस्तरललोचने सततं गतागतकुतूहलं मुहुरपाङ्गरङ्गैः स्मरः ॥ १११ ॥ यन्मार्गे तावदास्ते प्रभवति पुरुषस्तावदेवेन्द्रियाणां लज्जां तावद्विधत्ते विनयमपि समालम्बते तावदेव । भ्रूचापाकृष्टमुक्ताः श्रवणपथजुषो नीलपक्ष्माण एते यावल्लीलावतीनां हृदि न धृतिमुषो दृष्टिबाणाः पतन्ति ॥ ११२ ॥

अश्रूणि

अश्रुच्छलेन सुदृशो हुतपावकधूमकलुषाक्ष्याः । अप्राप्य मानमङ्गे विगलति लावण्यवारिपूर इव ॥ ११३ ॥

नासा

पुराणबाणत्यागाय नूतनाधृतकुतूहलात् । तन्नासा भाति कामेन तूणीवाधोमुखीकृता ॥ ११४ ॥ दन्तालिदाडिमीबीजभक्षणोत्कण्ठचेतसः । मन्ये मारशुकस्येयं नासा चञ्चूर्विराजते ॥ ११५ ॥ नासादसीया तिलपुष्पतूणं जगत्त्रयन्यस्तशरत्रयस्य । श्वासानिलामोदभरानुमेया दधद्द्विबाणीं कुसुमायुधस्य ॥ ११६ ॥ केचित्तिलस्य कुसुमं शुकचञ्चुमन्ये नासां वदन्ति कथयाम्यहमन्यदेव । संरक्षितो निजशरासनसंनिधाने वामेन केतकदलैकमयो निषङ्गः ॥ ११७ ॥

नासाभूषणम्

नासामौक्तिकमबले किमधरबिम्बेन विद्रुमं कुरुषे । दृष्ट्वा गुञ्जाबीजं शिव शिव भूयस्तदेव हसितेन ॥ ११८ ॥ श्लेष्मागारे वसतिर्जाताकाकं तदत्र मा यात । आन्दोलनच्छलादिह निवारयन्तीव मौक्तिकानि निर्यान् ॥ ११९ ॥ सुधामयोऽपि क्षयरोगशान्त्यै नासामुक्ताफलकच्छलेन । अनङ्गसंजीवनदृष्टशक्तिर्मुखामृतं ते पिबतीव चन्द्रः ॥ १२० ॥ आकाशात्पतितं पुनर्जलनिधौ मध्ये चिरं संस्थितं पश्चाद्दुःसहवेधजनितक्लेशान्वितं मौक्तिकम् । बाले बालकुरङ्गलोचनयुगे घोरं तपः संचरन्नासाभूषणतामुपैति सखि ते बिम्बाधरापेक्षया ॥ १२१ ॥ अस्याः कामनिवासरम्यभवनं वक्त्रं विलोक्यादरादाश्लिष्येव सुधाकरं प्रियतमं भूमीगतं शोभनम् । नासामौक्तिककैतवेन रुचिरा तारापि सा रोहिणी मन्ये तद्विरहासहिष्णुहृदया तत्संनिधिं सेवते ॥ १२२ ॥

कर्णौ

सौन्दर्यपाशे बद्धेन्दौ कुरङ्गासङ्गभीतया । सूचितौ श्रोत्रपाशाभ्यां पाशाविव मृगीदृशा ॥ १२३ ॥ कमनीयतानिवासः कर्णस्तस्या विचित्रमणिभूषः । सविधप्रसूतरत्नः शङ्खनिधिं दूरतरमकरोत् ॥ १२४ ॥ तालीदलं काञ्चनकर्णपाशौ प्रसारयन्ती सुतनुः कराभ्याम् । रराज कर्णान्तनिषण्णदृष्टिः शाणे दधानेव कटाक्षबाणान् ॥ १२५ ॥ वियोगवाप्याश्रितनेत्रपद्मच्छद्मान्वितोत्सर्गपयःप्रसूनौ । कर्णौ निरम्भा रतितल्पतिम्या निवेशपूर्णौ निधिशिल्पमीदृक् ॥ १२६ ॥ इहाधिशिरेण पथातिवक्रं शर्मौघनिष्यन्दरसप्रवाहः । सोऽस्याः श्रवणयुगे प्रणालीरेखेव धारयत्यभिकर्णकूपम् ॥ १२७ ॥ अस्या यदधरादरः संनिमज्य निधा

१ स्वयमामास सपत्रनिष्पत्रा निष्पत्रे २ बाणे ३ मृगविशेषः.

१ भेदेंद्वारिण २ प्राणे ३ आन्दोलनमिषात् ४ जारान्.

श्रुती दधतुरर्धमर्धम्। कर्णान्तरुत्कीर्णगमीरेख, किं, तस्य सम्यैव न वा नवाङ्क ॥ १२८ ॥ मन्येऽमुना कर्णलतामयेन पाशद्वयेन च्छिद्रुरेतरेण। एकाविपाश वरुण निजिग्येऽङ्गीकृतायामतती रतीश ॥ १२९ ॥ आत्मैव तातस्य चतुर्भुजस्य जातश्रतुर्दोहुचित स्मरोऽपि। तच्चापयो कर्णलते भ्रुवोर्ज्यं वशवगशौ चिपिटे विमम्या ॥ १३० ॥

कर्णभूषणम्

मुक्तताटङ्कयुग प्रतिमुक्त कर्णपार्श्वयोरस्या। मुखकमलमिव निषेवितुमागतममृतांशुबिम्बयुगम् ॥ १३१ ॥ ताटङ्कमस्यास्तरलेक्षणाया मुक्ताफलैश्चारुरुचि विधत्ते। मुखश्रिया चन्द्रमिवाभिभूय बन्दीकृत तारकचक्रवालम् ॥ १३२ ॥ शशी हर्तुं लोभान्मुखकमलशोभा श्रुतिफल सिषेवे सातङ्कस्तव तरुणि ताटङ्कपटात्। तदन्त पीयूष निखिलमथ निक्षेप्तुमधरे मनोजन्मा मुग्धेऽमुहुरहह तुच्छ तमकरोत् ॥ १३३ ॥

कपोलौ

कपोलपाली तव तन्वि मन्ये लावण्यधन्ये दिशमुत्तरास्याम्। विभाति यस्या ललितालकाया मनोहरा वैश्रवणस्य लक्ष्मी ॥ १३४ ॥ स्वर्णच्छवीनामसितेक्षणाना कर्णान्ततो गण्डलतातलानि। भृङ्गा सहेल यदि नापतिष्यन्कोऽवेदयिष्यन्नवचम्पकानि ॥ १३५ ॥ आबद्धपरिवेषमण्डलमल चक्रेन्दुबिम्बाद्वहि कुर्वत्सद्गजजृम्भमाणकलिकावर्णावतस क्रियाम्। तन्वङ्ग्या परिनृत्यतीव हसतीवोत्सर्पतीवोल्बण लावण्य ललतीव काञ्चनशिलाकान्ते कपोलस्थले ॥ १३६ ॥

अधर

तवैष विद्रुमच्छायो मरुमार्ग इवाधर। करोति कस्य नो मुग्धे पिपासाकुलित मन ॥ १३७ ॥ अल्पेनापि सुरक्तेन साधनेन प्रयोजनम्। ओष्ठद्वयसहायेन कान्तासेन जगज्जितम् ॥ १३८ ॥ सर्वस्वेन हि रत्नस्य प्रणेऽर्थं परिहीयते। दयिताधररत्न तु भ्रणित यात्यनर्घताम् ॥ १३९ ॥ अधरोऽयमभीराक्ष्या बन्धुजीवममाहर। अन्यजीवप्रभा हन्त हरतीति विमद्भुतम् ॥ १४० ॥ मुखारविन्ददत्तश्री सुतनोररुणोऽधर। कुरुते हारमाणिक्यप्रदीपान्पाण्डुरत्विष ॥ १४१ ॥ सततोदयमध्येव वदनेन्दोरनिन्दिता। तदोष्ठमुद्रा लावण्यसमुद्रस्येव विद्रुम ॥ १४२ ॥ अधरोऽसौ कुरङ्गाक्ष्या शोभते नाभिकातले। सुवर्णनलिकामध्या माणिक्यमिव विच्युतम् ॥ १४३ ॥ अधर खलु बिम्बनामक फलमाम्यामिति मध्यम वयम्। लभतेऽधरनिम्ब इत्यद पदमस्या रदनच्छदे वदत् ॥ १४४ ॥ उदियतो निशि कलानिधिर्मदेदेतदीयमुखतुल्यतामये। प्रापितो मलिनभावमेतया लज्जया नमसि यात्यदृश्यताम् ॥ १४५ ॥ अपि मृगाक्षि तवाधरपल्लवे दयितदन्तपद न भवत्यद। भुवनमोहनमन्त्रपदाङ्कित किमुत यन्त्रमिद स्मरयन्त्रिण ॥१४६॥ अभिलपन्ति तवाधरमाधुरीं तदिह किं हरिणाक्षि सुधा बुधा। सुरसुधामधरीकुरुते यतस्त्वदधरोऽधरतामगमत्तत ॥ १४७ ॥ पुष्प प्रवालोपहित यदि स्यान्मुक्ताफल वा स्फुटविद्रुमस्थम्। ततोऽनुकुर्याद्विशदस्य तस्यास्ताम्रौष्ठपर्यस्तरुच स्मितस्य ॥ १४८ ॥ बन्धूकबन्धूमरदेतदस्या मुखेन्दुनानेन सहोज्जिहानम्। रागश्रिया शैशवयौवनीया स्वमाह सध्यामधरोष्ठलेखा ॥ १४९ ॥ अस्या मुखेन्दावधर सुधाभूर्बिम्बस्य युक्त प्रतिबिम्ब एष। तस्याथवा श्रीर्द्रुमभाजि देशे समाव्यमानास्य तु विद्रुमेऽसौ ॥ १५० ॥ जानेऽतिरागादिदमेव निम्ब बिम्बस्य च व्यक्तमितोऽधरस्यम्। द्वयोर्निशेषीनगमाक्षमाणा नास्ति भ्रमोऽभून्नयोर्जनानाम् ॥१५१॥ प्रियामुखीभूय सुखी सुधांशुर्रसत्यसौ राहुभयव्ययेन। इमा दशाराधरनिम्बलीला तस्येव बाल करचक्रवालम् ॥ १५२ ॥ अधरमसृत क सदेहो मधुन्यपि नान्यथा मधुरमधिक द्राक्षायाश्च प्रसन्नरस फलम्। सकृदपि पुनर्मध्यस्थ सन्रसान्तरविज्जनो वदतु यदिहान्यस्स्वादु स्वाद्प्रिया-दशनच्छदात् ॥ १५३ ॥ त्व पीयूष दिवोऽपि भूषणमसि द्राक्षे परीक्षेत को माधुर्यं तव विश्वतोऽपि विदित माध्वीक माध्वीकता। एतर्कि तु मनागेरुतदमिव भूमौ न चेत्युप्यमि य बाताधरपल्लवे मधुरिमा नान्यत्र कुत्रापि स ॥ १५४ ॥

दन्ता

द्विधा विधाय शीतांशु कपोलौ कृतवान्विधि। तन्व्यास्तद्दसनिष्यन्दबिन्दवो रदनावलि ॥ १५५ ॥ चन्द्राधिकेन मुखचन्द्रिकया दरायत तत्किरणाङ्कनानाम्। पुर वरिस्ससपृष्ठितीय रदावलीद्वन्द्वति बिन्दुवृन्दम् ॥१५६॥ राजौ द्विजानामिह राजदन्ता सनिभति श्रोत्रियविभ्रम यत्। उद्वेगरागादिमृजावदाताश्चत्वार एते तदवैमि मुक्ता ॥१५७॥ यावद्यावल्लुलत्यदसा मृज्यते दन्तपालिस्तावत्तावद्विगुणमधरच्छायया शोणशोचि। कांचित्त्वस्या परिमलकलाहूतमालिका त्या वक्राभासे प्रसरति मुहु श्यामिकाप्याविरासीत् ॥ १५८ ॥

चिबुक

विलोकितास्या मुखमुन्नमय्य किं वेधसेय सुषमासमाप्तौ। धृत्युद्धवा यच्चिबुके चकास्ति निम्ने मनागङ्गुलियन्त्रणेव ॥ १५९ ॥

---

१ अलका पेरा, पक्षे-कुबेरनगरी २ वैश्रवणस्य कुबेरस्य पक्षे,-वै इति पदच्छेद सर्वास्ये कर्णस्य ३ प्रवालकान्ति पक्षे-स्निग्धा द्रुमच्छाया यस्मात् ४ मरुदेशस्याम ५ छिद्रे नाडे सती लभ्याद्ययम् ६ मूल्यम् ७ संजातमयम् ८ अमूल्यताम् ९ बन्धूक पुष्पम्, पक्षे,-बन्धुभूता जीवा-

१ लोहिताम् २ निहृष्टम् ३ ताराम्बम् ४ मालाद

## मुखम्

जितेन्दुपद्मलावण्य क कान्तावदन जयेत्। मुक्त्वा तदेव सुरतश्रमजिह्मितलोचनम् ॥ १६० ॥ चलद्भृङ्गमिवाम्भोजमधीरनयन मुखम् । तदीय यदि दृश्येत काम कुद्धोऽस्तु किं तत ॥ १६१ ॥ विलसलानन तस्या नासाग्रस्थितमौक्तिकम् । आलक्षितबुधाश्लेष राकेन्दोरिव मण्डलम् ॥ १६२ ॥ मुख वहति वन्धूकबन्धुरेणाधरेण सा। पूर्णेन्दुमिव सौन्दर्यादङ्कलालितकौस्तुभम् ॥ १६३ ॥ विधाय पूर्वं पूर्णेन्दुमस्या मुखमभूद्ध्रुवम् । धाता निजासनाम्भोजविनिमीलनदु स्थित ॥ १६४ ॥ शरत्कालसमुल्लासिपूर्णिमाशर्वरीप्रियम् । करोति ते मुख तन्वि चपेटापातनातिथिम् ॥ १६५ ॥ राकायामकलङ्क चेदमृतांशोर्भवेद्वपु । तस्या मुख तदा साम्यपराभवमवाप्नुयात् ॥ १६६ ॥ आनन मृगशावाक्ष्या वीक्ष्य लोलालकावृतम् । भ्रमद्भ्रमरसंकीर्णं स्मरामि सरसीरुहम् ॥१६७॥ इय सुनयना दासीकृततामरसश्रिया । आननेनाकलङ्केन जयतीन्दु कलङ्किनम् ॥ १६८ ॥ लावण्यमधुभि पूर्णमास्यमस्या विकस्वरम् । लोकलोचनरोलम्बकदम्बै कैर्न पीयते ॥ १६९ ॥ ननु नीलाञ्चलसवृतमाननमाभाति हरिणनयनाया । प्रतिबिम्बित इव यमुनागभीरनीरान्तरेणाङ्क ॥ १७० ॥ अम्बुजमम्बुनि मग्न त्रासादाकाशमाश्रितश्चन्द्र । सम्प्रति क परिपन्थी य प्रति कोपारुण वदनम् ॥ १७१ ॥ आसाद्य सलिलभरे सवितारमुपास्य सादर तपसा । अधुनाब्जेन मनाक्तव मानिनि तुलना मुखस्याप्ता ॥ १७२ ॥ मुविरलमौक्तिकतारे धवलांशुकचन्द्रिकाचमत्कारे । वदनपरिपूर्णचन्द्रे सुन्दरि राकासि नात्र सदेह ॥ १७३ ॥ पुरा दर्शय सुन्दरि मुखेन्दुमीपत्रपामपाकृत्य । जायाजित इति रुदा जनश्रुतिर्मे यशो भवतु ॥ १७४ ॥ अबले सलिले व्यसनिता ते मुखभावो गमितो न पङ्कजेन । कथमादिमवर्णलोपलस्य द्विजराजेन कृतोरुनिग्रहस्य ॥ १७५ ॥ सुषमाविषये परीक्षणे निखिल पद्ममभाजि तन्मुखात् । अधुनापि न भङ्गलक्षण सलिलोन्मज्जनमुज्झति स्फुटम् ॥ १७६ ॥ य मसर्ज कमल रमागृह विश्वलोचनमहोत्सव विधि । एष तारगमृगीदृशो मीनकेतननिकेतन मुखम् ॥ १७७ ॥ साधु चन्द्रमसि पुष्करै कृत मीलित यदभिरामताधिके । उद्यता जयिनि कामिनीमुखे तेन साहसमनुष्ठित पुन ॥ १७८ ॥ तस्या मुखस्यातिमनोहरस्य कर्तु न शक्त सदृश प्रियाया । अद्यापि शीतद्युतिराजबिम्ब निर्माय निर्माय पुनर्भिनत्ति ॥ १७९ ॥ अनेन रम्भोरु तवाननेन पीयूषभानोस्तुलया धृतस्य । ऊनस्य नून परिपूरणाय तारा स्फुरन्ति प्रतिमानखण्डा ॥ १८० ॥ अस्या मुखस्यास्तु न पूर्णिमास्य पूर्णस्य जित्वा महिमा हिमांशुम् । भ्रूलक्ष्मखण्ड दधदर्धमिन्दुर्भालस्तृतीय खलु यस्य भाग ॥ १८१ ॥ व्यधत्त धाता मुखपद्ममस्या सम्राजमम्भोजकुलेऽखिलेऽपि । सरोजराजौ सृजतोऽस्य दत्तीयौ नेत्राभिधेयावत एव सेनाम् ॥ १८२ ॥ दिवारजन्यो रविसोमभीते चन्द्राम्बुजे निक्षिपत स्वलक्ष्मीम् । अस्या यदास्ये न तदा तयो श्रीरेकश्रियेद तु कदा न कान्तम् ॥ १८३ ॥ अस्या मुखश्रीप्रतिबिम्बमेव जलाच्च ताता मुकुराच्च मिनाव् । अभ्यर्थ्य धत्त खलु पद्मचन्द्रौ विभूषण याचितक कदाचित् ॥ १८४ ॥ अस्या मुखेनैव विजित्य नित्यस्पर्धी मिलत्कुङ्कुमरोषभासा । प्रसह्य चन्द्र खलु नह्यमान स्यादेव तिष्ठन्परिवेषपाश ॥ १८५ ॥ विधोर्विधिर्बिम्बशतानि लोप लोप कुहूरात्रिषु मासि मासि । अभङ्गुरश्रीकममु किमस्या मुखेन्दुमस्थापयदेकशेपम् ॥ १८६ ॥ कपोलपत्त्रान्मकरात्सकेतुर्भ्रूभ्या जिगीषुर्धनुषा जगन्ति । इहावलम्ब्यास्ति रतिमनोभू रज्यद्वयसो मधुनाधरेण ॥ १८७ ॥ धिक्तस्य मन्दमनस कुकवे कवित्व य स्त्रीमुख च शशिन च सम करोति । भ्रूभङ्गविभ्रमकटाक्षनिरीक्षितानि कोपप्रसादहसितानि कुत शशाङ्के ॥ १८८ ॥ चन्द्र कलङ्करहित शफरद्वय च निस्तोयमन्धतमस च सुगन्धि तन्व्या । वक्त्रच्छलेन भुवि सृष्टवतो विधातुर्वर्ण्येत केन करकौशलमद्भुत तत् ॥ १८९ ॥ अस्यामपूर्व इव कोऽपि कलङ्करिक्तश्चन्द्रोऽपर किमुत तन्मकरध्वजेन । रोमावलीगुणमिलत्कुचमन्दरेण निर्मथ्य नाभिजलधिं ध्रुवमुद्धृत स्यात् ॥ १९० ॥ लोके कलङ्कमपहातुमय शशाङ्को जातो मनस्यन मुख तरलायताक्षि । तत्रापि कलयसि तन्वि कलङ्कलेखा नार्थ क्षमाश्रितना हि कलङ्कयति ॥ १९१ ॥ यन्मधुमिश्रितमितो रसनामणीना यन्मृगमदसौरभमङ्गदलयो वदन्ति । यद्दीतय स्फुरदरालतयश्च लीला दोलाविलासतरलस्तदयमुखेन्दु ॥ १९२ ॥ प्रविश झटिति गेह मा बहिस्तिष्ठ कान्ते ग्रहणसमयवेला वर्तते शीतरश्मे । तव मुखमकलङ्क वीक्ष्य नून स राहुर्ग्रसति तव मुखेन्दु पूर्णचन्द्र विहाय ॥ १९३ ॥ यदमरानाते सिन्धोरन्त कथचिदुपार्जित सकल-

१ सपत्राम्भोरुहम् २ मुखम् मुखमाम्भोजमिव- ३ आदौ भवर्णो यस्य तस्य भावस्तया भकारादि पङ्कजस्य भकाराश्रित वर्णलोपे, पद्म-भ्रमरत्वम् ४ अन्ते अकारो यस्येत्याद्यस्य पङ्कजस्य, पा-अविद्यमान ५ प द्रेण ची-आदाभोजा ६ कृता उत्कृष्टामिग्रहा स्तनौ यस्य

१ मुख्यम्

मपि तद्वाना कान्तामुखे विनिवेशितम् । सुरसुमनस श्वासामोदे शशी च कपोलयोरमृतमधरे तिर्यग्भूते निष च विलोचने ॥१९४॥ असान्तश्चञ्चद्विकचनलीलाञ्ज-युगलस्तलस्फूर्जत्कम्बुर्निलसदलिसंघात उपरि । विना दोषासङ्ग सततपरिपूर्णाखिलकल कुत प्राप्तश्चन्द्रो विगलित कलङ्क सुमुखि ते ॥ १९५ ॥ जगन्नेत्रानन्द वदनमतुल पक्ष्मलदृश कथकार पङ्केरुहमनुविधातु प्रभवति । अथ चेदाकाङ्क्षी सह मदनकोदण्डलतया चकोरो राकेन्दु कुवलययुग किं न वहति ॥ १९६ ॥ अनाकाशे चन्द्र सरसिजदलद्वन्द्वसहितो गृहीत पश्चार्धे कुटिलकुटिलै सोऽपि तिमिरै । सुधा मुञ्चत्युच्चैर्गशानिमथ समोहजननी किमु पालालीय वदत जगत कर्तुरुदिता ॥ १९७ ॥ सुधा मद्ध्मासैरुपननचकोरैरनुसृता किरञ्ज्योत्स्नामच्छा नवलेवलि-पाकप्रैणयिनीम् । उपप्राकाराम प्रेहिशु नयने तर्कय मैनाग नाकाशे कोऽय गलितहरिण शीतकिरण ॥ १९८ ॥ विना क्षाय कोऽय समुदयति सौरभ्यसुभग किरञ्ज्योत्स्नाधारा-मधिधरणि तारापरिवृढ । धनुर्धत्ते स्मार तिरयति विहार न तमसा निरातङ्क पङ्केरहयुगलमङ्के नटयति ॥ १९९ ॥ अनुच्छिष्टो दैवैरपरिदलितो राहुदशनै कलङ्केनास्पृष्टो न खलु परिभूतो दिनकृता । कुहूभिर्नो लुप्तो न च युवति-वक्त्रेण विजित कलानाथ कोऽय कनकलतिकायामुदयते ॥ २०० ॥ सितज्योत्स्नागङ्गा तपनतनया श्यामलरुचि सरस्वत्योष्ठाभारुणकिरणसौन्दर्यजयिनी । इमास्तिस्रस्तीर्था-धिप इव मुखे सुभ्रु मिलितास्तवेद सेव को न लभत इहा नन्दलहरीम् ॥ २०१ ॥ कोष स्फीततर स्थितानि परित पत्राणि दुर्गे जल मैत्र मण्डलमुज्ज्वल चिरमधो नीता-स्तथा कण्टका । इत्याकृष्टशिलीमुखेन रचना कृत्वा तद त्यद्भुत यत्नेन जिगीषुणापि न जित मुग्धे त्वदीय मुखम् ॥ २०२ ॥ आरब्धे दयितामुखप्रतिसमे निर्मातुमब्जे निपि व्यक्त जन्मसमानमेव मिलितामशुच्छटा वर्षति । आत्म द्रोहिणि रोहिणीपरिवृढे पर्यङ्कपङ्केरुह सकोचादय दु स्थितस्य न विधेस्तच्छीलमुन्मीलितम् ॥ २०३ ॥ तानि प्राञ्चि दिनानि यत्र रजनी सेहे तमिस्रापद सा सृष्टिर्विरराम यत्र भवति ज्योत्स्नामयो नातप । अथान्य समयस्तथा हि तिथ-योऽप्यस्या मुखस्योदये हस्ताहस्तिकया हरन्ति परितो राकावराकीयश ॥ २०४ ॥ अज्ञातेन्दुपराभव परिलम-धान्येल्लेनाञ्जन [?]तभ्रूल्लसैणनाभितिलक श्रीखण्डपत्राल-कम् । बन्धूकाभरसुन्दर सुखस्निग्व्यामोहि वाक्यामृत मौलौस्याद्भुतपङ्कज परतनोरास्य न कस्य प्रियम् ॥ २०५ ॥ चातुर्यस्यैकचिह्न फलममलगिरो मूलमुत्तापशान्ते पद्माया सुप्रसाद स्थलमपि च रुचा कोशभूत कलानाम् । शृङ्गार-स्यातिमान शरदमृतकरस्पर्धि सौभाग्यसिन्धोरास्य तस्या सहास्य मनसि न मृदुले कस्य लास्य तनोति ॥ २०६ ॥

## स्मितम्

कामबाणप्रहारेण मूर्च्छितानि पदे पदे । जीवन्ति युवचेतासि युवतीना स्मितामृते ॥ २०७ ॥ स्मयमान-मायताक्ष्या किंचिदभिव्यक्तदशनशोभि मुखम् । असमग्र-लक्ष्यकेसरमुच्छ्वसदिव पङ्कज दृष्टम् ॥ २०८ ॥ धवलीकरोति हरितो मलिनीकुरुते मन सपत्नीनाम् । अस्या हासविकासो मम तु मनो रक्तमाचरति ॥ २०९ ॥ यदि प्रसादीकुरुते सुधाशोरेषा सहस्राशमपि स्मितस्य । तत्कौमुदीना कुरुते तमेव निर्मित्यै देव सफल स्वजन्म ॥ २१० ॥

## कण्ठ

कण्ठस्य निदधे कान्ति मुक्ताभरणता यथा । नास्या स्वभावरम्यस्य मुक्ताभरणता तथा ॥ २११ ॥ असा-वुद्वेल्लावण्यरत्नाकरसमुद्भव । जगद्विजयमाङ्गल्यशङ्ख कुसुमधन्वन ॥ २१२ ॥ श्रोत्रपीयूषगण्डूषै काकलीकल-गीतिभि । कण्ठ कुण्ठितचातुर्या विपञ्चीपञ्चमध्वने ॥ २१३ ॥ अय त्रयाणा ग्रामाणा विधान मधुरध्वनि । रेखात्रयमितीवास्या सूचित कण्ठकन्दले ॥ २१४ ॥ कण्ठस्य तस्या स्तनबन्धुरस्य मुक्ताकलापस्य च निस्त-लस्य । अन्योन्यशोभाजननाद्बभूव साधारणो भूषणभूष्य-भाव ॥ २१५ ॥ कवित्वगानप्रियवादसत्यान्यस्या विधाता न्यधिताधिकण्ठम् । रेखात्रयन्याससिषादमीषा वासाय सोऽय विबभाज सीमा ॥ २१६ ॥ मुक्तोत्कर सकटशुक्तिमध्या-द्विनिर्गत सारसलोचनाया । जानीमहेऽस्या कमनीय-कम्बुग्रीवाधिवासाद्गुणवत्त्वमाप ॥ २१७ ॥

## वाणी

अमृतद्रवमाधुरीधुरीणा गिरमाकर्ण्य कुरङ्गलोचनाया । मुहुरभ्यसन कषायकण्ठी कलकण्ठी कुरुते कुहूरुतानि ॥ २१८ ॥ स्वरेण तस्याममृतस्रुतेव प्रजल्पितायामभिजात-वाचि । अप्यन्यपुष्ट प्रतिकूलशब्दा श्रोतुर्वितन्त्रीरिव ताड्यमाना ॥२१९॥ शिरीषकोषादपि कोमलाया वधा विधा-याङ्गमशेषमस्या । प्रायप्रकर्ष सुकुमारसर्गे समापयद्वाचि मृदु-त्वमुद्राम ॥२२०॥ प्रसूनबाणाद्वयवादिनी सा कापि द्विजे-नोपनिषत्प्रियेण । अस्या स्मितासद्द्विजराजतो या नाधीयते भैक्षभुजा तरूण्य ॥२२१॥ पद्माङ्कसद्मानमवेक्ष्य लक्ष्मीमेकस्य विष्णो शयनात्मपत्नीम् । आस्ते कुमस्या भजते जिताब्ज सरस्वती तद्विजिगीषया किम् ॥२२२॥ कण्ठे वसन्ती चतुरा

१ प्रसारयन् २ रूपाविशेष ३ सहचरीम् ४ मेरय ५ स्तव

१ मांश्य

यदस्या सरस्वती वादयते विपञ्चीम् । तदेनं वाग्भूय मुखे मृगाक्ष्या श्रोतु श्रुतौ याति सुधारसत्वम् ॥ २२३ ॥

बाहू

दयिताबाहुपाशस्य कुतोऽयमपरो विधि । जीवयत्यर्पित कण्ठे मारयत्यपवर्जित ॥ २२४ ॥ शब्दवद्भिरलंकारैरुपेतमतिकोमलम् । सुवृत्त काव्यवद्भेजे तद्बाहुलतिकाद्वयम् ॥ २२५ ॥ सरले एव दोर्लेखे यदि चञ्चलचक्षुष । अमुग्धाभ्यो मृणालीभ्य कथमाजह्रतु श्रियम् ॥ २२६ ॥ बाहू तस्या कुचाभोगनिरुद्धान्योन्यदर्शनौ । मन्त्रित कथमेताभ्या मृणालीकीर्तिलुण्ठनम् ॥ २२७ ॥ बाहू प्रियाया जयता मृणाल द्वन्द्वे जयो नाम न विस्मयोऽस्मिन् । उच्चैस्तु तच्चित्रममुष्य यस्मादालोक्यते निर्व्यथन यदन्त ॥ २२८ ॥ अजीयतावर्तगुणेषु नाभ्या दोर्भ्यां मृणाल किमु कोमलाभ्याम् । नि सूत्रमास्ते घनपङ्कमग्नस्तु मूर्तासु नाकीर्तिषु तन्निमग्नम् ॥ २२९ ॥

करौ

कुसुमायुधकोदण्डे हस्तौ निक्षीर्णचक्षुष । अशोकपल्लवाशाणा प्रतिहस्तत्वमागतौ ॥ २३० ॥ नाहं धार्यमधीराक्षि सुखेदो समुख त्वया । इतीव लीलापद्मेन करेऽस्या कान्तिरर्पिता ॥ २३१ ॥ स्पृष्टस्त्वयैव दयिते स्मरपूजाव्यापृतेन हस्तेन । उद्भिन्नापरमृदुतरकिसलय इव लक्ष्यतेऽशोक ॥ २३२ ॥ अस्या करस्पर्शनगर्धनर्द्धिर्वालत्वमापत्पल्लु पल्लवो य । भूयोऽपि नामाधरसाम्यगर्वे धुर्न कथयास्तु न स प्रवाल ॥ २३३ ॥ अस्यैव सर्गाय भवत्करस्य सरोजसृष्टिर्मम हस्तलेख । इत्याह धाता हरिणेक्षणाया किं हस्तलेखीकृतया तया माम् ॥२३४॥ मुग्धे प्रतारयसि किं कुसुमानि हर्तुमेनान्यशोकनिटपस्य कुतूहलेन । अस्यैव तन्वि नवपल्लवडम्बरेषु किं न हारयिष्यसि ननु स्वयमेव पाणी २३५

कङ्कणम्

गौराङ्ग्या भुजलावण्यमीलित हेमकङ्कणम् । कण्ठाश्लेषे वयस्याभि काठिन्यादनुमीयत ॥ २३६ ॥ प्रकोष्ठबन्धे बिम्बोष्ठ्यास्तस्या काञ्चनकङ्कणम् । नाल वलयित हस्ते हेमाब्जस्येव राजते ॥ २३७ ॥ सौवर्णकङ्कणश्रेण्या भाति तद्बाहुकन्दली । तूणचम्पकमौर्व्येव पुष्पचापेन वेष्टिता ॥ २३८ ॥ सहेमकटक धत्ते सा कर पद्मतस्करम् । पद्मिनीनालभस्येव मूले वेष्टितमङ्गुना ॥ २३९ ॥ हस्ते चकास्ति वामाक्ष्यास्तस्या कङ्कणमालिका । मन कुरङ्गबन्धाय पाशालीव मनोभुव ॥ २४० ॥ कृशाङ्ग्या कुचभारेण दूरमुत्सारितौ भुजौ । वहत कङ्कणव्याजेन वाचाला वलयावलिम् ॥ २४१ ॥ न्यस्तानि दन्तवलयानि करे कदाचित्तानी दुग्धघटितानि ममैष तर्क । अस्या निसर्गमृदुपाणिसरोरुहेषामामोचने झटिति य मुकुलीबभूव ॥ २४२ ॥

हस्तरेखा

आयुरेखा चकारास्या करे द्राघीयसी विधि । शौण्डीर्यगर्वनिर्वाहप्रत्याशा च मनोभुव ॥ २४३ ॥

अङ्गुल्य

सुदीर्घा रागशालिन्यो बहुपर्वमनोहरा । तस्या विरेजुरङ्गुल्य कामिना सकथा इव ॥ २४४ ॥ रत्यन्तस्याङ्गुलिपञ्चकस्य मिषादसौ हेङ्गुलपञ्चतूणे । हैमैकपुङ्खासि विशुद्धपर्वा प्रियाकरे पञ्चशरी स्मरस्य ॥ २४५ ॥

मुद्रिका

अङ्गुलीषु कुरङ्गाक्ष्या शोभते मुद्रिकावलि । प्रोतेव बाणै पुष्पेषो सूक्ष्मलक्ष्यपरम्परा ॥ २४६ ॥

स्तनौ

मृद्वङ्गि कठिनौ तन्वि पीनौ सुमुखि दुर्मुखौ । अत एव बहिर्यातौ हृदयात्ते पयोधरौ ॥२४७॥ तन्वङ्ग्या स्तनयुग्मेन मुख न प्रकटीकृतम् । हाराय गुणिने स्थान न दत्तमिति लज्जया ॥ २४८ ॥ यन्न माति तदङ्गेषु लावण्यमतिसंभृतम् । पिण्डीकृतमुरोदेशे तत्पयोधरता गतम् ॥२४९॥ स्वयंभू शम्भुरम्भोजलोचने त्वत्पयोधर । नखेन कस्य धन्यस्य चन्द्रचूडो भविष्यति ॥ २५० ॥ अनिवेनि कुचद्वन्द्व हन्तु नाम जगत्त्रयम् । श्रुतिप्रणयिनोरक्ष्णोरयुक्त जनमारणम् ॥ २५१ ॥ प्रायश्चित्त न गृह्णीतस्तन्वङ्ग्या पतितौ स्तनौ । अत एव तयो स्पर्शे लोकोऽय शिथिलादर ॥२५२॥ पयोधरघनीभावस्तावदम्बरमध्यग । आश्लेषोपगमस्तत्र यावद्धैर्य प्रतनते ॥ २५३ ॥ भाति निर्विवरे तस्याश्चित्र कुचयुगान्तरे । क्रीडाकुण्डलितोच्चण्डकोदण्ड कुसुमायुध ॥ २५४ ॥ कुचद्वये चकोराक्षी चिम्बुकप्रान्तचुम्बिनि । मर्मोक्तिषु न शक्नोति स्यातु लज्जानतानना ॥ २५५ ॥ शङ्के तद्विषमक्लेशसाध्य कुसुमधन्वन । काठिन्य बहिरेवास्या स्तनाभ्या येन धारितम् ॥ २५६ ॥ सा स्तनाञ्जलिनेव मन्मथ प्रथमागतम् । करोतीवोन्मुख बाला बान्धव यौवन श्रिय ॥ २५७ ॥ अस्त्यप्रतिसमाधेय स्तनद्वन्द्वस्य दूषणम् । स्फुटता कञ्चुकाना यन्नायात्यावरणीयताम् ॥ २५८ ॥ कुम्भौ सदम्भौ करिणा कलशौ मन्दशीलौ । घनचाक्री वराकी च तदीयकुचयो पर ॥ २५९ ॥ सुरेन्दुचन्द्रिकापूरप्लाव्यमानौ पुन पुन । शीतभीताविवान्योन्य तस्या पीडयत स्तनौ ॥ २६० ॥ तत्कुचौ चरत किंचिन्नून मनसि नन्दनम् । नित्यो मुखौ यदासाते मौलीरत्नस्य भास्वत ॥ २६१ ॥ सा धारयत्यधीराक्षी दुर्वह स्तनमण्डलम् । गाढमर्पितमारूढश्रिय कुसुमकार्मुक ॥ २६२ ॥ तस्यास्तुङ्गस्तनच्छाया

१ लक

१ निमेषदर्शनरहितम्, पक्षे-त्रिकोणत्वम् परस्पर संश्लिष्टत्वात् २ वे०, पक्षे,-कण ३ पापनिष्कृतिम्, पक्षे,-प्रायो बाहुल्येन चित्तमाहतम् ४ पतितौ, पक्षे,-भक्तितौ ५ पयोधराणां मेघानां धनीभाव प्राचुर्यम् ६ आकाशमध्यवर्ती च ७ आश्लेषागमस्वादय, पक्षे,-सुगमम्

चक्रास्ति निगलीतटे । लीना तिमिरलेखेव वदनेन्दोरगोचरे ॥ २६३ ॥ स्वकीय हृदय भित्त्वा निर्गतौ यो पयोधरौ । हृदयस्यान्यदीयस्य भेदने का कृपा तयो ॥ २६४ ॥ अल्प निर्मितमाकाशमनालोच्यैव वेधसा । इदमेवंविध भावि भवत्या स्तनमण्डलम् ॥ २६५ ॥ उच्छ्रय मण्डलत्वा तरेख- माबद्धकुड्मलम् । अपर्याप्तमुगे वृद्धे ग्रसत्यस्या स्तनद्वयम् ॥ २६६ ॥ मध्येन तनुमध्या मे मध्य जितवतीत्ययम् । इभकुम्भौ भिनत्त्यस्या कुचकुम्भनिभौ हरि ॥ २६७ ॥ पटविघटितमपि कुचतटमकपटमनस कुरङ्गनयनाया । मणिमयमयूखपटलीपटलीनतया न सम्यगालोचि ॥ २६८ ॥ प्रतिपक्षो यदि वक्षोरुहपरिणाह कुरङ्गनयनाया । आकाश- ग्रासतपस श्रीफल विफलस्तवायास ॥२६९॥ चक्षत्काञ्चन शैलावस्या वक्षोरुहौ तन्व्या । नो चेत्तावधिरूढा कथ- मनिमिषता भजेत मे दृष्टि ॥ २७० ॥ करतलयुगपरिणद्धे कुचकलशे कुङ्कुमारुणे तस्या । सिन्दूरिते करिपते कुम्भे मक्षनमालेव ॥२७१॥ काठिन्यमङ्गैरखिलैर्निरस्त कुत्रो युवत्या शरण जगाम । अथ पविष्याव इतीव भीत्या न शक्नुतस्तानपि हातुमेतत् ॥२७२॥ विघानिश वारिणि कण्ठदघ्ने दिवाकराराधनमाचरन्ती । वक्षोजतास्ये किमु पक्ष्मलाक्ष्यास्तपश्चरत्यम्बुज पङ्क्तिरेषा ॥ २७३ ॥ अन्योन्यमुत्पीडयदुत्पलाक्ष्या स्तन- द्वय पाण्डु तयो मद्वदम् । मध्ये यथा श्याममुखस्य तस्य मृणालसूत्रा तरमप्यलभ्यम् ॥ २७४ ॥ किं नर्मदाया मम सेयमस्या दृश्यामितो बाहुलतामृणाली । कुचौ किमुत्तस्यतु रन्तरीपे सरोष्मशुष्यत्तरवाल्यवार ॥ २७५ ॥ ताल प्रभु स्यादतुलकुर्तुमेतावुत्थानसुभ्यौ पतित न तावत् । पर च नाधित्य तरु महान्त कुचौ कृशाङ्गया स्तत एव तुङ्गौ ॥ २७६ ॥ एतत्कुचस्पर्धितया घटस्य ख्यातस्य शास्त्रेषु निदर्शनत्वम् । तस्माच्च शिल्पान्मणिकादिकारी प्रसिद्धनामा- जनि कुम्भकार ॥ २७७ ॥ निःशङ्कसङ्कोचितपङ्कजोऽय- मस्यामुदीतो मुखमिन्दुबिम्ब । चित्र तथापि स्तनकोक- युग्म न स्तोकमप्यञ्चति विप्रयोगम् ॥ २७८ ॥ आभ्या कुचाभ्यामिभकुम्भयो श्रीरादीयतेऽस्याननयो क ताभ्याम् । भयेन गोपायितमौक्तिकौ तौ प्रव्यक्तमुक्ताभरणाविमौ यत् ॥ २७९ ॥ करामजामञ्चत्वकोटिरथो ययोरिमौ तो तुल- येत्कुचौ चेत् । गर्वे तदा श्रीफलमुन्मदिष्णु जात वैरीम- प्यधुना न लुभ्यम् ॥ २८० ॥ मध्य तनूकृत्य यदीदमीय वेधा न दध्यात्कमनीयमशम् । केन स्तनौ सम्प्रति यौव- नेऽस्या सृजेदनन्यप्रतिमावयष्टे ॥ २८१ ॥ तत्रोपकण्ठ- स्थिततारहारस्फुरत्प्रभाशैवलिनीजलेषु । लीनो मनोजद्विप एव तस्य व्यक्तौ न गण्डौ किमुरोजपिण्डौ ॥ २८२ ॥ सता समालोक्यता विवेकान्हृवीपि हृत्वा खरजाणवहौ । धत्ते स्तन श्यामशिरोमिषेण तनूदरि न्यायुपभसावि दुम् ॥ २८३ ॥ नयननीरज कि भवता कृत मुखशशी यदय रिपुराश्रित । इति वचो वितरीतुमिवो मुख वरतनो स्तन- चक्रयुग बभौ ॥ २८४ ॥ बदरामलकाम्रदाडिमानामपहृत्य श्रियमुन्नतौ क्रमेण । अधुना हरणे कुचौ यतेते दयिते ते करिशावकुम्भलक्ष्म्या ॥ २८५ ॥ कनककमुकायित पुर- स्तादथ पङ्केरुहकोरकायमाणम् । क्रमशः कलशायमान- मास्ते सुदृशो वक्षसि कस्य भागधेयम् ॥ २८६ ॥ अपि तद्वपुषि प्रसर्पतोर्गमित कान्तिझरैरगाधताम् । स्मरयौवनयो खलु द्वयो प्लवकुम्भौ भवत कुचावुभौ ॥ २८७ ॥ कलशे निजहेतुदण्डज किमु चक्रभ्रमिकारिता गुण । स तदुच्च- कुचौ भ्रम प्रमाभ्रमचक्रभ्रमिमातनोति यत् ॥ २८८ ॥ जम्बीरश्रियमतिलङ्घ्य लीलयैव व्यानम्रीकृतकमनीयहे- मकुम्भौ । नीलाम्भोरुहनयनेऽधुना कुचौ ते स्पर्धेते किल कनकाचलेन सार्धम् ॥ २८९ ॥ शुकीचञ्चूक्षतात्तच्छवि फलयुग यौवनतरोरय शङ्कक्षुण्ण मदनकरिण कुम्भयुगलम् । समुद्र भोगायामृतकलशयुग्म सुकृतिन कुचद्वन्द्व तन्व्या नवनखपदाङ्क विजयते ॥ २९० ॥ कुचावस्या काम- द्विपकलभकुम्भाविति परे वदन्त्यन्ये वक्षःसरसि कमले शावनघटौ । ममाय सिद्धान्त स्फुरति मदनेन त्रि- जगतीं विनिर्जित्य न्युब्जीकृतमिव निज दुन्दुभियुगम् ॥ २९१ ॥ जम्बीर वा कमलमुकुल हेमगुच्छ यथेच्छ माङ्गल्य वा कलयतु जनो भूपतेर्मन्मथस्य । एतद्द्वन्द्व कलयति मतिर्मामकीना नवीना केनाप्यस्या हृदि विनि- हित मन्मथानन्दकन्दम् ॥ २९२ ॥ पुष्पेषोरभिषेकहेमक- लशौ हारप्रभावाहिनीचक्राह्वौ मदनो मदद्विपपते कुम्भौ रते कन्दुकौ । कन्दौ बाहुमृणालिकायुगलयोर्लीलालतास- कले नव्यौ रत्नसमुद्गकौ वहति सा लावण्यपूर्णौ स्तनौ ॥ २९३ ॥ यूना मोहमहाफलप्रसविनीं नाभ्यालवाल्यो- त्थिता सेवतु रोमलता सुखामृतनिधेर्लावण्यनामामृतम् । नेष्यन्सारणिका विभज्य कृतवान्कूटद्वय पार्श्वयो पयेषु- सदिद पयोधरयुग लोका समाचक्षते ॥ २९४ ॥ उद्भिन्न किमिद मनोभवतपश्चीडारविन्दद्वय सुते तन्वय- मेकन किठ लसद्रोमावलीनान्त । चक्रद्वमिद युम तदपि न स्यातु मुखेन्दो पुरो लावण्याम्बुनि

१ कण्ठप्रमाणे २ सूर्याराधनम् ३ लावण्यलेश कर्पूर्ति च
१४ सु. र. भा

१ चक्रवाकौ २ संपुटौ ३ पदार्थान्तरम्

मग्नयौ नगजस्यावैमि कुम्भद्वयम् ॥ २९५ ॥ उद्भेद प्रतिपद्य पङ्कबदरीभाव समेत्य क्रमात्तुनागाकृतिमाप्य पूगपदवीमारुह्य बिल्वश्रियम् । लब्ध्वा तालफलोपमा च ललितामासाद्य भूयोऽधुना चञ्चत्काञ्चनकुम्भजृम्भणमिमावस्याः स्तनौ बिभ्रत ॥ २९६ ॥ [1]रत्याप्तप्रियलाञ्छने [2]कठिनतावासे [3]रसालिङ्गिते [4]प्रह्लादैकरसे [5]क्रमादुपचिते [6]भूभृद्गुरुत्वापहे । [7]कोकस्पर्धिनि [8]भोगभाजि [9]जनितानङ्गे [10]खेलीनोन्मुखे भाति श्रीर[11]मणावतारदशकं बाले भवत्याः स्तने ॥ २९७ ॥ मध्योऽस्य बलिसद्म दृष्टिरधिकं पृथ्वी सुपर्वालयो बाहुस्तत्कमलेक्षणा त्रिजगतीमेकैव संरक्षति । इत्येव स्तनयोर्मिषेण कनकक्षोणीभृता संधृतौ यस्यामात्मकिशोरकौ पविभयव्याजेन जम्भद्विष ॥ २९८ ॥

कञ्चुकी

उपरि पीनपयोधरपालिता पटकुटीव मनोभवभूपते । विजयिनस्त्रिपुरारिजिगीषया तव विराजति भामिनि कञ्चुकी ॥ २९९ ॥

हार

घटीयन्त्रायते हारो नाभिकूपे मृगीदृशः । ससेक्तुमिव लावण्यपयसा यौवनद्रुमम् ॥ ३०० ॥ हार कुरङ्गशावाक्ष्या राजति स्थूलमौक्तिकः । नाभिलावण्यपानीयघटीयन्त्रगुणोपम ॥ ३०१ ॥ [12]मातङ्गकुम्भसंसर्गजातपातकशङ्कया । स्नातीव मुक्ताहारोऽस्याः स्फुरत्कान्तिजले गले ॥ ३०२ ॥ प्राणेश्वरपरिष्वङ्गविभ्रमप्रतिपत्तिभि । मुक्ताहारेण लसता हसतीव स्तनद्वयम् ॥ ३०३ ॥ हारोऽयं हरिणाक्षीणां लुठति स्तनमण्डले । मुक्तानामप्यवस्थेयं के वयं स्मरकिंकरा ॥ ३०४ ॥ मणिहारलता विभाति तन्व्याः स्तनसिंहासनसीम्नि तस्थिवांसम् । अभिषेक्तुमनङ्गदेवराजं गलशङ्खाद्गलितेव दुग्धधारा ॥ ३०५ ॥ ग्रीवाङ्कतेनाव दुशोभितापि प्रसाधिता माणवकेन सेयम् । आलिङ्ग्यता-

१ रत्यावाप्तप्रियस्य लाञ्छनं चिह्नं नखक्षताद्याकारादिरूपं येन तथाभूते, पक्षे,-रत्या आप्तं प्रियं कामस्तस्य लाञ्छनं मत्स्यस्तद्रूपे २ कठिनताया आवासे स्थानभूते पक्षे,-कठिनताया आवासे कूर्मे ३ रसेनालिङ्गिते, पक्षे,-रसया पृथिव्या समुद्धरणकाले आलिङ्गिते वराहे ४ प्रकृष्टाह्लादैकरसे तत्परे, पक्षे,-प्रह्लाद एको रस प्रीतिर्यस्य तस्मिन्नृसिंहे ५ क्रमादुदरादन्तकादिपरिमाणेनोपचिते प्रवृद्धे, पक्षे-क्रम पादविक्षेपस्तदनुसारेणोपचिते प्रवृद्धे वामने ६ भूभृतां पर्वतानां गुरुत्वमपहन्ति नाशयन्ति तादृशे स्तनोऽपि महत्त्वात्, पक्षे-भूभृतां राज्ञां गौरवनाशके भार्गवे ७ चक्रवाकस्पर्धिनि तत्सदृशत्वात्, पक्षे,-सीतावियोगातुरतया चक्रवाकशापद रामे ८ भोगं सुखं शरीरं तद्भाजि, पक्षे,-भोग फणा तद्भाजि शेषावतारे बलभद्रे ९ जनितानन्दने; पक्षे,-जनितमनङ्गमहस्य शरीरस्य विरुद्धं मौनमौनन्यायसमाधिप्रभृति येन तस्मिन्बुद्धे १० खेलि दर्पेषु लीला कामचार उन्मुखा सस्मिते तादृशे, पक्षे-पातीनवमस्य बल्यां चतुर्मुखे कल्किनीति ११ विष्णो- १२ अलज, पक्षे,-गज-

मध्यवलम्बमाना मुग्धतामागश्चिलोध्वकाया ॥ ३०६ ॥ स्तनातटे चन्दनपङ्किलेऽस्या जातस्य यावधुनमानसानाम् । हारावलीरत्नमयूखधाराकारा स्फुरन्ति स्खलनस्य रेखा ॥ ३०७ ॥ निबिडानुपक्तकुचकोकदम्पती मुक्ततारकापरिवृढेन शासितुम् । भ्रमतारिवैर निजतारकावली हरिणीदृशः स्फुरति हारवल्लरी ॥ ३०८ ॥ एकावलीकलितमौक्तिकरत्नवेन तन्व्याः समुन्नतपयोधरयुग्मसेनाम् । चक्रुर्मनांसि यमिनां मतिनिर्मलानि कन्दर्पमुक्तशरपातकृतान्तराणि ॥ ३०९ ॥ सारङ्गाक्ष्या कुचकलशयोरन्तराकाशदेशं ग्रासच्छेद क्वचिदपि चलन्प्रस्खलन्निपपात । नाभीकूपं समजनि नतस्तस्य देहच्युतासौ नक्षत्राणां ततिरिव समालम्बते हारशोभाम् ॥ ३१० ॥ मुक्तावली स्मरविदाहविपाण्डुमूले नद्धा चकास्ति सितकम्बुनि कण्ठकाण्डे । निश्चिन्वती मृगदृशो वदन मृगाङ्कं नक्षत्रपङ्क्तिरिव संपतिता नभस्तः ॥ ३११ ॥

मध्यदेश

युक्त मध्ये कृशा तन्वी कार्मुकीकरणाय यत् । अनेन कुसुमास्त्रेण पीड्यते क्लिष्टमुष्टिना ॥ ३१२ ॥ स्तनौ मार्गणव्यग्रौ काञ्ची कलकलोन्मुखी । कस्या दिशि न मध्यस्य तस्याः कार्श्यं सहेतुकम् ॥ ३१३ ॥ मध्य तव सरोजाक्षि पयोधरभरार्दितम् । अस्ति नास्तीति संदेह कस्य चित्ते न भासते ॥ ३१४ ॥ स्मरमानसिकसमस्या सात्त्विनिमा निरवधिर्मध्य । धीरेव पूरयति या न गिरा देवी न चापि गुरुरस्याः ॥ ३१५ ॥ असि प्रकृतिमनोज्ञे लभा प्रायेण मासयी दृष्टि । सुन्दरि यतो भवत्या प्रतिक्षण क्षीयते मध्य ॥ ३१६ ॥ वय प्रकर्षादुपचीयमानस्तनद्वयस्योद्वहनश्रमेण । अत्यन्तकार्श्यं वनजायताक्ष्या मध्यो जगामेति ममैष तर्कः ॥ ३१७ ॥ बद्ध्वा ह्रियोमा त्रिवली गुणेन गृह्णाति रोमावलिनेत्रवल्लीम् । इतीव चिन्ताकुलभङ्गुरोऽस्य मध्यो मृगाक्ष्याः कृशतामुपैति ॥ ३१८ ॥ काञ्चीगुणैर्विरचिता जघनेषु लक्ष्मीर्लब्धा स्थितिं स्तनतटेषु च रत्नहारैः । नो भूषिता वयमितीव नितम्बिनीनां कार्श्यं निरर्गलमधार्यत मध्यभागे ॥ ३१९ ॥ स्फुटमसदवलग्नं तन्वि निश्चिन्वते ते तदनुपलभमानास्तर्कयन्तोऽपि लोका । कुचगिरिवरयुग्मं यद्विनाधारमास्ते तदिह मकरकेतोरिन्द्रजाल प्रतीम ॥ ३२० ॥ तुङ्गाभोगे स्तनगिरियुगे प्रौढबिम्बे नितम्बे सीमादेशं हरति नृपतौ यौवने जृम्भमाणे । मध्यो भीरुः क्वचिदपि ययौ पद्मपत्रेक्षणायाः शून्य मध्यस्थलमिति जन किंवदन्तीं वदन्ति ॥ ३२१ ॥ देहं हेमद्युति परिहृताम्भोजदृष्टिं च दृष्टिं राशीभूतभ्रमरपटलीचारुवेषं च केशम् ।

१ पुष्पमाणः २ मध्यम्

दृष्ट्वा सद्यो विपुलहृदयानन्दमूढेन धात्रा सारङ्गाक्ष्या विभु रचयितु विस्मृतो मध्यदेश ॥ ३२२ ॥ आक्रान्ते शैशवेऽस्मिन्नभिनवयसा शामनाम्नीनकेतोर्बालाया नेत्रयुग्म श्रुतियुगमविशङ्क्य युगेनापि सार्धम् । वक्षोजद्वन्द्वमुच्चैरहिरिह निरगाच्छ्रोणिबिम्बेन साकं मध्य सगृह्य बद्धस्थितिभिरमित कार्श्यमङ्गीकरोति ॥ ३२३ ॥

नाभि॰

मन्ये समासलावण्ये सारसर्गे मृगीदृशः । अपूरयित्वेव गतो नाभिरन्ध्र चतुर्मुखः ॥ ३२४ ॥ कुचकुम्भौ समालम्ब्य तरन्ती कान्तिनिम्नगाम् । श्रमान्वितस्ततो दृष्ट्वा दृष्टिर्नाभौ निमज्जति ॥३२५॥ स्तनौ तुङ्गौ समारूढे चापन्य स्तभरे स्मरे । कोदण्डाटनिमुद्रेव जाता नाभी नतभ्रुव ॥३२६॥ उरोजचक्रमनोज्ञरूपा केशावलीव भ्रमराजिता या । सगीतघत्तसुटभेदहृद्या विधेय नाभीसरसी मृगाक्ष्या ॥ ३२७ ॥

वलित्रयम्

एकमेव वलिं बध्वा जगाम हरिरुन्नतिम् । तन्व्यास्त्रिवलिबन्धेऽपि सैव मध्यस्य नम्रता ॥ ३२८ ॥ स्तनभाराय मध्येन त्रिवलिव्याजत कृता । तस्या शङ्कितभङ्गेन भूमङ्गानामिवावलि ॥ ३२९ ॥ तदीयत्रिवलीमार्गसोपानारोहणश्रम । अलङ्घ्यत्वादनङ्गस्य जातो रत्येकगोचर ॥ ३३० ॥ परिहृत्य दुरारोह तस्या स्तनतट कृता । कन्दर्परथसचारमार्गालीव वलित्रयी ॥ ३३१ ॥ दरिद्रमुदर दृष्ट्वा चक्रे लावण्यपूर्णयो । पश्चात्र स्तनयोस्तस्यास्त्रिवलीविषम विधि ॥ ३३२ ॥ राजति त्रिवली तस्या स्तनभारोन्नतिक्रमात् । उपर्युपरि जातेव हारमुद्रापरम्परा ॥ ३३३ ॥ मध्यत्रिवलीत्रिपथे पीवरकुचचत्वरे च चपलदृशाम् । छल्यति मदनपिशाच पुरुष हि मनागपि स्खलितम् ॥३३४॥ मध्येन सा वेदिविलग्नमध्या वलित्रय चारु बभार बाला । आरोहणार्थं नवयौवनेन कामस्य सोपानमिव प्रयुक्तम् ॥३३५॥ अनन्यसाधारणकान्तिकान्ततनोरमुष्या त्रिभु मध्यदेश । जगत्त्रयीजन्मभृतां निषण्णा चित्रावलीव त्रिवलीमिषेण ॥३३६॥ मध्यात्समानीय सुसारभाग वक्षोजमुत्पादयिता विधाता । अतिश्रयत्राग्नित्रिवलीमिषेण सोपानवर्त्मत्रितय चकार ॥३३७॥ मत्वा चाप शशिमुखि निज मुष्टिना पुष्पधन्वा तन्वीमेना तव तनुलता मध्यदेशे बभार । यस्मादत्र त्रिभुवनवशीकारमुद्रानुकारास्त्रिस्रो भान्ति त्रिवलिकपटादङ्गुलीसधिरेखा ॥३३८॥

रोमावली

नाभिरन्ध्र प्रविष्टाभ्या श्यामला रोमवल्लरी । ग्रस्ता तिमिरलेखेव मेखलामणिकान्तित ॥ ३३९ ॥ भाति रोमावली तस्या पयोधरभरोन्नतौ । जाता स्तवालकेव श्रोणिवैदूर्यभूमित ॥ ३४० ॥ नाभिसङ्गेन गौराङ्ग्या शोभते रोममञ्जरी । कन्दर्पहेमकटकालाक्षाधारेव निर्गता ॥ ३४१ ॥ नाभीवलयसबद्धा रोमाली भाति सुभ्रुव । सहिता निगडेनेव शृङ्खला स्मरदन्तिन ॥ ३४२ ॥ रोमावली विलासिन्या प्रविष्टा नाभिमण्डलम् । नियद्गाम्भीर्यमत्रेति तात्पर्यमिव बिभ्रति ॥ ३४३ ॥ लिखन्त्या कामसाम्राज्यशासन यौवनश्रिय । गलितेव मषीधारा रोमाली नाभिगोलकात् ॥३४४॥ जाने रात्रिपु तन्मध्ये ददाति शनकै पदम् । गम्भीरनाभिकुहरप्रवेशाशङ्कया स्मर ॥ ३४५ ॥ कुचदुर्गराजधान्योर्मध्येमार्गे मृगीदृशो मदन । किमकृत नाभीवापीमपि रोमालीतमालवनरेखाम् ॥ ३४६ ॥ वयसी शिशुतातदुत्तरे सुदृशि स्वाभिविर्धिं विधित्सुनी । विधिनापि न रोमरेखया कृतसीम्नि प्रविभज्य रज्यत ॥ ३४७ ॥ तन्व्या प्रविष्टा नतनाभिरन्ध्र रराज तन्वी नवरोमराजि । नीवीमतिक्रम्य सितेतरस्य तन्मेखलामध्यमणेरिवार्चि ॥ ३४८ ॥ गौरीव पत्या सुभगा कदाचित्कर्तीयमप्यर्धतनूसमस्ताम् । इतीव मध्ये निदधे विधाता रोमावलीमेचकसूत्रमस्या ॥ ३४९ ॥ रोमावलीरज्जुसुरोजकुम्भौ गम्भीरमासाद्य च नाभिकूपम् । मद्दृष्टितृष्णा विरमेद्यदि स्याच्चैषा वतैषा सिचयेन गुप्ति ॥ ३५० ॥ उन्मूलितालानविलाभनाभिश्छिन्नस्खलच्छृङ्खलरोमदामा । मत्तस्य सेय मदनद्विपस्य प्रस्थापनप्रोषकुचास्तु वास्तु ॥ ३५१ ॥ रोमावलिब्रूकुसुमैः समौर्वीचापेषुभिर्मध्यललाटमूर्ध्नि । व्यस्तैरपि स्यात्त्रिभिरेतदीयैर्जेत्र स चित्र रतिजानिवीर ॥ ३५२ ॥ गभीरनाभीहृदसन्निधाने रराज तन्वी नवरोमराजि । मुखेन्दुभीतस्तनचक्रवाकद्वन्द्वोज्झिता शैवलमञ्जरीव ॥ ३५३ ॥ स्वर्णावदातपुतिकायकाण्डे सपूर्णपीयूषमयूखसुख्य । एणीदृश पृष्ठविलम्बिवेणीनिभ्व पुरो राजति रोमराजी ॥ ३५४ ॥ पयोधरस्तावदय समुन्नतो रसस्य वृष्टि सविधे भविष्यति । अत समुद्गच्छति नाभिरन्ध्रतो विधारि रोमालिपिपीलिकावलि ॥ ३५५ ॥ गभीरनाभीहृदपार्श्ववर्तिनी विराजते लोमलती मृगीदृश । मुखारविन्दस्य रसाभिलाषिणी द्विरेफपङ्क्तिश्चलितेव नीरवा ॥ ३५६ ॥ समुदितकुचकुम्भमङ्गनाया हृदयमनङ्गमतङ्गजोऽधिरोहे । तदधिरुपदबन्धनाय रोमावलिरिह शृङ्खलिका विलोक्यते यत् ॥ ३५७ ॥ दत्त मया पदमिद नवयौवनाय त्व सत्वरं व्रज च शैशव साप येति । कामस्य हस्तलिखिताक्षरमालिकेव रोमावली विजयते जलजेक्षणाया ॥ ३५८ ॥ नाभीविला तरनिनिर्गतपन्नगीव सभ्राविता ... रमणाय । नाथामुदीक्ष्य ग... भ्रम

---

१ बलित्रामान देलम्, पशे,-वलिम्

१ रोमावलिरेव पिपीलिकावलि

मुद्वहन्ती गुमेव पीनकुचपर्वतयोरधस्तात् ॥ ३५९ ॥ अतिबहुतरलज्जाशृङ्खलाबद्धपादो मदननृपतिवाहो यौवनोन्मत्तहस्ती । प्रकटितकुचकुम्भो लोमराजीकरेण पिबति सरसि नाभीमण्डलाख्ये पयांसि ॥ ३६० ॥ रचयति सुवनेत्रक्षेत्रपीयूषवृष्टिं नवजलधररेखा रोमराजिच्छलेन । यदुदयति कलापिप्रक्रियेय तदुच्चै स्तनघनसमयोऽस्यामाविरस्तीति विद्म ॥ ३६१ ॥ अमुष्मिँल्लावण्यामृतसरसि नूनं मृगदृशः स्मरः शर्वप्लुष्टः पृथुजघनभागे निपतितः । यदङ्गाङ्गाराणां प्रशमपिशुना नाभिकुहरे शिखा धूमस्येयं परिणमति रोमावलिमिषात् ॥ ३६२ ॥ इयं सुधा चषकनकलतिका पङ्कजमुना निषिक्ता लावण्यामृतरसभरेणानुदिवसम् । अकस्माद्रोमालीमधुपपटलीह स्फुरति यत्तत शङ्के पुष्पोद्गममसमयमायातमधुना ॥ ३६३ ॥ हरक्रोधज्वालावलिभिरवलीढेन वपुषा गभीरे ते नाभीसरसि कृतझम्पो मनसिजः । समुत्तस्थौ तस्मादचलतनये धूमलतिका जनस्तां जानीते तव जननि रोमावलिरिति ॥ ३६४ ॥ निर्णेतव्यो मनसिजकलातन्त्रसिद्धान्तसारो जेतव्या च त्रिदशसुदृशामङ्गलावण्यलक्ष्मीः । रोमश्रेणीलिखनसुभगं पत्रमादर्शयन्ती पत्रालम्बं जगति कुरुते सुभ्रुवो यौवनश्रीः ॥ ३६५ ॥ उत्तुङ्गस्तनपर्वतादवतरद्गङ्गेव हारावली रोमाली नवनीलनीरजरुचि सेयं कलिन्दात्मजा । जातं तीर्थमिदं सुपुण्यजनकं यत्रानयोः सङ्गमश्चन्द्रो मज्जति लाञ्छनापहृतये नूनं नखाङ्कच्छलात् ॥ ३६६ ॥ उत्तुङ्गस्तनभार एष तरले नेत्रे चले भ्रूलते रागान्धेषु तदोष्ठपल्लवमिदं कुर्वन्तु नाम व्यथाम् । सौभाग्याक्षरपङ्क्तिरेव लिखिता पुष्पायुधेन स्वयं मध्यस्थापि करोति तापमधिकं रोमावली केन सा ॥ ३६७ ॥ यूनां धैर्यतृणाङ्कुरं कवलयन् व्रीडाम्बुपूरं पिबन् शृङ्गारो हरिणस्तव स्तनगिरेः सीमानमारोहति । नाभेः काचन तस्य निःसृतवती कस्तूरिकामालिका रोमश्रेणिमहोरसं वितनुते कल्याणि जानीमहे ॥ ३६८ ॥ सौन्दर्यस्य मनोमत्तेन गणनारेखा किमेषा कृता लावण्यस्य विलोमितु त्रिजगतामेषा किमुद्रीविका । आनन्दद्रुमकन्दली नयनयोः किं वा समुज्जृम्भते सुन्दर्यास्त्रिषु या स्वभावसुभगा रोमावलिर्मीलति ॥३६९॥

पृष्ठभाग

अस्या खलु ग्रथितनिबद्धकेशमल्लीकदम्बप्रतिबिम्बवेशात् । स्मरप्रशस्ती रजताक्षरेय पृष्ठस्थलीहाटकपट्टिकायाम् ॥३७०॥

नितम्ब

तन्नितम्बस्य निन्दन्ति वृद्धिं परिजनाङ्गनाः । काञ्चीनवनवप्रस्थप्रयाणेन कन्दर्पिणा ॥ ३७१ ॥ नितम्बबिम्बं बिम्बोष्ठी धत्ते कन्दर्पदोस्तम्भप्रशस्तिफलकोपमम् ॥ ३७२ ॥ विस्तारिणा मुहुस्तस्याः श्रोणीबिम्बेन पीडिता । त्रुटिता त्रुटितास्मीति पूत्करोतीव मेखला ॥ ३७३ ॥ आर्यासभुजायाम सखेदोऽस्याः सखीजनः । श्रोण्या कथंचित्कुरुते रशनादामबन्धनम् ॥ ३७४ ॥ नितम्बगौरवेणासौ गौराङ्गी खिद्यते दृढम् । हारयत्यपरिस्पन्दा कन्दुकक्रीडितेषु यत् ॥ ३७५ ॥ ◼ कथं न स्पृहणीयो विषयरतैस्तन्नितम्बविन्यासः । शान्तात्मनापि विहितं निःश्रेयसं जो गौरवं यत्र ॥ ३७६ ॥ पृथुवर्तुलतन्नितम्बकृन्मिहिरस्यन्दनशिल्पशिक्षया । विधिरेकचक्रचारिणं किमु निर्भर्त्सति मा मथ रथम् ॥ ३७७ ॥ चक्रेण विश्वं युधि मत्स्यकेतुः पितुर्जितं वीक्ष्य सुदर्शनेन । जगज्जिगीषत्यमुना नितम्बद्वयेन किं दुर्लभदर्शनेन ॥ ३७८ ॥ रोमावलीदण्डनितम्बचक्रे गुणं च लावण्यजलं च बाला । तारुण्यमूर्तेः कुचकुम्भकर्तुर्बिभर्ति शङ्के सहकारिचक्रम् ॥ ३७९ ॥

काञ्ची

बद्धा मणिमयकाञ्ची तस्याः परिणाहशालिनि नितम्बे । पङ्क्तिरिव सारसानां सुरसरितः पुलिनमण्डलाभोगे ॥ ३८० ॥ सख्या नितम्बादवरोपयन्ती पुनः पुनः केसरपुष्पकाञ्चीम् । न्यासीकृतां स्थानविदा स्मरेण द्वितीयमौर्वीमिव कार्मुकस्य ॥ ३८१ ॥

जघनम्

तस्याः पद्मपलाशाक्ष्यास्तन्व्यास्तज्जघनं घनम् । दृष्ट्वा सखीभिर्याभिस्ता पुम्भावं मनसा ययुः ॥ ३८२ ॥ अनङ्गरङ्गपीठोऽस्याः शृङ्गारस्वर्णविष्टरः । लावण्यसारसंघातः सा घना जघनस्थली ॥ ३८३ ॥ तदीयजघनाभोगगरिमा विस्मयास्पदम् । दूरपाती पृषत्कोऽभूद्येनानङ्गस्य साङ्गना ॥ ३८४ ॥ वपुरनुपमं नाभेरूर्ध्वं विधाय मृगीदृशो ललितललितैरङ्गन्यासैः पुरा रभसादिव । तदनु सहसा खिन्नेनेव प्रजापतिना भृशं पृथुलपृथुला स्थूलस्थूला कृता जघनस्थली ॥ ३८५ ॥

मदनमन्दिरम्

अङ्गेन केनापि विजेतुमस्या गवेष्यते किं चलपत्रपत्रम् । न चेद्विशेषादितरच्छदेभ्यस्तस्यास्तु कम्पस्तु कुतो भयेन ॥३८६॥ गौरसुघनतिताबराङ्गके रेजुरस्थिततनूरुहाङ्कुराः । तर्पणाय मदनस्य वेधसा स्वर्णशुक्तिनिहितास्तिला इव ॥३८७॥

ऊरू

मन्ये तदूरू सभाव्य हस्तिगर्वापहारिणौ । वहन्त्यस्पृश्यतां हेतोर्मातङ्गस्य मतङ्गजाः ॥ ३८८ ॥ लम्भिता कदलिस्तम्भास्तदूरुभ्यां पराभवम् । अत्यन्तमृदुभिस्ताभ्यो जडैः ४ जयडिण्डिमः ॥ ३८९ ॥ ऊरू कुरङ्गकदृशश्च

१ हृतोऽमथन २ यमुना ३ नखक्षतच्छलेन

१ प्रशान्तमनसा २ भङ्गणा ३ ललन्नगुन्दरे ४ मार्दवेन

ऽचेलाचलो भाति । सपताक कनकमयो विजय-स्तम्भ सारमेन ॥ ३९० ॥ तरुमूरुयुगेण सुन्दरी निमु रम्भा परिणाहिना परम् । तरुणीमपि जिष्णुरेन ता धनदात्मजतप फलस्तनीम् ॥ ३९१ ॥ रम्भापि किं चिह्नयति प्रकाण्ड न चात्मन स्वेन न चैतदूरू । सम्येन येनोपरि सा ददाना पदानि जागर्त्यनयोर्भ्रमेण ॥ ३९२ ॥ विधाय मूर्धानमधश्चर भ्रेमुखेत्तपोभि स्वममारभारम् । जाड्य च नाथे कदली बलीयस्तदा यदि स्यादिदमूरुचारु ॥ ३९३ ॥ ऊरुप्रकाण्डद्वितयेन तस्या कर पराजीयत वारणीय । मुक्त ह्रिया कुण्डलनच्छलेन गोपायति स्व मुखपुष्कर स ॥ ३९४ ॥ अस्या मुनीनामपि मोदमूहे भृगु र्महान् यदुचथोलशीली । नानारदादादि सुख श्रितोरुर्व्यासो महाभारतसर्गयोग्य ॥ ३९५ ॥ पश्यन्हतो मन्मथबाणपातै शक्तो निधातु न निमीलन चक्षु । ऊरू निधाना हि कथ कृती तो निर्यासनल्या सुमतेर्निर्तवं ॥३९६॥ नागेन्द्रहस्तास्त्वचि कर्कशत्वादैकान्तशैत्यात्कदलीविशेषा । लब्धापि लोके परिणाहि रूप जातास्तदूर्वोरुपमानबाह्या ॥ ३९७ ॥ कदली कदली करभ करभ करिराजकर करिराजकर । भुवनत्रितयेऽपि बिभर्ति तुलामिदमूरुयुग न चमूरुदृश ॥ ३९८ ॥

जङ्घे

जङ्घे तदीये सताप यज्जनस्यानुरागिण । जनयाचक्रतु स्तीव्र तन्न हेतुर्विलोमता ॥ ३९९ ॥ हेममञ्जीरमालाभ्या भाति जङ्घालताद्वयम् । लावण्याय कृतास्थान कुङ्कुमेनेव सुभ्रुव ॥ ४०० ॥ वृत्तानुपूर्वे च न चातिदीर्घे जङ्घे शुभे सृष्टवतस्तदीये । शेषाङ्गनिर्माणविधौ विधातुर्लावण्य उत्पाद इवास यत्न ॥ ४०१ ॥ क्रमोद्गता पीनरताधिजङ्घ वृक्षाधिरूढ विदुषी क्रिमस्या । अपि भ्रमीभङ्गिभिरावृताङ्ग वासो लतावेष्टितकप्रवीणम् ॥ ४०२ ॥

चरणौ

अमूल्यस्य मम स्वर्णतुलाकोटिद्वय स्थित् । इति कोपादिवाताम्र पादयुग्म मृगीदृश ॥ ४०३ ॥ जाग्रत कमललक्ष्मीं यज्जग्राह तदद्भुतम् । पादद्वन्द्वस्य मत्तेभगतिसेवे तु या स्तुति ॥ ४०४ ॥ स्तनभारोऽत्र वर्ते दु षत्क्रियावरण मम । इति तत्पादयोर्भाभा वेद्मि प्राङ्गणपद्मिनी ॥ ४०५ ॥ अलपूर्वस्य रागस्य पूर्णपशाय पल्लवा । पद्मानि पादयुग्मस्य प्रत्युदाहरणानि च ॥ ४०६ ॥ दृश्यते मानसौकसा राजहसा क्वचिदपि । गतौ चरणयोस्तस्या प्रश्यते यावदन्तरम् ॥ ४०७ ॥ नितम्बपीड्यमानेन पादयुग्मेन सुभ्रुव । कृता भ्रुकुटिभङ्गीव नीलनूपुरमाल्या ॥ ४०८ ॥ चरणरमन्न तदीय लाक्षावातातपेन सन्तप्तिम् । अभ्यास मृङ्गमालानलिभिर्मणिराचितनूपुरव्याजात् ॥ ४०९ ॥ अभनुरण मणिमेखलमविरलसिञ्जानमञ्जुमञ्जीरम् । परिसरणमरुणचरणे रणरणकमकारण कुरुते ॥ ४१० ॥ दशकेरवबान्धवा दधानौ जडससर्गविमुक्तिसारधानौ । चरणौ नलिनेन तोलयत कथमस्या कथयो न यान्ति लज्जाम् ॥ ४११ ॥ अभ्युन्नताङ्गुष्ठनखप्रभाभिर्निक्षेपणाद्रागमिवोद्गिरन्तौ । आजह्रतुस्तच्चरणौ पृथिव्या स्थलारविन्दश्रियमव्यवस्थाम् ॥ ४१२ ॥ अस्या पदौ चारुतया महान्तावपेक्ष्य सौकुम्याल्लवभावमाज । जाता प्रवालस्य महीरुहाणा जानीमहे पल्लवशब्दलब्धि ॥ ४१३ ॥ जगद्वधूमूर्धसु रूपदर्पाद्धेतयाधायि पदारविन्दम् । तत्सान्द्रसिन्दूरपरागरागैर्ध्रुव प्रगाल्प्रबलारुण तत् ॥ ४१४ ॥ यानेन तन्व्या जितदन्तिनाथौ पदाब्जराजौ परिशुद्धपार्ष्णी । जाने न शुश्रूषयितु स्वमिच्छू नतेन मूर्ध्ना कतरस्य राज ॥ ४१५ ॥ प्रियासखीभूतनतो मुदेद व्यधाद्विधि साधुदशत्वमिन्दो । एतत्पदच्छद्मसरागपद्मसौभाग्यभाग्य कथमन्यथा स्यात् ॥ ४१६ ॥

गुल्फौ

अरुन्धतीकामपुरभिल्लक्ष्मीजम्भद्विपद्वारनताम्बिकानाम् । चतुर्दशीय तदिहोचितैव गुल्फद्वयाख्या यदद्वयसिद्धि ॥ ४१७ ॥

पादाङ्गुल्य

एष्यन्ति यावद्गणनाद्दिगन्ताश्रूपा सरात्तीं शरणे प्रवेष्टुम् । इमे पदाब्जे विधिनापि सृष्टास्तावत्य एवाङ्गुलयोऽत्र रेखा ॥ ४१८ ॥

नखा

तस्या पादनखश्रेणी शोभते किल सुभ्रुव । रत्नावलीव लावण्यरत्नाकरसमुद्गता ॥ ४१९ ॥ तत्पादनखरत्नाना यदलक्तकमार्जनम् । इद श्रीखण्डलेपेन पाण्डुरीकरण विधो ॥ ४२० ॥ तद्वक्त्रेन्दुपद्म प्रकटितमसकृत्स्पर्धित यन्मयैत ज्ञात तस्मात्कृतान्त ग्रहणमपि ततो जायमान कलङ्क । तत्सर्वे क्षम्यता मे पुनरपि न करोम्येवमुक्त्वा तु तस्या गाढ लग्न शशाङ्कश्चरणनखमणिच्छद्मना पादयुग्मम् ॥ ४२१ ॥

गमनम्

सलीलमियमायाती कामिनी गजगामिनी । उन्नत हि नमज्ज्योति पुष्पैर्भुरमिवाचति ॥ ४२२ ॥ मारयन्त्या जन सर्व निरागसमिवापया । मातङ्गाना गतिर्यास्ता-दगासीदसशयम् ॥ ४२३ ॥ मा राजहसैरिव सनताङ्गी गतेषु लीलाचितविभ्रमेषु । व्यनीयत प्रत्युपदेशलुब्धैरादित्सुभिर्नूपुरसिञ्जितानि ॥ ४२४ ॥ गुरुतरकलनूपुरानुनाद सललितनर्तितवामपादपद्मा । इतरदनतिलोलमादधाना पदमथ मन्मथमन्थरे जगाम ॥ ४२५ ॥

जृम्भा

चक्रीकृतभुजलतिन वक्रीकृतवक्त्रसुषमहीनम् । नो हरति कस्य हृदय हरिणदृशो जृम्भणारम्भ ॥ ४२६ ॥

१ गुल्फा २ नियमेन ३ गुल्फाख्य विशेषितायामस्य गुल्फकोटिद्वयम्, पक्षे-पादाङ्गद्वयम्

आस्येन्दो परिवेषमद्रतिपतेश्चापेयकोदण्डवद्धम्मिल्लाम्बुमुच, क्षणद्युतिरिदासज्जो क्षिपती भुजौ । विश्लिष्यद्बलि लक्ष्यनाभि विगलन्नीव्युन्नमन्मध्यम किंचित्किंचिदुदञ्चदञ्चलमहो कुम्भस्तनी जृम्भते ॥ ४२७ ॥

निद्रा

सार्धस्नानथकपद श्रुवती मन्थराक्षरम् । निद्रार्धमीलिताक्षी सा लिखितेवास्ति मे हृदि ॥ ४२८ ॥ उत्तानामुपधाय बाहुलतिकामेकामपाङ्गश्रितामन्यामप्यलसा निधाय विपुलामोगे नितम्बस्थले । नीवीं किंचिदिव श्लथा विदधती निःश्वासलोलालका तल्पोत्पीडनतिर्यगुन्नतकुचा निद्राति शातोदरी ॥ ४२९ ॥ आमीलन्नवनीलनीरजतुलामालम्बते लोचनं शैथिल्यं नवमल्लिकासहचरैरङ्गैरपि स्वीकृतम् । आलापादधरं स्फुरत्कलयति प्रेङ्खत्कपालोपमामा नन्दप्रभवाश्च बाष्पकणिका मुक्ताश्रिय बिभ्रति ॥ ४३० ॥

कान्ति

सुन्दरी सा भवत्येव विवेकः केन जायते । प्रभामात्रं हि तरलं दृश्यते नान्न नाश्रयः ॥ ४३१ ॥ अवयवेषु परस्परबिम्बितेष्वतुलकान्तिषु राजति यत्तनो । अयमयं प्रविभाग इति स्फुटं जगति निश्चिनुते चतुरोऽपि क ॥ ४३२ ॥

---

समग्रस्त्रीस्वरूपवर्णनम्

सा दृष्टा यैर्न वा दृष्टा मुषिता सममेव ते । हृदयं हृतमेकेषामन्येषा चक्षुषो फलम् ॥ १ ॥ मुखेन चन्द्रकान्तेन महानीलैः शिरोरुहैः । पादाभ्यां पद्मरागाभ्या रेजे रत्नमयीव सा ॥ २ ॥ गुरुणा स्तनभारेण मुखचन्द्रेण भास्वता । शनैश्चराभ्यां पादाभ्यां रेजे ग्रहमयीव सा ॥ ३ ॥ फलायते कुचद्वन्द्वमिव हेमलतायते । अङ्गानि कुसुमायन्ते मनो मे भ्रमरायते ॥ ४ ॥ वक्त्रे गुरुत्वं यदि ते छन्दःशास्त्रविदो विदुः । कठिने कुचयुग्मेऽस्या वदता किं नु हीयते ॥ ५ ॥ विकसन्नेत्रनीलाब्जे तथा तन्व्या स्तनद्वयी । तव दत्तां सदा मोदं लसत्तरलहारिणी ॥ ६ ॥ दन्तप्रभापुष्पचिता पाणिपल्लवशोभिनी । केशपाशालिवृन्देन सुवेषा हरिणेक्षणा ॥ ७ ॥ अरूपा नितम्बभागे क्षामा मध्ये समुन्नता कुचयोः । अत्यायतं नयनयोर्मम जीवितमेतदायाति ॥ ८ ॥ अव्याजसुन्दरीं तां विज्ञानेनाद्भुतेन योजयता । उपकल्पितो विधात्रा बाणः कामस्य विषदिग्धः ॥ ९ ॥ आगेन्य चिकुरनिकरं सततं सुमनोभिरासयोस्य ते । कामो निषनिषण्ण परितूल पञ्चकर्णं साङ्गं ॥ १० ॥ आयाति चिकुरभूरिव पदयति हरिणीरः चमति इतीन । स्फुरति तडिल्लिनिकेर मदते तुहिनांशुरेखेव ॥ ११ ॥ वर्णोपचमहीन कृष्णा नेत्रान्तमवरम्य तम् । कुचमध्या सीवुर्नं पुरुषो लीला वहत्यहो शमो ॥ १२ ॥ अङ्गभूषणनिकरो भूषयतीत्येष लौकिको वादः । अङ्गानि भूषणानामपि भूषमामजीजनत्तस्याः ॥ १३ ॥ सौरभमम्भोरुहवन्मुखस्य कुम्भाविव स्तनौ पीनौ । हृदयं मदयति वदनं तव शरदिन्दुर्यथा बाले ॥ १४ ॥ मधुरं सुधावदधरं पल्लवतुल्योऽतिपेलवः पाणि । चकितमृगलोचनाभ्यां सदृशी चपले च लोचने तस्याः ॥ १५ ॥ कलयति कुवलयमालाललितं कुटिलः कटाक्षविक्षेपः । अधरः किसलयलीलामाननमस्याः कलानिधिविलासम् ॥ १६ ॥ तरणिमणिः कलयति कलामनुमदनधनुर्भ्रुवो पठत्यग्रे । अधिवसति सकलललनामौलिमियं चकितहरिणचलनयना ॥ १७ ॥ नयनयुगासेचनकं मानसवृत्त्यापि दुष्प्रापम् । रूपमिदं मदिराक्ष्या मदयति हृदयं दुनोत्यपि च ॥ १८ ॥ सन्यस्तभूषापि मनैव नित्यं विनापि हारं हसतीव कान्त्या । मदं विनापि स्खलतीव भावैर्वाचं विना व्याहरतीव दृष्ट्या ॥ १९ ॥ भ्रूयुग्ममुखैर्धनुरुज्झितज्यं बाणाः कटाक्षाः कुटिला नितान्तम् । तथापि यूनां हृदयं भिनत्ति कोऽयं विलासो वनिताजनस्य ॥ २० ॥ अलीकरूपो यदि मध्यभागः पयोधराकारभृतश्च केशाः । उत्सङ्गशोभापि सरोरुहाक्ष्याः करस्य शोभां कलयेन्न कस्मात् ॥ २१ ॥ सर्वोपमाद्रव्यसमुच्चयेन यथाप्रदेशं विनिवेशितेन । सा निर्मिता विश्वसृजा प्रयत्नाद्देवस्वसौन्दर्यदिदृक्षयेव ॥ २२ ॥ प्रत्यङ्गमस्याभिकेन रक्षां कर्तुं मघोनेव निजायमस्ति । वज्रं च भूषामणिमूर्तिधारि नियोजितं तद्युतिकार्मुकं च ॥ २३ ॥ भ्रूश्चिन रेखा च तिलोत्तमाभ्या नासा च रम्भा च यदूरुसृष्टिः । दृष्टा ततः पूरयतीयमेकानेकाप्सरःप्रेक्षणकौतुकानि ॥ २४ ॥ वर्णाक्षिदन्तच्छदबाहुपाणिपदादिनः स्वाखिलतुल्यहेतुः । उद्वेगभागद्वयताभिमानादिहैव वेधा व्यधित द्वितीयम् ॥ २५ ॥ यत्र पदाङ्कुष्ठनखो मुखं च बिभर्ति पूर्णेन्दुचतुष्टयं या । कलाचतुष्परिरूपैति वासं तस्याः कथं सुभ्रुणि नाम नासाम् ॥ २६ ॥ कार्त्स्न्येन निर्वर्णयितुं च रूपमिच्छन्ति तत्पूर्वसमागतानाम् । न तु प्रियेष्वायतलोचनानां समग्रपातीनि विलोचनानि ॥ २७ ॥ यतो यतोऽङ्गादपयाति कञ्चुकस्ततस्ततः स्वर्णमरीचिवीचयः । यतो यतोऽस्या निपतन्ति दृष्टयस्ततस्ततः श्यामसरोजवृष्टयः ॥ २८ ॥ तदा तदङ्गस्य बिभर्ति विभ्रमं विलेपनामोदमुचः स्फुरद्रुचः । दरस्फुरत्काञ्चनकेतकीदलात्सुवर्णमभ्यस्यति सौरभं यदि ॥ २९ ॥ अधरे मधुरा सरसनीयं ननु वर्णं मणिदर्पणं(?) वहन् । शिरसि प्रतिभाति चारुवेणी कथमेणीनयना न

---

१ हरिणनयना

हरहस्तगृहीतकास्यतालद्वयेन समलक्ष्यत नाकलक्ष्मी ॥४९॥ यातोऽस्मि पद्मनयने समयो ममैष सुप्ता मयैव भवती प्रतिबोधनीया । प्रेत्यायनामयमितीव सरोरुहिण्या सूर्योऽस्तमस्तकनिविष्टकर करोति ॥ ५० ॥ कृत्वा प्रबुद्धकमलामखिला त्रिलोकीमम्भोनिधेर्विशति गर्भमसाविदानीम् । अन्त प्रसुप्तहरिनाभिसरोजबोधकौतूहलीव भगवानरविन्द-बन्धु ॥ ५१ ॥ पूर्वा क्षणव्यमनिरस्तसमस्तरागा हित्वा निजान्तिकमुपेत्य रवौ सरागे । आलोकत पुनरमुष्य धृतप्रसादा जाता चिरेण चरमा परमानुरक्ता ॥ ५२ ॥ स्पृष्टो छसत्किरणकेसरसूर्यबिम्बविस्तीर्णकर्णिकमथो दिवसारविन्दम् । श्लिष्टाष्टदिग्दलकलापमुपानतारवद्धान्धकारमधुपावलि सचुकोच ॥ ५३ ॥ पृथु गगनकबन्धस्कन्धचक्र निभेत निभु रुधिरकपाल कालकापालिकस्य । कललभरितमन्त किं नु तार्क्ष्याण्डखण्ड प्रजनयति वितर्क साध्यमर्कस्य बिम्बम् ॥ ५४ ॥ अयमपि खरयोषित्कुणकापायमीषद्विस्मरतिमिरोर्णाजर्जरोपान्तमर्चि. । मदकलकलविङ्कीकाकुनान्दीकरेभ्य क्षितिरुहशिखरेभ्यो भानुमानुच्चिनोति ॥ ५५ ॥ गतवति दिननाथे पश्चिमक्ष्माधरान्त शिशिरकरमयूखैर्निर्भर दह्यमाना । परिहृतमिलितालि पान्थकान्तेव दीना सपदि कमलिनीय ह्रासहीना बभूव ॥ ५६ ॥ उदयगिरितटस्थ पद्मिनीर्बोधयित्वा मृदुतरकिरणाग्रेस्ता स्वय चोपभुज्य । मलिनमधुपसङ्घातासु सजातकोप कृतरुधिरविरोचिर्भानुरस्त प्रयात ॥ ५७ ॥ अयमपि पुरुहूतप्रेयसीमूर्ध्नि पूर्ण कलश इव सुधांशु साधुरुल्लालसीति । मदनविजययानाकालविज्ञापनाय स्फुरति जलधिमध्ये ताम्रपात्रीव भानु ॥ ५८ ॥ रवेरस्त तेज प्रमुदयति खद्योतपटली मरालाली मूका कलकल परोलूकपटली । इद कष्ट दृष्ट्वा चिरमसहमाना कमलिनी भ्रमद्भृङ्गव्याजात्कवलयति हालाहलमिव ॥ ५९ ॥ सैरन्ध्री करकृष्टकङ्कणमरन्ध्रीरध्वनि सचरद्दूतीसूचितसन्धिविग्रहविधि सोल्लाससलीलाधर । धारस्त्रीजनसज्जमानशयन सनद्धपुष्पा युध श्रीरामचन्द्रधौतसौधशिखरो रम्य क्षणो वर्तते ॥६०॥ विश्लेषोत्कुलचक्रवाकमिथुनैरुत्पक्षमाक्रन्दित कारण्यादिव मीलितासु नलिनीष्वस्त च मित्रे गते । शोकेनेव दिगङ्गनाभिरभित श्यामायमानैर्मुखैर्निश्वासानिलधूमरातय इवो द्दीणाहासोराजय ॥ ६१ ॥ निर्यद्वासरजीवपिण्डकरणि बिभ्रत्करोष्णी करैर्मांजिष्ठ रविबिम्बमम्बरतटादस्ताचल चुम्बति । किं च लोकतम कल्पकल्पनाद्यायामायमान मना-

ग्धूमश्यामपुराणचित्ररचनारूप जगज्जायते ॥ ६२ ॥ सन्ध्याताण्डवचण्डदण्डपरशुप्रारब्धमीमभ्रमीवेगस्रस्तकपर्दवासुकिफणामाणिक्यशङ्कामहम् । मम पायसि पश्चिमस्य जलधेर्मार्तण्डबिम्ब ततो घ्रातैर्भूतगणैरगाहि भुवन मन्ये तदवेमिमि ॥ ६३ ॥ पाश्चात्याम्बुधिदृष्टपूर्वनडवासदर्शनोत्कण्ठया धावद्व्यस्तुरगतिखुरखुरक्षुण्णोऽस्तशैलस्थले । तस्मादुच्चलितेन धातुरजसा लिप्तानुरक्ताङ्गको मन्दांशु प्रियदर्शन खलु सहस्रांशुर्दरीदृश्यते ॥ ६४ ॥ तत्रोदोऽन्तरसततापतमस निर्भिद्य तिग्मांशुभि सत्रेतु वलिमद्य ग कृतमतिर्भानुर्जगाहेऽम्बुधिम् । अयत्सपति सनिपत्य वृणुते लोके तमोमण्डल किं चैतस्य नयत्यहो परिभव पाथोजिनीं वल्लभाम् ॥ ६५ ॥ द्रागेन्द्रीमनुबुम्ब्य सस्मितमुखीमामोदिनीं पद्मिनीं कृत्वासौ परिरम्भसभ्रमपरिश्रान्ता च वारस्त्रियम् । सरक्तो हिमभानुरथ चरमा क्षिप्यत्यहो रागिणीं काश्मीरोपलसत्पयोधरभरा कान्ता दिश वारुणीम् ॥ ६६ ॥ ध्माता मालतला नलै कमलिता कण्ठोरथहालाहलैरालीढाथ जटाटवीनलयितैर्यशीविषाणा गणै । कीर्णा भस्मभिराहृतास्थिपटलैर्विद्धा जटाभैरपि स्वीयामुज्झति माधुरीं हरशिरोरत्न निमिन्दो कला ॥ ६७ ॥ आवासोत्सुकपक्षिण कुरुत कामन्ति वृक्षालयान्कान्ता भाविवियोगभीरुरधिक क्रन्दत्यय कातर । चक्राह्वो मधुपा सरोजगहन धावत्युलूको मुद धत्ते चारुणता गतो रविरसावस्ताचल चुम्बति ॥ ६८ ॥ अध्वान नैकचक्र प्रभवति भुवनभ्रान्तिदीर्घं विलङ्घ्य प्रात प्राप्तु रथो मे पुनरिति मनसि न्यस्तचिन्तातिभार । सन्ध्याकृष्टावशिष्टस्वकरपरिकरै स्पष्टहेमारपङ्क्ति व्याकृष्यावस्थितोऽस्तक्षितिभृति नयतीवैष दिक्चक्रकर्मा ॥ ६९ ॥ प्राचीमालम्बमाने घन तिमिरचये बान्धवे बन्धकीना सप्राप्ते च प्रतीचीं शशिकरनिकरे वैरिणि स्वैरिणीनाम् । अर्धश्यामोपलार्धस्फटिकमिव दिशामन्तराल विधत्ते कालिन्दीजह्नुकन्यामिलदमलजलप्रत्यसदोहमैत्रीम् ॥ ७० ॥ सन्ध्यावध्यस्रशोण तनुदहनचिताङ्गारमर्दार्कबिम्ब तारानाराश्यिकीर्णं विशदनरकरङ्कायमाणो कलेन्दु । दृप्यत्प्रक्रव्यादौघ घनतिमिरमहाधूमधूम्रानुकार जात लीलाश्मशान जगदखिलमहो कालकापालिकस्य ॥७१॥ गाढ प्रौढाङ्गनाभि सुरतरतमन समरोत्सारिताक्ष मुग्धाभि सस्नेहेन रतिसमरभय वितयन्तीभिरेवम् । पान्थानामङ्गनाभि ससलिलनयन शून्यचित्ताभिरेष कष्ट दृष्टोऽन्धकारे मृत्युसमजदय मण्डलश्चण्डरश्मे ॥ ७२ ॥ व्योमस्थानि छ

१ विघासोल्लासदाम् २ कलानिधा ३ वराह ४ दिवमरुणमरविन्दम् ५ मराशाभावेन परस्पर मिलिता ६ असितरक्तकलेवरम् ७ काल इव कापालिको भिक्षु ८ गरुड ९ वियोगकुल

१ सन्ध्यायां कृष्ण वर्तते हलासेविभीतो व सकरानां परिकर समूहस्तदा स्पष्ट हेममिनि भानामारपक्तिं पङ्क्तिर्यस्मिन् २ दिशां चक्र मण्डलम्, रथश्च

गुच्छावलिभिरिव तमोलहरीभिर्नीयन्ते पर्यन्ता प्रातवृत्त्या पयसि वसुमती नूतने मज्जतीव । वात्यासवेगविष्वग्वितनलयितस्फीतधूम्याप्रकाशं प्रारम्भेऽपि त्रियामा तरुणयति निज नीलिमान वनेषु ॥ ७३ ॥

## चक्रवाकावस्थाख्यानम्

रतिकेलिकलं कश्चिदेष मन्मथमन्थरं । पश्य सुभ्रु समाश्वस्तां कादम्बश्चुम्बति प्रियाम् ॥ १ ॥ दष्टतामरसकेसरत्यजो क्रन्दतोर्निपरिवृत्तकण्ठयोः । निघ्नयोः सरसि चक्रवाकयोरल्पमन्तरमनल्पतां गतम् ॥ २ ॥ आतपे धृतिमता सह वध्वा यामिनीविरहिणा विहगेन । सेहिरे न किरणा हिमरश्मेर्दुःखिते मनसि सर्वमसह्यम् ॥ ३ ॥ गम्यतामुपगते नयनानां लोहितायति सहस्रमरीचौ । आससाद विरहय्य धरित्रीं चक्रवाकहृदयान्यभितापः ॥ ४ ॥ इच्छता सह वधूभिरभेदं यामिनीविरहिणा विहगानाम् । आपुरेव मिथुनानि वियोगं लङ्घ्यते न खलु कालनियोगः ॥ ५ ॥ यच्छति प्रतिमुखं दयितायै वाचमन्तिकगतेऽपि शकुन्तौ । नीयते स्म नतिमुज्झितहर्षं पङ्कजं मुखमिवाम्बुरुहिण्या ॥ ६ ॥ आयाति याति पुनरेव जलं प्रयाति पद्माङ्कुरं च निचिनोति धुनोति पक्षम् । उन्मत्तवद्भ्रमति कूजति मुक्तकण्ठं कान्तावियोगविधुरो निशि चक्रवाकः ॥ ७ ॥ एकेनाक्ष्णा प्रविततरुषा वीक्षते व्योम्नि यान्तं बिम्बं भानोर्नयनजलवल्लुलितेनापरेण स्वरान्तम् । अह्नश्छेदे दयितविरहाशङ्किनी चक्रवाकी द्वौ सकीर्णौ रचयति रसौ नर्तकीव प्रगल्भा ॥ ८ ॥ वापीतोयतटरुहनवपद्मिनीपत्रशय्या चन्द्रालोको विकचकुसुमामोदहृद्यः समीरः । यत्रैतेऽपि प्रियविरहिणो दाहिनश्चक्रनाम्नस्तत्रोपायः क इव भवतु प्राणसंधारणे यः ॥ ९ ॥ चक्राह्वो विरही हतोऽपि हृदये बाणेन न त्यक्तवान्प्राणान्प्राणसमासमागमसुखध्यानैकतानश्चिरम् । स्वां छायामवलोक्य वारिणि गलद्रक्ताममवेक्ष्य प्रिया भ्रान्तस्तद्व्रणवेदनापरिगतः कष्टं मृतः साम्प्रतम् ॥ १० ॥ तीरात्तीरमुपैति रौति करुणं चिन्तां समालम्बते किंचिद्ध्यायति निश्चलेन मनसा योगीव युक्तेक्षणः । स्वां छायामवलोक्य कूजति पुनः कान्तेति मुग्धः खगो धन्यास्ते भुवि ये निवृत्तमनसो धिग्दुःखिता कामिनः ॥ ११ ॥ मित्रे क्वापि गते सरोरुहवने बद्धानने ताम्यति क्रन्दत्सु भ्रमरेषु वीक्ष्य दयिताश्लिष्टं पुरः सारसम् । चक्राह्वेन वियोगिना बिसलता नास्वादिता नोज्झिता कण्ठे केवलमर्गलेव निहिता जीवस्य निर्गच्छतः ॥ १२ ॥ मङ्क्त्वा मोक्तुं न मुह्ये[1] त्रुटितबिसलताकोटिभिर्दोर्भिरन्तश्चाराकारात्पृषार्तं पिबति न पयसा निर्गुणं[2] पत्रसंस्था । छायामम्भोरुहाणामलिकुलसबला वेत्ति सध्यामसध्या कान्ताविश्लेषभीरुर्दिनमपि रजनीं मन्यते चक्रवाकः ॥ १३ ॥

## सध्यावर्णनम्

उच्चैस्तरादम्बरशैलमौलेश्च्युतो रविर्गैरिकगण्डशैलः । तस्यैव पातेन विचूर्णितस्य सध्यारजोराजिरिवोज्जिहीते ॥१॥ विहिताञ्जलिर्जनतया दधती विकसत्कुसुम्भकुसुमारुणताम् । चिरमुज्झितापि तनुरौज्झदसौ न पितृप्रसूः प्रकृतिमात्मसुरः ॥ २ ॥ अथ सान्द्रसाध्यकिरणारुणितं हरिहेतिहूति मिथुनं पततोः । पृथगुत्पपात विरहार्तिदलद्धृदयस्रुतासृगनुलिप्तमिव ॥ ३ ॥ निलयः श्रियः सततमेतदिति प्रथितं यदेव जलजन्म तया । दिवसात्ययात्तदपि मुक्तमहो चपलाजनं प्रति न चोद्यमदः ॥ ४ ॥ दिवसोऽनुमित्रमगमद्विलयं किमिहास्यते बत मयालयया । रुचिभर्तुरस्य विरहाधिगमादिति सध्ययापि सपदि व्यगमि ॥ ५ ॥ मुग्धस्य केलिविजितस्मरचापयष्टेरातन्वती रुचिमतीव सुधाकरस्य । रागोद्धुरा स्फुटमुदञ्चितारकश्री सध्याविरस्ति ननु कापि पतिव्रतेव ॥ ६ ॥

## रजनिवर्णनम्

व्योमपात्रमपि चैकपाणिना विस्फुटोडुकुसुमानि बिभ्रति । अन्यपाणिकलितेन्दुदर्पणा कामिनीव रजनीयमागता ॥ १ ॥ नृपतिपुरुषशङ्कितप्रचारं परगृहदूषणनिश्चितैकवीरम् । घननिरनिरुद्धसर्वभावा रजनिरियं जननीव संवृणोति ॥ २ ॥ अस्तोदयाचलनिलम्बिरवीन्दुबिम्बव्याजात्क्षणं श्रवणयोर्निहितावनिन्द्या । ताराच्छलेन कुसुमानि समुत्क्षिपन्ती संध्येयमागतवती प्रमदेव काचित् ॥ ३ ॥ शशाङ्के सनद्धे भरत इव सध्यायवनिका तिरोभूत्वा पुष्पाञ्जलिमिव विकीर्योडुनिकरम् । कलं गायन्तीभिः कुमुदवनभृङ्गीभिरधुना नभोरङ्गं प्राप्ता विहरति निशैलासिकवधूः[4] ॥४॥ उन्मुक्तमिर्दिवसमधुना सर्वतस्तामिरेव स्वच्छायाभिर्निचुलितमिव प्रेक्ष्यते विश्वमेतत् । पश्यन्त्येषु ज्वलति जलधौ स्वःसानौ च मध्ये चित्राद्रीव रमयति तमःस्तोमनीलां धरित्रीम् ॥ ५ ॥ उच्चैस्तामसच्चेङ्कुरणघटना बिभ्रती तारकास्थीन्यन्तर्धानव्यसनरसिका रात्रिरेषा कापालिकीयम् । द्वीपाद्द्वीपं भ्रमति दधती चन्द्रमुद्राकपाले न्यस्तं सिद्धाञ्जनपरिमलं लाञ्छनस्य च्छलेन ॥ ६ ॥

## तमोवर्णनम्

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः । असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता ॥ १ ॥ अविभातविशेषस्य सन्

१ देवनियोग २ संबद्धदृष्टि- ३ विदव

१ नाट्यनिपुणा नटीव रात्रिः २ अहरेव ३ कौतुके ४ रात्रिरूपा योगिनी

तेजोपहारिण । स्वामिनो निर्विवेकस्य तमसश्च किमन्तरम् ॥ २ ॥ आपूरितमिद श्यामतमसतमसेरलम् । ब्रह्माण्डमण्डल भाति सकज्जलकरण्डवत् ॥ ३ ॥ तनुलग्ना इव ककुभ क्ष्मातलय चरणचारपात्रमिव । वियदपि चालिकदम्र मुष्टिग्राह्य तम कुरुते ॥ ४ ॥ अम्बरविपिनमिदानीं तिमिरवराहोऽवगाहते जलधे । रोमसु यदस्य लग्नास्तारक जलबिन्दवो भान्ति ॥ ५ ॥ घटितमिवाञ्जनपुञ्जै पूरितमिव मृगमदक्षोदै । ततमिव तमालतरुभिर्वृतमिव नीलांशुकैर्भुवनम् ॥ ६ ॥ आतपघातपभयादपलीन धामरच्छविविरामपटीय । सनिपत्य शनकैरिव निम्नादन्धकारमुदवाप समानि ॥ ७ ॥ एकतामिव गतस्य विवेक कस्यचिन्न महतोऽप्युपलेभे । भास्वता निदधिरे भुवनानामात्मनीव पतितेन विशेषा ॥ ८ ॥ रञ्जिता नु विविधास्तरुशैला नामित नु गगन स्थगित नु । पूरिता नु विषमेषु धरित्री सहृता नु ककुभस्तिमिरेण ॥ ९ ॥ रात्रिरागमलिनानि विकास पङ्कजानि रहयन्ति विहाय । स्पष्टतारकमियाय नम श्रीर्वस्तुमिच्छति निरापदि सर्व ॥ १० ॥ नोर्ध्वमीक्षणगतिर्न चाप्यधो नाभितो न पुरतो न पृष्ठत । लोक एष तिमिरौघवेष्टितो गर्भवास इव वर्तते निशि ॥ ११ ॥ शुद्धमाविलमवस्थित चल वक्रमार्जवगुणान्वित च यत् । सर्वमेव तमसा समीकृत धिग्महत्त्वमसता हतान्तरम् ॥ १२ ॥ पिदधति[1] तिमिरे समस्तलोक प्रलयमहाब्धिनिभे भृतोघनीचे । व्यरुचदुडुगणो वैलक्षरोचिर्बहुविधफेनसमूहतुल्यरूप ॥ १३ ॥ पतिते पतङ्गमृगराजि निजप्रतिबिम्बरोषित इवाम्बुनिधौ । अथ नागयूथमलिनानि जगत्परितस्तमासि परितस्तरिर ॥ १४ ॥ व्यसरत्नु भूधरगुहान्तरत पटल महिर्बहलपङ्करुचि । दिवसावसानपटुनस्तमसो बहिरेत्य चाधिकमभक्त गुहा ॥ १५ ॥ निमलम्बताम्बरनिलम्बमध निमवर्धतोर्ध्वमवनीतलत । निससार तिर्यगथ दिग्भ्य इति प्रचुरीभवन्न निरधारि तम ॥ १६ ॥ स्थगिताम्बरक्षितितले परितस्तिमिरे जनस्य दृशमन्धयति । दधिरे रसाञ्जनमपूर्वमत प्रिय वेश्मवर्त्म सुदृशो ददृशु ॥ १७ ॥ अवधार्य कार्यगुरुताम भवन भयाय सान्द्रतमसन्तमसम् । सुतनो स्तनौ च दयितोपगमे तनुरोमराजिपथवेपथवे ॥ १८ ॥ ददृशेऽपि भास्कररुचाह्नि न य स तमी तमोभिरभिगम्य तताम् । धुतिमग्रहीद्ग्रहगणो लघव प्रकटीभवन्ति मलिनाश्रयत ॥ १९ ॥ अनुलेपनानि कुसुमान्यबला कृतमन्यव पतिषु दीपशिखा । समयेन तेन चिरसुप्तमनोभवबोधन सममबोधिषत ॥ २० ॥ विवस्वतानायिषतेव मिथ्या स्वर्गोऽसहस्रेण सम जनानाम् ।

[1] निरोदधति सति [2] अन्धकारे [3] धवलमरीचि- [4] दिशा- १८ पु. ट. मा

गावोऽपि नेत्रापरनामधेयास्तेनेदमान्ध्य खलु नान्धकारै ॥ २१ ॥ चरमगिरिनिकुञ्जमुष्णभानौ भगवति गच्छति विप्रयोगखिन्ना । मुकुलितनयनाम्बुजा धरित्री वपुषि बभार तमासि शैवलानि ॥ २२ ॥ काश्मीरगौरवपुषामभिसारिकाणामाबद्धरेखमभितोरुचिमञ्जरीभि । एततमालदलनीलतम तमिस्र तत्प्रेमहेमनिकषोपलता तनोति ॥ २३ ॥ उद्दामदिग्द्विरदचञ्चलकर्णपूरगण्डस्थलोच्छलदलिस्तनकाकृतीनि । मीलन्नभासि मृगनाभिसमानभासि दिक्कन्दरेषु निलमन्ति तमासि ॥ २४ ॥ सिन्धो सुधांशुशकल परिगृह्य सन्ध्याक्षेमकरी निपतिताम्बरभूरुहाग्रे । चञ्चूपुटेन चपलेन तया विकीर्णास्ताराभिषेण पतिता इव पक्षखण्डा ॥ २५ ॥ व्यसनिन इव निधा क्षीयते पङ्कजश्रीर्गुणिन इव विदेशे दैन्यमायाति भृङ्गा । कुनृपतिरिव लोक पीडयत्यन्धकारो धनमिव कृपणस्य व्यर्थतामेति चक्षु ॥ २६ ॥ इद नभसि भीषणभ्रमदुलूककोलाहलैर्निशाचरविलासिनीनिवहदत्तनेत्रोत्सवम् । परिस्फुरति निर्भरप्रचुरपङ्कसम्मोहमद्वराहकुलमासलप्रबलबन्धमन्ध तम ॥ २७ ॥ पुर पूर्वमेव स्थगयति ततोऽन्यामपि दिश क्रमात्क्रामन्नद्रिद्रुमपुरविभागास्तिरयति । उपेत पीनत्व तदनु भुवनस्येक्षणपथ तम सघातोऽय हरति हरकण्ठद्युतिहर ॥ २८ ॥ अमुष्मिन्नुद्यानद्रुमकुहरनीरन्ध्रभरिते तम स्तोमे पिण्डीकृतबहलकालायसघने । यतामद्यास्माक कथमपि पुरो यस्तचरण निमेषेऽप्युन्मेषे नहि नहि विशेषो नयनयो ॥ २९ ॥ कङ्कोल कल्कण्ठिका कुवलय कादम्बिनी कर्दम कंसारि कबरी कृपाणलतिका कस्तूरिका कज्जलम् । कालिन्दी कचपट्टिका करिघटा कामारिकण्ठस्थली यस्यैते करदा भवन्ति सखि तद्वन्दे विनिद्र तम ॥ ३० ॥ किं भूमौ परित स्फुरन्ति करिण कस्तूरिकाया रसै सिक्ता किं निखिला दिश स्विमखिल लिप्त मषीभिर्नभ । किं व्याप्त भुवन समस्तमपि च श्रीकण्ठकण्ठत्विषा कालिन्दीजलराशितमानि निबिडे जातेऽन्धकारेऽधुना ॥ ३१ ॥ मद्य सान्द्रमषी विलुप्तककुभ स्निग्धेन्द्रनीलद्रवश्यामीभवन्नभसो निरन्तरमिलज्झिल्लीरसश्च्योतिन । एत कोकिलकायकान्तिमहतो लुम्पन्ति दृष्टि दृशोरुन्निद्राञ्जनपुञ्जमेचकरुचो भीमास्तम प्रक्रमा ॥ ३२ ॥ चिन्वद्भिश्चौरचिर्विकीर्णितानि घटयद्भिस्ताम्राणि भुवस्तन्वानैर्बलसाधनोत्सवरस निर्व्याजवीरात्मनाम् । पुरे रामकृत्ता नृनभमनसा शुभाङ्गनासगम दृश्यत्कोकिलकालकण्ठमलिन

[1] गण्डस्थलात् [2] निभे- [3] मेखलि- [4] पेटक [5] पाश्वलिका [6] गजसमूह [7] करदा [8] कण्ठस्थाने [9] मेघश्यामतनीभि

ध्वान्त समुज्जृम्भते ॥ ३३ ॥ नाकाश न दिशो न भूधरकुल नाम्भोधयो न क्षितिर्न द्यौर्नाम्बुधरा न तीव्रकिरणो नेन्दुर्न तारागण । एते षट्पदकायकान्तिपटलीपाण्डित्य वैतण्डिकै कल्लोलैस्तमसामसाम्प्रतमय विश्वव्यय कल्प्यते ॥ ३४ ॥ एतद्व्योमवनीवराहवलय विश्वैकवीरस्मरस्कन्धावारमदान्धसिन्धुरकुल श्यामावधूरंशिकम् । चक्षुष्याञ्जन वस्तु घूकमदसा विक्लिष्टचक्राह्वयस्तोमान्तर्गतधूमकेतन महाधूम्या तमस्तार्यते ॥ ३५ ॥ सर्वे ध्वान्तमिद वदन्तु बहुधा सिद्धान्त एव [redacted] न स्वाधारेषु करेषु पुष्करमणे सत्स्वेषु नून शनै । अस्तालम्बतयाम्बरेण पतता म्रस्ते समस्ते जगत्सु मीलत्करकन्दलैरपि वियोऽस्तत्तावदुत्तार्यते ॥ ३६ ॥ विश्व चाक्षुषमलमस्ति हि तम कैवल्यमोपाधिसम्प्राच्यादिव्यवहारबीजविरहाद्दिग्ध्यानमेव स्थितम् । गृह्यन्ते मयहेतव पटुभिरप्यक्षान्तरैर्भाति च ध्वान्तेनातिघनेन वस्तु वचसा शान्त स्वरेणामुक ॥ ३७ ॥ व्योम्नि प्राङ्गणसीम्नि साध्य किरण विस्तार्य चेलाञ्चल ध्वान्तै कार्मणपासुभिश्च जगता द्राह् मोहयित्वा दृशौ । ताराशौक्तिकमौक्तिकानि विहगश्रेणीरवच्छद्मना जिजिह्नत्य च मायिक सरन्टो चक्राह्वहिर्वर्तते ॥ ३८ ॥ उत्खातच्छिन्नसध्यारुणकमलवनो व्योमकासारमध्य मग्ने मत्तो निशीथाह्वयवनमहिषो मद्रवविक्षिप्तमश्नु । तत्कालोद्दियमान सह तनुपृथुभिस्तारकाबुद्बुदौघैस्तत्कालादेवोज्जिहीते कलुषितभुवन भीषणो ध्वान्तपङ्क ॥ ३९ ॥ चूडाले स्फुरदर्चिर्निषधरविवराण्युज्ज्वलानुज्ज्वलानि प्रेक्ष्यन्ते चक्रनामीमनसि निविशते सूर्यकान्ताकृशानु । किं चामी शल्ययन्तस्तिमिरमुमयतो निर्भराहस्तमिस्रासघट्टोत्पिष्टसध्याकणनिकरपरिस्पर्धिनो भान्ति दीपा ॥ ४० ॥

---

## अभिसारिकासचारकथनम्

मेघा वर्षन्तु गर्जन्तु मुञ्चन्त्वशनिमेव वा । गणयन्ति न शीतोष्ण रमणाभिमुखा स्त्रिय ॥ १ ॥ मल्लिकामाल्यभारिण्य सर्वाङ्गीणार्द्रचन्दना । क्षौमवत्यो न लक्ष्यन्ते ज्योत्स्नायामभिसारिका ॥ २ ॥ मल्लिकाचितधम्मिल्लाश्चारुचन्दनचर्चिता । अविभाव्या सुख याति चन्द्रिकास्वभिसारिका ॥ ३ ॥ गज वा यव वा मेघ सुख वा शतशोऽशनिम् । न शक्या हि स्त्रियो रोद्धु प्रस्थिता दयित प्रति ॥ ४ ॥ प्राणेशमभिसरन्ती पथि स्खलन्ती सुपिच्छिले मुग्धा । अवलम्बनाय वारा धाराससु कर प्रसारयति ॥ ५ ॥ अयि यामिनि गजगामिनि कामिनि सौदामिनीव [redacted] व्रजसि । जलदेनव न जाने कति कति सुकृतानि तेन विहितानि ॥ ६ ॥ जलधर निर्लज्जस्त्व यन्मा दयितस्य वेश्म गच्छन्तीम् । स्तनितेन भीषयित्वा धाराहस्तै परामृशसि ॥ ७ ॥ यद्यदहल्याहेतोर्मृषा वदसि शक्र गोतमोऽस्मीति । तद्वन्मामपि दु ख निरस्य निवार्यता जलद ॥ ८ ॥ यदि गर्जति वारिधरो गर्जतु तन्नाम निष्ठुरा पुरुषा । अयि विद्युत्प्रमदाना त्वमपि च दु ख न जानासि ॥ ९ ॥ रमसादभिसर्तुमुद्यताना वनिताना सखि वारिदो विवस्वान् । रजनी दिवसोऽन्धकारमर्चिर्विपिन वेश्म विमार्ग एव मार्ग ॥ १० ॥ चन्द्रोदये चन्दनमङ्गकेषु निहस्य निन्यस्य विनिर्गताया । मनो निहन्तु मदनोऽपि बाणान्करेण कौन्दान्विभराम्बभूव ॥ ११ ॥ स्फुरदुरसिजमारभङ्गुराङ्गी किसलयकोमलकान्तिना पदेन । अयि कथय कथ सहेत गन्तु यदि न निशासु मनोरथो रथ स्यात् ॥ १२ ॥ सचरन्ति मृगनाभिचर्चिता मेचकाम्बरकृतावगुण्ठना । प्राणनाथमभिसर्तुमुद्यता सुभ्रुवस्तिमिरदेवता इव ॥ १३ ॥ क्व प्रस्थितासि करभोरु घने निशीथे प्राणाधिपो वसति यत्र मन प्रियो मे । एकाकिनी वद कथ न बिभेषि बाले नन्वस्ति पुङ्खितशरो मदन सहाय ॥ १४ ॥ मन्द निधेहि चरणौ परिधेहि वासो नील पिधेहि वलयावलिमञ्चलेन । मा जल्प साहसिनि शारदचन्द्रकान्तदन्तांशवस्तव तमासि समापयन्ति ॥ १५ ॥ मूढे निरन्तरपयोधरया मयैव कान्त सहाभिरमते यदि किं तवात्र । मा गर्जितैरिति मुहुर्विनिवारयन्ती मार्गं रुणद्धि कुपितेव निशा सपत्नी ॥ १६ ॥ उरसि निहितस्तारो हार कृता जघने घने कलकलवती काञ्ची पादौ रणन्मणिनूपुरौ । प्रियमभिसरस्येव मुग्धे त्वमाहतडिण्डिमा यदि किमपरं त्रासोत्कम्प दिश समुदीक्षसे ॥ १७ ॥ न जल्प दशनत्विषा भवति ते तमिस्रक्षतिस्तिरङ्कय दृगञ्चल भवतु तेन गाढ तम । अपीह सखि साध्वस पथि जहीहि निम्नोन्नते स्मर समदसिन्धुर समधिरुह्य निर्गच्छसि ॥ १८ ॥ वातोद्धूतमुखी प्रनष्टतिलका तोयार्द्रलीनाशुका मेघाना निनदेन भीतहृदया गत्वा प्रियस्यालयम् । द्वार नेच्छति लज्जया प्रलपितु देहीति वर्षाहता पादौ नूपुरकर्दमप्रतिहतौ सशब्दयन्ती स्थिता ॥ १९ ॥ मुक्त मौक्तिकदाम हेमवलयश्रेणी समुत्सारिता वासो नीलमुरीकृत नियमितो मञ्जीरकोलाहल । गच्छन्त्यास्तव साहस न सहते तन्वङ्गि सगोपन धम्मिल्लच्युतमल्लिकापरिमलग्राही निशीथानिल ॥ २० ॥ जाता प्रासादपालीकनकवलभिकान्यस्तमाणिक्यदीपच्छायाविच्छर्दतुच्छीकृतविरलतमा ये निशीथान्धकारा । तेऽमी स्फारीक्रियन्ते मतिविशिखमित कान्तसकेतधावद्वामभ्रूमुक्तनम्रोत्

१ उत्तुङ्गधारिण्य २ पद्मयुक्ते

१ निविडे २ अर्धरात्रे ३ मुद्रिता यया येन

लतरलतरत्तारकामेचकिञ्चा ॥ २१ ॥ उत्तस केकिपिच्छै र्मरकतवलयै श्यामले दोःप्रकाण्डे हार सान्द्रेन्द्रनीलैर्मृगमदरचितो पत्रभङ्गप्रपञ्च । नीलाब्जैः शेखरश्रीरसितवसनता चेत्यमीकाभिसारे सप्रत्येणेक्षणाना तिमिरभरसखी वर्तते वेषलीला ॥ २२ ॥ मलयजरसविलिप्ततनवो नवहारलताविभूषिता सिततरदन्तपत्रकृतवक्त्ररुचो रुचिरामलांशुका । शशभृति विततधाम्नि धवलयति धरामविभाव्यता गता प्रिय वसतिं प्रयान्ति सुखमेव निरस्तभियोऽभिसारिका ॥ २३ ॥

## नक्षत्रोदयवर्णनम्

घनतरतिमिरघुणोत्करजग्धानामिव पतन्ति काष्ठानाम् । छिद्रैरमीभिरुडुभि किरणव्याजेन चूर्णानि ॥ १ ॥ उद्वर्तु निज शैलकेलिरभसप्रस्तानि पायोनिधेरन्तर्भूषणमौक्तिकानि दिनिजश्रीभि समुत्कण्ठया । गाढ तत्र निमज्जितेन रविणा पद्मा दृढ रश्मिभि प्रोत्क्षिप्तानि निपत्य तानि गगने तारा पदेश दधु ॥ २ ॥

## चन्द्रोदयवर्णनम्

तत कुमुदनाथेन कामिनीगण्डपाण्डुना । नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलंकृता ॥ १ ॥ कुमुदेऽध्यधिकं भाति पतिताश्चन्द्ररश्मय । अतिमट्टष्टशीलेषु कुलेष्विव समृद्धय ॥ २ ॥ आनन्द कुमुदादीनामिन्दु चन्दलयत्वयम् । लङ्घयत्यम्बराभोग हनूमानिव सागरम् ॥ ३ ॥ पिनष्टीव तर ङ्गाग्रै समुद्र फेनचन्दनम् । तदादाय करैरिन्दुर्लिम्पतीव दिगङ्गना ॥ ४ ॥ नयनानन्ददायीन्दोर्बिम्बमेतत्प्रसीदति । अधुना निरुद्धाश प्रविशीर्णमिद तम ॥ ५ ॥ नाशयन्तो घनध्वान्त तापयन्तो वियोगिन । पतन्ति शशिन पादा भासयन्त क्षमातलम् ॥ ६ ॥ ज्योत्स्नाचय पय पूरतारका कैरवाणि च । राजति व्योमकासारराजहस सुधाकर ॥ ७ ॥ इदमाभाति गगने भिन्दान सतत तम । अमन्दनयनानन्दकरं मण्डलमैन्दवम् ॥ ८ ॥ उदयतटान्तरित मिय प्राची सूचयति दिङ्निशानाथम् । परिपाण्डुना मुखेन प्रियमिव हृदयस्थित रमणी ॥ ९ ॥ अथ पथिकवधूदहनशनैरुदभूत्शिशिरालोक । कुमुदप्रबोधदूतो व्यसनगुरुश्चक्रवाकीणाम् ॥ १० ॥ निनयन दूरमस्य मित्र सिन्धो कुमुद्वतीदयित । अयमुदयति कुङ्कुमारुणरमणीवदनोपमश्चन्द्र ॥ ११ ॥ हसो यथा राजति पञ्जरस्थ सिंहो यथा मन्दरकन्दरस्थ । वीरो यथा दर्पितकुञ्जरस्थश्चन्द्रोऽपि बभ्राज तथाऽम्बरस्थ ॥ १२ ॥ आकन्दवापीगितपुण्डरीक

१ विरहिणीकपोलपाण्डुरेण २ प्राचीदिक् ३ चन्द्र ४ आकाश एव वापी तस्या श्वेतकमलम्

शोणोपल मन्मथसायकानाम् । पश्योदित शारदमम्बुजाक्षि सध्याङ्गनाकन्दुकमिन्दुबिम्बम् ॥ १३ ॥ वीथीषु वीथीषु विलासिनीना मुखानि संवीक्ष्य शुचिस्मितानि । जालेषु जालेषु कर प्रसार्य लावण्यभिक्षामटतीव चन्द्र ॥ १४ ॥ नभोऽन्तता कुङ्कुमुपागताया प्रमोदपर्याकुलतारकाया । निशाङ्गनाया स्फुरता करेण शशी तमःकञ्चुकमुन्मुमोच ॥ १५ ॥ मनोजराजस्य सितातपत्र श्रीखण्डचित्र हरिदङ्गनाया । विराजति व्योमसर सरोज कर्पूरपूरप्रभमिन्दुबिम्बम् ॥ १६ ॥ अथ मन्मथवाहिनीपराग किमपि ज्योतिरुदस्फुरत्पुरस्तात् । तिमिरस्य जरा चकोरकूरं कुलटाकेलिवनीदवानलार्चि ॥ १७ ॥ नवकुङ्कुमचर्चिता रजन्या गगनाशोकतरो प्रवालपङ्क्ति । मणिकुन्तलता स्मरस्य मन्ये शशिन प्राथमिकी मयूखलेखा ॥ १८ ॥ उपोढरागेण विलोलतारक तथा गृहीत शशिना निशामुखम् । यथा समस्त तिमिराशुक तया पुरोऽपि रागाद्गलित न लक्षितम् ॥ १९ ॥ करमुदयमहीधरस्तनाग्रे गलिततम पटलाशुके निवेश्य । विकसितकुमुदेक्षण विचुम्बत्ययममरेशदिशो मुख सुधाशु ॥ २० ॥ अन्धकारगरल यतो जगन्मोहकारि भृशमत्ति नित्यश । उज्ज्वल जठरमोषधीपतेरञ्जनाममभय ततः प्रिये ॥ २१ ॥ मानिनीजनविलोचनपातानुष्णबाष्पकलुषान्प्रतिगृह्णन् । मन्दमन्दमुदित प्रययौ ख भीतभीत इव शीतमयूख ॥ २२ ॥ शक्रपार्श्वतनुमद्यपानतीव्रकुङ्कुमाक्तकुचगोरकाकृति । लक्ष्यते कमलिनीभिरुन्मतपङ्कजोदरलीलया शशी ॥ २३ ॥ इन्दुरिन्दुरिति किं दुराशया बिन्दुरेष पयसो विलोक्यते । नन्विद विजयते मृगीदृश श्यामकोमलकपोलमाननम् ॥ २४ ॥ रुद्धनिर्गमनमा दिनक्षयात्पूर्वदृष्टतनुचन्द्रिकास्मितम् । एतदुद्गिरति रात्रिचोदिता दिग्गृहस्यमिव चन्द्रमण्डलम् ॥ २५ ॥ पश्य पद्मिनीपञ्जरिता बिम्बलाञ्छितवियत्सरोऽम्भसा । विप्रकृष्टविवरं हिमांशुना चक्रवाकमिथुन विडम्ब्यते ॥ २६ ॥ अङ्गुलीभिरिव केश संचय संनियम्य तिमिरं मरीचिभि । कुड्मलीकृतसरोजलोचन चुम्बतीव रजनीमुख शशी ॥ २७ ॥ रक्तभावमपहाय चन्द्रमा जात एव परिशुद्धमण्डल । विक्रिया न खलु कालदोषजा निर्मलप्रकृतिषु स्थिरोदया ॥ २८ ॥ उन्नतेषु शशिन प्रभा स्थिता निम्नसंश्रयपरं निशातम । नूनमात्म सदृशी प्रकल्पिता वेधसैव गुणदोषयोर्गति ॥ २९ ॥ चन्द्रपादजनितप्रवृत्तिभिश्चन्द्रकान्तजलबिन्दुभिर्गिरि । मेखलातरुषु निद्रितानमू बोधयत्यसमये शिखण्डिन ॥ ३० ॥

१ [illegible] २ [illegible] ३ [illegible] वेश्म यावनाम् ४ पयोगर्भ कुमोदनम भोजनमिति यावत्

उन्नतानतभागवत्तया चन्द्रिका सतिमिरा गिरेरियम् । भक्तिभिर्बहुविधाभिरर्पिता भाति भूतिरिव मत्तदन्तिनः ॥३१॥ एतदुच्छ्वसितपीतमैन्दवं सोढुमक्षममिव प्रभारसम् । मुक्तषट्पदविरावमञ्जसा भिद्यते कुमुदमा निबन्धनात् ॥ ३२ ॥ आननानि हरिणीनयनानामद्भुतानि च समीक्ष्य जगत्याम् । लज्जयैव घनमण्डललीनो मन्दमन्दमहहेन्दुरुदेति ॥ ३३ ॥ व्यानशे शशधरेण विमुक्तः केतकीकुसुमकेसरपाण्डुः । चूर्णमुष्टिरिव लम्बितकान्तिर्वासवस्य दिशमंशुसमूहः ॥ ३४ ॥ उज्झती शुचमिवाशु तमिस्रामन्तिकं व्रजति तारकराजे । दिक्प्रसादगुणमण्डनमूहे रश्मिहासविशदं मुखमैन्द्री ॥३५॥ नीलनीरजनिभे हिमगौरं शैलरुद्धवपुषः सितरश्मेः । खे रराज निपतत्करजालं वारिधेः पयसि गाङ्गमिवाम्भः ॥३६॥ द्यां निरुन्धदतिनीलघनाभं ध्वान्तमुद्यतकरेण पुरस्तात् । क्षिप्यमाणमसितेतरभासा शंभुनेव करिचर्म चकासे ॥ ३७ ॥ अतिकान्तिकगलेन्दुविसृष्टे जिह्मतां जहति दीधितिजाले । निःसृतस्तिमिरभारनिरोधादुच्छ्वसन्निव रराज दिगन्तः ॥३८॥ लेखया विमलविद्रुमभासा संततं तिमिरमिन्दुरुदासे । दंष्ट्रया कनकटङ्कपिशङ्ग्या मण्डलं भुव इवादिवराहः ॥३९॥ दीपयन्नथ नभः किरणौघैः कुङ्कुमारुणपयोधरगौरः । हेमकुम्भ इव पूर्वपयोधेरुन्ममज्ज शनकैस्तुहिनांशुः ॥ ४० ॥ उद्गते द्युमविभिन्नतमिस्रा पश्यति स्म रजनीमवितृप्तम् । व्युत्क्रमस्फुटमुखीमतिजिह्मां व्रीडया नववधूमिव लोकः ॥४१॥ न प्रसादमुचितं गमिता द्यौर्नोद्धृतं तिमिरमद्रिवनेभ्यः । दिङ्मुखेषु न च धाम विकीर्णं भूषितैव रजनी हिमभासा ॥ ४२ ॥ क्षिप्यते प्रियवधूरुपकण्ठं तारकास्ततकरस्य हिमांशोः । उद्धमन्नभिरराज समन्तादङ्गराग इव लोहितरागः ॥ ४३ ॥ प्रेरितः शशधरेण करौघः संहृतान्यपि नुनोद तमांसि । क्षीरसिन्धुरिव मन्दरभिन्नः काननान्यविरलोच्चतरूणि ॥ ४४ ॥ शारता गमितया शशिपादैश्छायया विटपिनां प्रतिपेदे । न्यस्तशुक्लबलिचित्रतलाभिस्तुल्यता वसतिवेश्ममहीभिः ॥ ४५ ॥ गन्धमुद्धतरजःकणवाही विक्षिपन्विकसतां कुमुदानाम् । आदुधाव परिलीनविहङ्गा यामिनीमरुदपां वनराजीः ॥ ४६ ॥ सविधातुमभिषेकमुदासे मन्मथस्य लसदंशुजलौघः । यामिनीवनितया ततचिह्नः सोत्पलो रजतकुम्भ इवेन्दुः ॥ ४७ ॥ ओजसापि खलु नूनमनूनं नासहायमुपयाति जयश्रीः । यद्विभुं शशिमयूखसखः सन्नाददे विजयि चापमनङ्गः ॥ ४८ ॥ कल्पितमम्बरमाकल्प्य वर्त्मैमुदितपङ्कजकोशपयोधरः । विकसदुत्पलनेत्रविलोकित सन्ति निशा सरसीकुरुते विधुः ॥ ४९ ॥ वसुधान्तनिःसृतमिवाहिपतेः पटलं फणामणिसहस्ररुचाम् । स्फुरदंशुजालमथ शीतरुचः ककुभं समरकुरुत माघवनीम् ॥ ५० ॥ विशदप्रभापरिगतं विबभावुदयाचलव्यवहितेन्दुवपुः । मुखमप्रकाशदशनं शनकैः सविलाससहासमिव शक्रदिशः ॥ ५१ ॥ कलया तुषारकिरणस्य पुरः परिमन्दभिन्नतिमिरौघजटम् । क्षणमभ्यपद्यत जनैर्न मृषा गगनं गणाधिपतिमूर्तिरिति ॥ ५२ ॥ नवचन्द्रिकाकुसुमकीर्णतमःकबरीभृतो मलयजार्द्रमिव । ददृशे ललाटतटहारि हरेर्हरितो मुखे तुहिनरश्मिदलम् ॥ ५३ ॥ प्रथमं कलाभवदथार्धमथो हिमदीधितिर्महदभूदुदितः । दधति ध्रुवं क्रमश एव न तु द्युतिशालिनोऽपि सहसोपचयम् ॥ ५४ ॥ उदमज्जि कैटभजितः शयनादपनिद्रपाण्डुरसरोजरुचा । प्रथमममुद्रनदराजसुतावदनेन्दुनेव तुहिनद्युतिना ॥ ५५ ॥ अथ लक्ष्मणानुगतकान्तवपुर्जलधिं विलङ्घ्य शशिदाशरथिः । परिवारितं परितः ऋक्षगणैस्तिमिरौघराक्षसकुलं बिभिदे ॥ ५६ ॥ उपजीवति स्म सततं दधतः परिमुग्धतां वणिगिवोडुपतेः । घनवीथिवीथिमवतीर्णवतो निधिरम्भसामुपचयाय कलाः ॥ ५७ ॥ रजनीमवाप्य रुचमाप शशी सपदि व्यभूषयदसावपि ताम् । अविलम्बितक्रममहो महतामितरेतरोपकृतिमच्चरितम् ॥ ५८ ॥ दिवसं भृशोष्णरुचिपादहता रुदतीमिवानवरतालिरुतैः । मुहुरामृशन्मृगधरोऽग्रकरैरुदसीश्वसत्कुमुदिनीवनिताम् ॥ ५९ ॥ प्रतिकामिनीति ददृशुश्चकिताः सरजं मधर्मपयसोपचिताम् । सुदृशोऽभिभर्तृशशिरश्मिगलज्जलबिन्दुमिन्दुमणिदारुवधूम् ॥ ६० ॥ अमृतद्रवैर्विदधदब्जदृशामपमार्गमोषधिपतिः स करैः । परितो विसर्पि परितापि भृशं वपुषोऽवतारयति मानविषम् ॥ ६१ ॥ अमलात्मसु प्रतिफलन्नभितस्तरुणीकपोलफलकेषु मुहुः । विससार सान्द्रतरमिन्दुरुचामधिकावभासितदिशां निकरः ॥६२॥ उपगूढवेलमलघूर्मिभुजैः सरितामचुक्षुभदधीशमपि । रजनीकरः किमिव चित्रमहो यदुरागिणां गणमनङ्गलघुम् ॥६३॥ भवनोदरेषु परिमन्दतया शयितोऽलसः स्फटिकयष्टिरुच । अवलम्ब्य जालकमुखोपगतानुदतिष्ठदिन्दुकिरणान्मदनः ॥ ६४ ॥ अविभावितेषुविषयः प्रथमं मदनोऽपि नूनमभवत्तमसा । उदिते दिशः प्रकटयत्यमुना यदधर्मधाम्नि धनुराचकृषे ॥ ६५ ॥ युगपद्विकासमुदयाद्गमिते शशिनः शिलीमुखगणोऽलभत । द्रुतमेत्य पुष्पधनुषो धनुषः कुमुदेऽङ्गना मनसि चाप्सरम् ॥ ६६ ॥ ककुभां मुखानि सहसोज्ज्वलयन्दधदाकुलत्वमधिकं रतये । अदिदीपदिन्दुरपरो दहनः कुसुमेषुमत्रिनयनप्रभवः ॥ ६७ ॥ स्याता यथ मधुपा मधुकोशगतश्चन्द्रः प्रमारितकरो द्विजराज एव । अस्तसमागमकृतोऽस्य पुनर्द्वितीयो मा भूत्कलङ्क इति सङ्कुचिता

१ कीर्तिः, विभवश्च वा २ अतिमन्दगामिनीम्

नलिन्य ॥ ६८ ॥ उद्गर्भहूणतरुणीरमणोपमर्दभुग्नोन्नतस्तननिवेशनिभ हिमांशो । बिम्ब कठोरबिसकाण्डकडारमेतद्रम्भापद प्रथममग्रकरैर्व्यनक्ति ॥ ६९ ॥ ताराक्षता प्रतिनिरुन्ध्य कण्ठनादान्मघाक्षराणि निशदन्नु सुमेषुरेष । लाभाय वामरमणैर्मुषितस्य साय सचारयत्यमृतदीधितिकासपात्रम् ॥ ७० ॥ एतद्विभाति चरमाचलचूडचुम्बिहिण्डीरपिण्डरुचिशीतमरीचिबिम्बम् । उज्ज्वालितस्य रजनीमदनानलस्य धूम दधत्प्रकटलाञ्छनकैतवेन ॥ ७१ ॥ भूयस्तराणि यदमूनि तमस्विनीषु ज्योत्स्नीषु च प्रविरलानि तन प्रतीम । सध्यानलेन भृशमम्बरमूषिकायामावर्तितैरुडुभिरेव कृतोऽयमिन्दु ॥ ७२ ॥ उज्जृम्भते कुमुदिनीमुकुल मृगाङ्को विप्रकीर्णपरिपाटलरश्मिदण्ड । उत्प्लुतविद्रुममूलो जलधेस्तरङ्गादुत्क्षिप्यमाण इव कश्चन राजकन्दु ॥ ७३ ॥ गगनविपिनसिंह यामभूपातपत्र निखिलदिगबलाना कन्दुक क्रीडनाय । मणिरिव रतिभर्तु कार्मण पार्वणोऽय जयति कुमुदबन्धुर्बन्धुरश्चन्द्रबिम्ब ॥ ७४ ॥ अयमुदयति चन्द्रो वारिधेरम्बुगर्भादमृतकणकरालैरंशुभिर्दीप्यमान । भुजगशयनवक्षोहर्म्यदेशे लगन्त्या वदनमिव यदृच्छोत्तानित विश्वमातु ॥ ७५ ॥ अयमुदयति चन्द्रश्चन्द्रिकाधौतविश्व परिणतविमलिम्नि व्योम्नि कर्पूरगौर । ऋजुरजतशलाकास्पर्धिभिर्यस्य पादैर्जगदमलमृणालीपञ्जरस्थ विभाति ॥ ७६ ॥ उदयति कलमन्द्रे कण्ठतालैरलीना कुमुदमुकुलकेषु व्यसयनङ्गहारान् । मदमुखरचकोरीतोयकर्मान्तिकोऽयं तुहिनरुचिरधामा दक्षिण लोकचक्षु ॥ ७७ ॥ मृगाङ्कोऽय धत्ते गगनजलधे फेनतुलना सितच्छत्राकारा मदननृपतेर्विश्वजयिन । त्रियामारामाया मलयजविशेषप्रतिकृतिं जगद्धात्रीदेव्या मणिमुकुरलक्ष्मीं च विमलाम् ॥ ७८ ॥ कपाले मार्जार पय इति कराँल्लेढि शशिनस्तरुच्छिद्रप्रोतान्बिसमिति करी सकलयति । रतान्ते तल्पस्थान्हरति वनिताप्यंशुकमिति प्रभामत्तश्चन्द्रो जगदिदमहो विप्लवयति ॥ ७९ ॥ अय नेत्राद्वत्रेरजनि रजनीवल्लभ इति भ्रम कोऽप्य प्रज्ञापरिचयपराधीनमनसाम् । सुधानामाधार स खलु रतिबिम्बाधरसुधारसास्वेकस्निग्धादजनि नयनात्पुष्पधनुष ॥ ८० ॥ जटाभाभिर्भाभि करधृतकलङ्काक्षवलयो वियोगिव्यापत्तेरिव कलितवैराग्यविशद । परिप्रेङ्खत्तारापरिकरकपालाङ्कितनले शशी भस्मापाण्डु पितृवन इव व्योम्नि चरति ॥ ८१ ॥ तथा पौरस्त्यायां दिशि कुमुदकेदारकलिकाकवाटश्रीमिन्दु किरणलहरीमुल्लसयति । समन्तादुन्मीलद्बहलजलबिन्दुस्तबकिनो यथा पुष्पायन्ते प्रतिगृहकमणा द्रुमगण ॥ ८२ ॥ सुधारश्मि सघनतिमिरनिकरान्तविरचयन्नलिदैन्य स्यन्द शशिमणिसमुत्थ च वितरन् । उदेत्यादौ रक्ताम्बुजसमरुचि कैरववने प्रमोद तन्वानो मधुपवनितागीतिमधुरम् ॥ ८३ ॥ त्रिनयनजटावल्लीपुष्प निशावदनस्मित ग्रहकिसलय सध्यानारीनितम्बनखक्षति । तिमिरभिदुर व्योम्न शृङ्ग मनोभवकार्मुक प्रतिपदि नवस्येन्दोर्बिम्ब सुखोदयमस्तु न ॥ ८४ ॥ प्रथममरुणच्छायस्तावत्तत कनकप्रभस्तदनु विरहोत्ताम्यत्तन्वीकपोलतलद्युति । उदयति ततो ध्वान्तध्वसक्षम क्षणदामुखे सरसबिसिनीकन्दच्छेदच्छविर्मृगलाञ्छन ॥ ८५ ॥ मयूखनखरत्रुटत्तिमिरकुम्भिकुम्भस्थलोच्छलत्तरलतारकागणविकीर्णमुक्तागण । पुरदरहरिद्दरीकुहरगर्भसुप्तोत्थितस्तुषारकरकेसरी गगनकानन गाहते ॥ ८६ ॥ प्रसारणपरे करे प्रकटितानुरागोदये सुधाकिरणकामुके त्वरितमम्बरालम्बिनि । तदा विगलितोल्लसत्तिमिरजालनीलांशुका पुरदरदिगङ्गना पुलकितेव तारागणै ॥ ८७ ॥ कलानिधिरय रवे समुपलभ्य रूप स्वय दिनात्ययसमयेऽस्पृशत्पदि पद्मिनी रागवान् । धवान्तरसगमाकुलितेति पूर्वाकृति समीक्ष्य जहसु प्रिया मुखमभूदत पाण्डुर ॥ ८८ ॥ दर्पोद्रेक कुसुमधनुषो जीवित कैरवाणां जीवजीवप्रणयगरिमा भाग्यराशिर्निशाया । शृङ्गारश्रीललितहसित पानपात्र सुराणा पौरस्त्याद्रेर्जयति शिखर किं तम स्थातुमीष्टे ॥ ८९ ॥ तै सरंभैमिरदभिद्रुतानेपमिह्नाग्रैर्नरा नीरध्रैर्या त्रिभुवनदशाम कपट्टैस्तमोभि । व्याप्त पृथ्वीवलयमखिल क्षालयत्युच्छलद्भिर्ज्योत्स्नाजालैरयमुदयते शर्वरीसार्वभौम ॥ ९० ॥ पश्योदेति वियोगिना दिनमणि शृङ्गाररक्षामणिस्तारामौक्तिकहारनायकमणिश्चण्डीशचूडामणि । प्रौढानङ्गभुजगमस्तकमणि कन्दर्पसीमन्तिनीकाञ्चीमध्यमणिश्चकोरपरिपन्थि तामणिश्चन्द्रमा ॥ ९१ ॥ अङ्कुरो मदनद्विजस्य गगनक्रोडैकदष्ट्राङ्कुरस्तारामौक्तिकशुक्तिरप्रतमसस्तम्बेरमस्याङ्कुश । शृङ्गाराङ्गकलुं बिरा विरहिणीमर्मच्छिदा कर्तरी सध्यानायकधूनखक्षतिरिय चान्द्री कला जृम्भते ॥ ९२ ॥ स्वैर कैरवकोरकान्विदलयन्यूना मनो दोलयन्नम्भोजानि निमीलयन्मृगदृशा मान समुन्मूलयन् । ज्योत्स्ना कन्दलयन्दिशो धवलयन्नम्भोधिमुद्वेलयन्कोकाना कुलयन्नय कवलयन्निन्दु समुज्जृम्भते ॥ ९३ ॥ एष स्वर्गतरंगिणीजलमिलद्दिग्दन्तिदन्तद्युतिनिर्धूतद्राजतकुम्भविभ्रमधर शीतांशुरभ्युद्यत । हसीयत्यमरगम्बुजीयति स्वड्गिण्डीरपिण्डीयति स्फारस्फाटिककुण्डलीयति दिशामानन्द

१ सूरव २ पति- ३ पूर्वव्याकृति सहश दम्भतया शिवम् प्रथम पद्मिनीदर्शनेन विकृताकृति पश्चात्कुमुदिनीक्षेन निगदनया विकासकन्देन सह्यरंभिति प्रामाणिकपाठे ४ नेत्रजित ५ विवरित सुर्वत्सार ६ करा ७ उच्चाटनकुपाम, 'चण्डी' इति पाठे

कन्दीयति ॥ ९४ ॥ ज्यापि स्तनशैलदुर्गविषमे किं मानिनीना हृदि स्यातु वाञ्छति मान एष झगिति क्रोधादिवालोहित । उद्यन्दूरतरप्रसारितकर कर्षत्यसौ तत्क्षणात् स्फुलत्कैरवकोशनि सरदलिश्रेणीकृपाण शशी ॥ ९५ ॥ कैलासायितमद्रिभिर्विटपिभि श्वेतातपत्रायित मृत्स्नेन दधीयित जलनिधौ दुग्धायित वारिभि । मुक्ताहारलतायित व्रततिभि शङ्खायित श्रीफलै श्वेतद्वीपजनायित जनपदैर्जाते शशाङ्कोदये ॥ ९६ ॥ पीयूषाश्रपण जगत्त्रयदृगमालानलेखालयो विश्वोन्माथहुताशनस्य कुसुमासुद्घाटिनी कुञ्चिका । वीरेषु प्रथमा च पुष्पधनुषो रखा मृगाक्षीमुखश्रीणा च प्रतिराजनीजमधिकानन्दी नवश्चन्द्रमा ॥ ९७ ॥ दिग्बालाकरकन्दुक स्वरवधूसीमन्तमुक्तामणि कामक्षोणिपतेर्निहारवलभीनिर्व्यूहपारावत । हृद्व्योम्नि विकीर्णतारकमणि श्यामा वणिक्सुश्रुन स्फार स्फाटिकसपुट कुमुदिनीकान्तोऽयमुन्मीलति ॥ ९८ ॥ यातस्यास्तमनन्तर दिनकृतो वेषेण रागान्वित स्वैर शीतकर कर कमलिनीमालिङ्गितु योजयन् । शीतस्पर्शमुपेत्य सम्प्रति तया रुद्धे मुखाम्भोरुहे हासेनेव कुमुद्वतीवनितया वैलक्ष्यपाण्डूकृत ॥ ९९ ॥ एतत्कोकुटुम्बिनीजनमन शल्य चकोराङ्गनाचञ्चूकोटिकपाटयोर्घटितयोरुद्घाटिनी कुञ्चिका । दग्धस्यापि नवाङ्कुर स्मरतरोपाद्रीगसा प्रेयसीमानोद्दामगजाङ्कुशो विजयते मुग्ध सुधाशोर्वपु ॥ १०० ॥ क्षीराब्धेर्लहरीषु फेनधवलाश्वद्रोपलेषु स्रवत्पाथ सीकरिणो विकासिकुमुदक्रोडे रज पिञ्जरा । उन्मीलन्ति चकोरचञ्चुगहने छिन्नप्ररूढाश्रमरज्यन्त प्रियविप्रयुक्तरमणीगात्रे सुधांशो करा ॥ १०१ ॥ ध्वान्तौघे शितिकण्ठकण्ठमहसि प्राप्ते प्रतीचीमुख प्राचीमञ्चति किं च दुग्धलहरीमुग्धे विधोर्धामनि । एतत्कोकचकोरशोकरभसोल्लासोल्लसद्दृक्पातोभिर्दम्यचुम्बितमिव त्रैलोक्यमाभासते ॥ १०२ ॥ शीतांशुस्फटिकालवालवलयप्राग्गुल्फसत्कौमुदीवल्लीनूतनपल्लवायितमिव प्राप्य क्षण ताम्रताम् । चञ्चन्मत्तचकोरचञ्चुघटनाच्छिन्नाग्रकाण्डस्रुतक्षीरस्यन्दनिरन्तराप्लुतमिव श्वेत वियद्भासते ॥ १०३ ॥ य श्रीखण्डतमालपत्रति दिश प्राच्या स्मरक्ष्मापते पाण्डुच्छत्रति दन्तपत्रति नियलक्ष्मीकुरङ्गीदृश । केलिश्वेतसहस्रपत्रति रते किं च क्षपायोषित क्रीडाराजतशीधुपात्रति शशी सोऽयं जगन्नेत्रति ॥ १०४ ॥ ये पूर्वे यमुनाविसृत्वसुहृदो ये वतशमच्छदच्छायासाम्यभृतो मृणालतिकालावण्यभाजो ऽत्र ये । ये धाराम्बुविडम्बिन क्षणमयो ये तारहारश्रियस्तेऽमी स्फाटिकदण्डडम्बरजितो जाता सुधांशो करा ॥१०५॥ सद्य श्चन्दनपङ्कपिच्छिलमिव व्योमाङ्गण कल्पयन्नैरावतदन्तमुसलच्छेदोपमेयाकृति । उद्गच्छत्ययमच्छमौक्तिकलताप्रालम्बलम्बै करैर्मुग्धाना स्मरलेखवाचनकलाकेलिप्रदीप शशी ॥ १०६ ॥ कोकानाकुलयश्चकोरतरुणीर्वेक्ल्यमुन्मूलयन्नम्भोजानि निमीलयन्कुमुदिनीरुन्मीलयन्सर्वत । पान्थानाकुलता नयन्नुलसद्धूचेत समुल्लासयन्नस्तं याति दिवापति समुदय यात्येष दोषापति ॥ १०७ ॥ स्वर्गामामृतपानचारुचषक किं कामदेवाङ्गनाक्रीडाकन्दुक एष किं सुरनदीडिण्डीरपिण्ड किमु । किं छत्र स्मरभूपते किमु यश पुञ्ज पुरस्तादिद चेत सशयकारक समुदित शीतद्युतेर्मण्डलम् ॥१०८॥ पद्मिन्या दयितेऽनुधावति रुषा स्व पद्मिनीद्रोहिण भ्रान्त्या भीतमना दिगन्तमखिल चन्द्रो जगाहेऽम्बुधिम् । गाढे तत्र च तत्र विह्वलमसु कर्षन्ति तारा पतिं सोऽयं तच्छ्रमनारिकुङ्कुमरसै सिक्तोऽरुणो दृश्यते ॥१०९॥ मानावम्युदिते तथा मयि गते किं सान्ममप्रेयसी हा हेत्यस्तमित शशी रसवशादिन्दीवरिण्या स्मरन् । सोऽयं सप्रति नीलिमाङ्कितततनुस्तस्मादृरीदृश्यते ये ये यस्त्विल ससरति चरमे तद्रूपमेष्यति ते ॥ ११० ॥ आदायामृतपूर्णमर्कचषक शोणारविन्दप्रभे पाणाविन्दुवधूर्निलोक्य च पुनस्तस्मिन्नम श्यामिकाम् । चिक्षेपोपरि कोपत परिजनेऽसशोष्य दत्ता सुधेत्येन त शशिन प्रशसति जनस्तत्पाणिमुक्ताञ्जनम् ॥१११॥ आनीला करपल्लवैरपनयन्नच्छा तम कञ्चुकीमाशा सप्रति वासवीमनुसरन्क्षीणराग शशी । अस्याश्च स्तनसङ्गिनीमिव वहन्नङ्केन कस्तूरिकामालिङ्गत्ययमादरेण रजनीमर्धोर्मिधत्तारकाम् ॥ ११२ ॥ यत्पीयूषमयूखमालिनि तम स्तोमाय लीढायुषा नेत्राणाममृत्युहारिणि पुर सूर्योढ एवातिथौ । अम्भोजानि पराधि तन्निजमध दत्तेव तेभ्यस्ततो गोराङ्गीनदनोपमासुकृतमादत्ते पतिर्यज्वनाम् ॥ ११३ ॥ य प्राक्प्रत्यगगाग्रुदग्धि कुम्भ नामानि सविभ्रत ज्योत्स्नाजालझलज्झलामिरभितो लुम्पन्तमन्ध तम । प्राचीनादचलादितद्विजगतामालोकबीजाद्बहिर्निर्यान्त हरिणाङ्कमङ्कुरमिव द्रष्टु जनो जीवति ॥ ११४ ॥ स श्रीकण्ठकिरीटकुट्टिमपरिष्कारप्रदीपाङ्कुरो देव कैरवबन्धुरन्धतमसप्राग्भारकुक्षिंभरि । सस्कर्तानिजकान्तिमौक्तिकमणिश्रेणीभिरेणीदृशा गीर्वाणाधिपतेर्मुधारसवतीपौरोगव प्रोद्गात् ॥११५॥ प्राचीनाचलचुम्बिचन्द्रमणिभिर्निर्व्यूढपाद्य निर्जरैर्निर्यासैरडुभिर्निजेन वपुषा दत्तार्घलाजाञ्जलि । अन्त प्रौढकलङ्कतुच्छमभित सान्द्र परिस्तीर्यते विश्वादङ्कुरमग्नैशितस्तम सदोदृमिन्दोर्मह ॥ ११६ ॥ सायनायमुदेति वासरमणिश्चन्द्रो नु चण्डद्युतिर्द्वावपि कथम्म्बरे निमशनि स्वच्छान्तरीक्षे युत । हन्तेद निरणायि पान्थरमणीप्राणानिलाशाशया धावद्दोरविभावरीविषधरीभोगस्य भीमो मणि ॥११७॥ प्राणायामोपदेश सरसिरुहमुने

काक ॥ १४३ ॥ कृष्णवर्णहृदय सितदीप्ति दुर्धियं किल कलङ्किनमाहु । कृष्णवर्णसमुदीरणमात्रादेव यद्गलति दृश्यकलङ्क ॥ १४४ ॥ आयताग्रसितरश्मिनिबद्ध लाञ्छनच्छनिमपीरसदिव्यम् । चन्द्रकेतनमरुत्पटचक्र क्रीडयोत्सृजति किं खरबाल ॥ १४५ ॥ शम्बरारिरमृत विषगर्भे चन्द्रबिम्बकपटात्प्रयुनक्ति । यद्बहि सितमथासितमन्त प्रोषितान्दहति दर्शनमात्रात् ॥ १४६ ॥ अय पुर पार्वणशर्वरीश कि दर्पणोऽय रजनीरमण्या । यतस्तदीय प्रतिबिम्बमस्मिन्सलक्ष्यते लाञ्छनकैतवेन ॥ १४७ ॥ प्रदोषमातङ्गमनङ्गदेवस्तुङ्ग समारुह्य समागतोऽयम् । सिन्दूरिते तस्य सुधांशुकुम्भे विमङ्कुशो लक्ष्ममिषेण दत्त ॥ १४८ ॥ मम प्रिया कैरविणी करेण सतापयामास दिनाधिनाथ । इतीव दु खैर्विकल कलावान्पपौ विष लक्ष्ममिषेण सद्य ॥१४९॥ कलाधिनाथानयनाय साय धुमुद्वतीप्रेषित एष भृङ्ग । किमिन्दुनालिङ्ग्य सरागमङ्के कृत कलङ्कभ्रममातनोति ॥१५०॥ नेद नभोमण्डलमम्बुराशिर्नैताश्च तारा नवफेनभङ्गा । नाय शशी कुण्डलित फणीन्द्रो नासौ कलङ्क शयितो मुरारि ॥१५१॥ मधुव्रतौघ कुपित स्वकीयमधुप्रपापद्मनिमीलनेन । बिम्ब समाक्रम्य बलात्सुधांशो कलङ्कमङ्के ध्रुवमातनोति ॥१५२॥ अत्रान्तरे च कुलटाकुलवर्ल्मपातसजातपातक इव स्फुटलाञ्छनश्री । वृन्दावनान्तरमदीपयदंशुजालैर्दिक्सुन्दरीवदनचन्दनबिन्दुरिन्दु ॥ १५३ ॥ अच्छप्रकाशवति चन्द्रमसि प्रियेऽस्मिन्नाह्लादकारिणि सुधावति पूर्णबिम्बे । धाता विचिन्त्य मनसाखिलदृष्टिपात हर्तुं चकार निभृत कज्जलबिन्दुयोगम् ॥ १५४ ॥ दष्टे जगद्वपुषि कालभुजगमेन तत्रातिकारमिषमाविरभूद्विष यत् । सजातलक्ष्मणि तदिन्दुमणौ निपात्य ज्योत्स्नामये पयसि तत्क्षिपति स्म धाता ॥ १५५ ॥ दिग्व्यप्रतत्तिमिरचूर्णविशेषपूर्णादुद्धृत्य रोहुमयरत्नकविस्फुलिङ्गात् । कालेन पूर्वगिरिदुर्गजुषा प्रयुक्तो वृत्तोपलो विधुमिषात्पथिकान्हिनस्ति ॥ १५६ ॥ मन्थानभूमिधरमूलशिलासहस्रसघट्टनव्रणकिणं स्फुरतीन्दुमध्ये । छाया मृग शशक इत्यतिर्पामरोक्तिस्तेषां कथचिदपि तत्र हि न प्रसक्ति ॥ १५७ ॥ अनास प्रागल्भ्य परिणतरुच शैलतनये कलङ्को नैवाय विलसति शशाङ्कस्य वपुषि । अमुष्येय मन्ये विगलदमृतस्यन्दशिशिरे रतिश्रान्ता शेते रजनिरमणी गाढमुरसि ॥ १५८ ॥ ममयशबरो व्योमारण्ये सुधाशनमक्षिकामुविहित सुधाबिम्बव्रीडास्फुरत्पटल प्रति । कल्यति कलङ्कास्य धूम निपीड्य पुनश्च तत्किरति मधुरज्योत्स्नाक्षौद्र महीतलभाजने ॥१५९॥ रुचिभिरमितस्त्रोतोर्णैरिव प्रसरेणुभियदुडुभिरपिच्छेदै स्थूलैरिव भ्रियते नभ । प्रकृतिमलिनो मासद्विम्बो न्मृजाकृतकर्मणस्तदयमपि हि त्वष्टु कुन्दे भविष्यति चन्द्रमा ॥ १६० ॥ तरुणतमालकोमलमलीमसमेतदय कलयति चन्द्रमा किल कलङ्कमिति ब्रुवते । तदनृतमेव निर्दयविधुतुदन्तपदव्रणविरोपदर्शितमिद हि विभाति नभ ॥१६१॥ अङ्के केऽपि शशङ्किरे जलनिधे पङ्क परे मेनिरे सारङ्ग कतिचिच्च सजगदिरे भूच्छायमैच्छन्परे । इन्दोर्यद्दलितेन्द्रनीलशकलश्याम दरीदृश्यते तत्सान्द्र निशि पीतमन्धतमस कुक्षिस्थमाचक्ष्महे ॥ १६२ ॥ रङ्कावङ्कगते त्रिविष्टपवनीखेलत्कुरङ्गीगणे साक क्रीडनकौतुकेन रभसादुत्प्लुत्य याते दिवम् । तच्छायानुगताममूर्तिरधुना धर्तुं तमेव शशी मन्दव्यायतरश्मिजालकलित व्योम समारोहति ॥ १६३ ॥ काश्मीरेण दिहानमम्बरतल वामभ्रुनामाननद्वैराज्य विदधानमिन्दुदृषदा भिन्दानमम्भ सिरा । प्रत्युद्यत्पुरुहूतपत्तनवधूदत्तार्घदूर्वाङ्कुरक्षीबोत्सङ्गकुरङ्गमैन्दवमिद बिम्ब समुज्जृम्भते ॥१६४॥

## नायकागमनावस्थावर्णनम्

प्रत्यायान्त बहि कान्तमसमाप्तविभूषया । भालेऽञ्जन दृशोर्लाक्षा कपोले तिलक कृत ॥ १ ॥ आगच्छन्सूचितो येन येनानीतो गृह प्रति । प्रथम सखि क पूज्य किं काक किं क्रमेलक ॥ २ ॥ सज्जितसकलशरीरा क्षणे क्षणे मनसि किमपि गणयन्ती । उत्सवमिव त दिवस मनुते मुग्धा प्रियागमने ॥ ३ ॥ अभ्युन्नतस्तनयुगा तरलायताक्षी द्वारि स्थिता तदुपयानमहोत्सवाय । सा पूर्णकुम्भनवनीरजतोरणस्रक्सभारमङ्गलमयत्नकृत विधत्ते ॥ ४ ॥ आयातो दयित स्तवेति सहसा न श्रद्दधे भाषिन सख समुखता गतेऽपि सुमुखी भ्रान्ति निजा मन्यते । कण्ठाश्लेषिभुजेऽपि शून्यहृदया स्वप्नान्तर शङ्कते प्रत्यावृत्तिमिव प्रियस्य निभृता प्रत्येति शातोदरी ॥ ५ ॥ द्वारोपान्तनिरन्तरे मयि तया सौन्दर्यसारश्रिया प्रोल्लास्योरुयुग परस्परसमासक्त समासादितम् । आनीत पुरत शिरोंशुकमध क्षिप्ते चले लोचने वाचस्तत्र निवारित प्रसरण सकोचिते दोर्लते ॥ ६ ॥

## नायकागमने नायिका प्रति सखीवचनम्

नित्य मनोरथस्यापि सखि दुर्गम एव य । अमनस्याग्रत काम प्रत्यक्षेण विभाति स ॥ १ ॥ धैर्यमाधाय लज्जा च व्यपनीय विलासिनम् । समानयामि किं नैन दिष्ट्या स्वयमुपस्थितम् ॥ २ ॥ अगाढसर्सर्ग तरङ्गित दृशोर्भ्रुवोरलात

१ मध्यमाने २ मन्दर ३ चिह्नम् ४ मूर्ख ५ छायादीनाम्

१ कञ्चुकम् २ अयुतम् ३ सुरभि ४ घनम् ५ गाढध्यानम् ६ अत्यन्तसनिहिते

विकासि वेल्लनम्। विमारि रोमाञ्चितकञ्चुक तनोस्तनोति योऽसौ सुभगे तवागत ॥ ३ ॥ कलय वलय घम्मिल्लेऽस्मिन्निवेशय मल्लिका रचय निचय मुक्ताहार विभूषय सत्वरम्। मृगमदमषीपत्रालेप कुरुष्व कपोलयो सहचरि समायात प्रात स ते हृदयप्रिय ॥ ४ ॥

## नायकार्तिवर्णनम्

आयाते दयिते मरुस्थलभुवामुत्प्रेक्ष्य दुर्लङ्घ्यता गेहिन्या परितोषबाष्पकलिलामासज्य दृष्टि मुखे। दत्त्वा पीलुशमीकरीरकवल लोलाञ्चलेनादराद् उन्मृष्ट करभस्य केसरसटाभाराग्रलग्न रज ॥ १ ॥ थाला चन्दनमालिकाकिसलयप्रग्रथीनघ कुर्वेत श्रुत्वा वल्लभवाहनस्य रटित दासेरकस्याङ्गने। आक्रन्दात्सुहृदो धनाहुरुजन नासाप्रसङ्गादसुन्कान्त स्त्रीजनपात का सरमसत्कीर्त परावर्तयत् ॥२॥ किंचित्कम्पितपाणिकङ्कण रवै पृष्ट ननु स्वागत व्रीडानम्रमुखाब्जया चरणयोर्न्यस्ते च नेत्रोत्पले। द्वारस्थस्तनयुग्ममङ्गलघटे दत्त प्रवेशो हृदि स्वामिन्कि न तवातिथे समुचित सत्यानयानुष्ठितम् ॥ ३ ॥ दीर्घा वन्दनमालिका विरचिता दृष्ट्यैव नेन्दीवरै पुष्पाणा प्रकर स्मितेन रचितो नो कुन्दजात्यादिभि। दत्त स्वेदमुचा पयोधरभरेणार्घ्यो न कुम्भाम्भसा स्वैरेवावयवै प्रियस्य विशतस्तन्व्या कृत मङ्गलम् ॥ ४ ॥

## नायकस्य नायिकां प्रति प्रश्नः

कृशा केनासि त्व प्रकृतिरियमङ्गस्य ननु मे मलाधूम्रा कस्माद्गुरुजनगृहे पाचकतया। स्मरसि स्मान्कच्चिन्नहि नहि नहीत्येवमवदत्स्मरोत्कम्प बाला मम हृदि निपत्य प्ररुदिता ॥ १ ॥ कृशासीत्यालीना मलिनवमनासीत्यवनता चिरादुत्थासीति स्नानकलशवत्प्य प्ररुदिता। परिष्वक्ता यावत्प्रणयपदवीं कामपि गता तत सारङ्गाक्ष्या हृदयसदने लीनममवत् ॥ २ ॥ अङ्गानामतितानव कुत इद कस्मादकस्मादये मुग्धे पाण्डुकपोलमाननमिति प्राणेश्वरे पृच्छति। तन्व्या सर्वमिद स्वभावत इति व्याहृत्य पक्ष्मान्तरव्यापी बाष्पभरस्तया चलितया नि श्वस्य मुक्तोऽन्यत ॥ ३ ॥

## प्रणयकलहे नायिकानुनयः

अनिर्वर्णोपभोगस्य रूपस्य मृदुन कथम्। कठिन खलु ते चेत शिरीषस्येव बन्धनम् ॥ १ ॥ किं त्वा भणामि विच्छेद दारुणायासकारिणि। काम कुरु वरारोहे देहि मे परिरम्भणम् ॥ २ ॥ मयि ते पादपतिते किंकरत्वमुपागते। प्रिये कामातुर कोप का ते कोऽन्योऽपनेष्यति ॥ ३ ॥ दाक्षिण्य नाम बिम्बोष्ठि नायकानां कुलव्रतम्। तन्मे दीर्घाक्षि ये प्राणास्ते त्वदाशानिबन्धना ॥ ४ ॥ मुखमिन्दुर्यथा पाणि पल्लवेन सम प्रिये। वाच सुधा इवोष्ठस्ते बिम्बतुल्यो मनोऽश्मवत् ॥ ५ ॥ सोढुमलमस्मि नाह सुन्दरि मन्दागमाद्विलम्ब ते। पञ्चशरास्त्रहत मा सञ्जीवय चारुगात्रि परिरम्भे ॥ ६ ॥ सकृदिव समर्प्य बाले मम हस्ते मदनवमतप्तस्य। अपहरसे कुचकुम्भ तृषितकरादमृतकुम्भमिव ॥ ७ ॥ अपराधी नूनमह प्रसीद रम्भोरु विरम संरम्भात्। सेव्यो जनश्च कुपित कथ नु दासो निरपराध ॥ ८ ॥ क्षामयमाबद्धाञ्जलि दासजनस्तमिममर्थमर्थयते। स्वपिहि मया सह सुरतव्यतिकरखिन्नेन मा मैवम् ॥ ९ ॥ सरले साहसराग परिहर रम्भोरु मुञ्च संरम्भम्। विरस विरहायास वोढु तव चित्तमसह मे ॥ १० ॥ क्षीण क्षीणोऽपि शशी भूयो भूयोऽभिवर्धते नित्यम्। विरम प्रसीद सुन्दरि यौवनमनिवर्ति यात तु ॥ ११ ॥ अङ्गानि खेदयसि किं शिरीषकुसुमपरिपेलवानि मुधा। अयमीहितकुसुमाना सम्पादयिता तवास्ति दासजन ॥ १२ ॥ मधुधारेव न मुञ्चसि मानिनि रूक्षापि माधुरीं सहजाम्। कृतमुखभङ्गापि रस ददासि मम निम्नगा यथाम्भोधे ॥१३॥ विरामम्मेनानलयाऽतितोपात्तयापि रोषारुणितेन दृष्टि। निशापति क्षिप्यति पश्चिमाशामये किमाशा विफलीकरोषि ॥ १४ ॥ यदि प्रिये वेत्सि तव प्रभु मामनन्यसाधारण दासमङ्घ्र्यो। तदद्य यशो मम पात्रमस्तु स्वयग्रहाश्लेषमहोत्सवानाम् ॥१५॥ उत्तरङ्गय कुरङ्गलोचने लोचने घनकलङ्गनमोचने। अस्तु सुन्दरि कलिन्दनन्दिनीवीचिडम्बरगभीर सम्भ्रमम् ॥ १६ ॥ शशिमुखि तव भाति भङ्गुरभ्रूर्युवजनमोहकरालकालसर्प। यदुदितभयभञ्जनाय यूना त्वदधरसीधुसुधैव सिद्धमन्त्र ॥ १७ ॥ त्वयि निबद्धरते प्रियवादिनि प्रणयभङ्गपराङ्मुखचेतसि। कमपराधलव मयि पश्यसि त्यजसि मानिनि दासजन यत ॥ १८ ॥ विसृज सुन्दरि सगमसाध्वस ननु चिरात्प्रभृति प्रणयोन्मुखे। परिगृहाण गते सहकारता त्वमतिमुक्तलताचरित मयि ॥ १९ ॥ मोहान्मया सुतनु पूर्वमुपेक्षितस्ते यो बाष्पबिन्दुरधर परिबाधमान। त तावदाकुटिलपक्ष्मविलग्नमद्य कान्ते प्रमृज्य विगतानुशयो भवामि ॥ २० ॥ मुग्धे विधेहि मयि निर्दयदन्तदश दोर्वल्लिबन्धनिबिडस्तनपीडनानि। चण्डि त्वमेव मुदमञ्चय पञ्चबाणचण्डालकाण्डदलनादसव प्रयान्ति ॥२१॥ मा मा मानाध्वगमपेहि विलोलनेत्रे दासे जन किमिति सम्भ्रमकातराणि। किं मुच्यत बत मया चिरकाङ्क्षितस्य मध्ये यथाति परिरम्भसुखस्य भङ्ग ॥ २२ ॥ किं सीदसे

१ कुलव्रतम् २ स्तनभारनम्रस्य प्रसिद्ध- २१ सु. ८ मी

१ कोपात् २ कोपम् ३ नखानुगानि

क्लमविमर्दिभिरार्द्रवातं संचालयामि नलिनीदलतालवृन्तम् । अङ्के विधाय चरणावुत पद्मताम्रौ संवाहयामि करभोरु यथासुखं ते ॥ २३ ॥ आताम्रतामपनयामि विलक्ष एष लाक्षाकृतां चरणयोस्तव देवि मूर्ध्ना । कोपोपरागजनितां तु मुखेन्दुबिम्बे हर्तुं क्षमो यदि परं करुणा मयि स्यात् ॥२४॥ इन्दीवरेण नयनं मुखमम्बुजेन कुन्देन दन्तमधरं नवपल्लवेन । अङ्गानि चम्पकदलैः स विधाय वेधाः कान्ते कथं घटितवानुपलेन चेतः ॥ २५ ॥ किं मुक्तमासनमलं मयि सम्भ्रमेण नोत्थातुमित्थमुचितं मम तन्वि मध्ये । दृष्टिप्रसादविधिमानहृतो जनोऽयमत्यादरेण किमिति क्रियते विलक्ष ॥२६॥ सुभ्रालकं स्मितपराजितचन्द्रलेखं दृग्लीलया कुवलयश्रियमाददानम् । एतन्मुखं त्रिदिवसदामपि दुर्निरीक्ष्यं तन्वङ्गि मामिव मुधा किमधः करोषि ॥ २७ ॥ लावण्यकान्तिपरिपूरितदिङ्मुखेऽस्मिन्स्मेरेऽधुना इव मुखे तरलायताक्षि । क्षोभं यदेति न मनागपि तेन मन्ये सुव्यक्तमेव जलराशिरयं पयोधिः ॥ २८ ॥ किं ते निसर्गरुचिरौ चरणौ कराभ्यां संवाहयामि नयने च तवाञ्जनेन । किं रञ्जयामि किमु ते स्तनयोर्विचित्रां पत्रावलीं विरचयाम्यचिरेण तन्वि ॥ २९ ॥ सुतनु जहिहि मौनं पश्य पादानतं मां न खलु तव कदाचित्कोप एवंविधोऽभूत् । इति निगदति नाथे तिर्यगामीलिताक्ष्या नयनजलमनल्पं मुक्तमुक्तं न किंचित् ॥

सुतनु जहिहि मौनं सुभ्रु वाचो जडत्वं प्रणयिनि मयि कोपं किंकरे किं करोषि । अथ यदि तव चित्ते सापराधोऽस्मि बाले निजभुजयुगवल्लीबन्धनं मा विधेहि ॥ ३० ॥ किमपि किमपि शङ्के मङ्गलेभ्यो यदन्यद्विरमतु परिहासश्चण्डि पर्युत्सुकोऽस्मि । कलयसि कलितोऽहं वल्लभे देहि वाचं भ्रमति हृदयमन्तर्विह्वलं निर्दयासि ॥ ३१ ॥ यदिदमगणयित्वा दुर्वहं श्रोणिभारं मदभिसरणलोभात्प्रस्थितं पद्मताम्रम् । अयमहमभिवाञ्छाम्यम्बुजस्यैव पांसु सुमुखि पदतलं ते चूडितुं चुम्बितुं च ॥ ३२ ॥ वितरय कुचयोस्त्वद्दर्शनोपक्रमाणां मदनशररुजानां शान्तये मामकीनाम् । सकृदपि परिरम्भं सुभ्रु दोर्मूलकूलंकषघनपरिणाहख्यातयोरेतयोस्ते ॥ ३३ ॥ चरणकमलदासस्त्वेष संकल्पसङ्गे सुमुखि यदभिधत्से त्वं बलात्कारधूर्तम् । प्रसभविधृततैर्यं पीडयाम्यारमनैव द्विरद इव सरोजं पाणिमापाटलं ते ॥ ३४ ॥ विकिर धवलदीर्घापाङ्गसंसर्पि चक्षुः परिजनपथवर्तिन्यत्र किं संभ्रमेण । स्मितमधुरमुदारं देवि मामालपोच्चैः प्रभवति मम पाण्योरञ्जलिः सेवितुं त्वाम् ॥ ३५ ॥ परिलुठति ललाटे मङ्गुर भ्रूलता किं मदनजयपताकाविभ्रमं बिभ्रतीयम् । स्फुरति च किमकाण्डे चण्डि बिम्बाधरोऽयं मृदुपवनविधूतोऽभिद्रवपल्लवश्च ॥ ३६ ॥ मुहुर्मुहुरवेक्षणं सरसमञ्जसा सञ्जय समुच्चलत्तरङ्गिणि प्रचुरनर्मकर्मस्पृहा । मुहुर्निविड नम्रता परिजनव्यपेक्षापि नो कुतः सुमुखि शिक्षिता कथय कोपरीतिस्त्वया ॥ ३७ ॥ तरलय दृशोऽङ्गने रचय बन्ध्यमिन्दीवरं क्षणं वपुरपावृणु स्पृशतु काञ्चनं कालिमा । स्फुटीकुरु रदच्छदं व्रजतु विद्रुमः श्वेततामुदञ्चय मुखं मनाग्भवतु लज्जितश्चन्द्रमाः ॥ ३८ ॥ उदञ्चय दृगञ्चलं चलतु चञ्चरीकोच्चयः प्रपञ्चय वचःसुधां श्रवणपालिमालिङ्गतु । भ्रुवं नटय नागरि त्यजतु मन्मथः कार्मुकं मुखं च कुरु संमुखं व्रजतु लाघवं चन्द्रमाः ॥ ३९ ॥ पुरोदिगनुरागिणी तदपि नानुरागोदयः कृशोदरि निशा कृशा तदपि ते न मानः कृशः । प्रसन्नमिदमम्बरं तदपि न प्रसन्नं मनो ननाद चरणायुधस्तदपि मौनमालम्बसे ॥ ४० ॥ कृतो दूरादेव स्मितमधुरमभ्युद्गमविधिः शिरस्याज्ञा न्यस्ता प्रतिवचनमुच्चैः प्रणमितम् । न दृष्टेः शैथिल्यं मिलत इति चेतो दहति मे निगूढान्तःकोपा कठिनहृदये संवृतिरियम् ॥ ४१ ॥ गतप्राया रात्रिः कृशतनु शशी सीदत इव प्रदीपोऽयं निद्रावशमुपगतो घूर्णत इव । प्रणामान्तो मानस्त्यजसि न तथापि क्रुधमहो कुचप्रत्यासत्त्या हृदयमपि ते चण्डि कठिनम् ॥ ४२ ॥ इदं दूर्वाकाण्डद्युतिमुषि कपोले कतिपयैः श्रमाम्भोभिः कीर्णे सहजबकुलामोदसुभगम् । समाकाङ्क्षे ताम्राधरमनुमनुष्य प्रियतमे मनोज्ञं ते पातुं मुखकमलमाघ्रातुमथवा ॥ ४३ ॥ प्रसादे वर्तस्व प्रकटय मुदं संत्यज रुषं प्रिये शुष्यन्त्यङ्गान्यमृतमिव ते सिञ्चतु वचः । निधानं सौख्यानां क्षणमभिमुखं स्थापय मुखं न मुग्धे प्रत्येतुं प्रभवति गतः कालहरिणः ॥ ४४ ॥ प्रसीदेति ब्रूयामिदमसति कोपे न घटते करिष्याम्येवं नो पुनरिति भवेदभ्युपगमः । न मे दोषोऽस्तीति त्वमिदमपि हि ज्ञास्यसि मृषा किमेतस्मिन्वक्तुं क्षममिति न वेद्मि प्रियतमे ॥४५॥ कृतेऽप्याज्ञाभङ्गे कथमिव मया ते प्रणतयो धृताः स्मित्वा हस्ते विसृजसि रुषं सुभ्रु बहुशः । प्रकोपः कोऽप्यन्यः पुनरयमसीमाद्य गुणितो वृथा यत्र स्निग्धाः प्रियसहचरीणामपि गिरः ॥४६॥ कपोले पत्राली करतलनिरोधेन मृदिता निपीतो निःश्वासैरयममृतहृद्योऽधररसः । मुहुः कण्ठे लग्नस्तरलयति बाष्पः स्तनतटं प्रियो मन्युर्जातस्तव निरनुरोधे न तु वयम् ॥४७॥ सुतनु हृदयात्प्रत्यादेशव्यलीकमपैतु ते किमपि मनसः संमोहो मे तदा बलवानभूत् । प्रबलतमसामेवंप्राया शुभेषु हि वृत्तयः स्रजमपि शिरस्यन्धः क्षिप्तां धुनोत्यहिशङ्कया ॥ ४८ ॥ परिहर कृतातङ्के शङ्कां त्वया सततं घनस्तनजघनयाक्रान्ते स्वान्ते परानवकाशिनि । विशति वितनोरन्यो धन्यो न कोऽपि ममान्तरं स्तनभरपरीरम्भारम्भे विधेहि

१ नीलोत्पलेन २ पाषाणेन तत्सदृशकठिनत्वात् ३ अभिलाष-

१ अत्यन्तकोपने २ निरावृतनिद्रुमम् ३ माघ्णम् ४ सर्पमालाम्

सुशयस्तरुणीनामुन्मिमील विशद विषमेषु ॥ १५ ॥ कान्तया सपदि कोऽप्युपगूढ प्रौढपाणिरपनेतुमियेष । सहतस्तातिरस्कृतदृष्टिर्भ्रष्टमेव न दुकूलमपश्यत् ॥ १६ ॥ आहत कुचतटेन तरुण्या साधु सोढमधुनैनि पपात । शुष्यत प्रियतमोरसि हारात्पुष्पवृष्टिरिव मौक्तिकवृष्टि ॥ १७ ॥ सीत्कृतानि मणित करुणोक्ति स्निग्धमुक्तमल मर्थवचासि । हासभूषणरवाश्च रमण्या कामसूत्रपदतामुप जग्मु ॥ १८ ॥ उद्धतैर्निभृतमेकमनेकैश्छेदन मृगदृशा मनिरामै । श्रूयते स्म मणित कलकाचीनूपुरध्वनिभिरक्षतमेन ॥ १९ ॥ ईदृशस्य भवत कथमेतल्लाघव मुहुरतीव रतेषु । क्षिप्तमायतमदर्शयदुर्व्यो काचिदाम जननस्य महत्त्वम् ॥ २० ॥ प्राप्यते स्म गतचित्रकचित्रैश्चित्रमार्द्रनखलक्ष्म कपोले । दध्रिरेऽथ रभसच्युतपुष्पा स्वेदबिन्दुकुसुमान्य लकान्ता ॥ २१ ॥ यद्यदेव रुरुचे रुचिरस्य सुभ्रुवो रहसि तत्तदकुर्वन् । आनुकूल्यिकतया हि नराणामाक्षिपन्ति हृदयानि तरुण्य ॥ २२ ॥ प्राप्य मन्मथरसाद तिभूमिं दुर्वहस्तनभरा सुरतस्य । शश्रमु श्रमजलार्द्रललाटश्लिष्टकेशमसितायतनेत्र्य ॥ २३ ॥ पत्यु प्रवृत्तस्य रतौ जिगीषावचो निशम्याय न किंचिदूचे । कला वती किं तु निहस्य तस्य कपोलयो स्वेदमपाचकार ॥ २४ ॥ उरोरुहाम्भोरुहदर्शनाय निमुञ्चत कञ्चुकबन्धनानि । आनन्दनीराकुललोचनस्य प्रियस्य जातो विपुल परिश्रम ॥ २५ ॥ स्वामिन्नमो प्रिय गृहाण परिष्वजस्व किं किं शठोऽस्यकरुणोऽसि सुखोचितोऽसि । हा दुर्नय स्खलमल विरमेति वाच क्षीणा भवन्ति सुरते प्रणयानुकूला ॥ २६ ॥ मत्तमकुम्भपरिणाहिनि कुङ्कुमार्द्रे कान्ता पयोधरयुगे रतिखेदखिन्न । वक्षो निधाय भुजपञ्जरमध्यवर्ती धन्य क्षपा क्षपयति क्षणलब्धनिद्र ॥ २७ ॥ कान्ते तथा कथमपि प्रथितं मृगाक्ष्या चातुर्यमुद्धतमनोभवया रतेषु । तत्कूजिता यनुवदद्भिरनेकवारं शिष्यायित गृहकपोतशतैर्यथास्या ॥२८॥ आमीलितालसविवर्तिततारकाक्षी मुग्धकण्ठकपनदरलस्थबाहुवल्लीम् । प्रस्वेदवारिकणिकाचितगण्डबिम्बां संस्मृत्य तामनिशमेति न शान्तिमन्त ॥ २९ ॥ रतिरभसजनिता तथा तथा तान्नुचान्तश्रमरुरुपामा नाभिदेशेऽप्यधो वा । स्मितमधुरमुखीनां हीणनेत्रोत्पलानामधरमधु वधूनां भाग्यवन्त पिबन्ति ॥ ३० ॥ अभिविततगुणदु रुण निर्गुण वल्गु किंचित्क्षमतिरिह कश्चिन्मोक्ष इत्याचचक्षे । मम तु मतमनङ्गस्मेरतारुण्यपूर्णमदकलमदिराक्षीनीविमोक्षो हि मोक्ष ॥३१॥ अनिलचुल्लकालीमरिष्टता गगद्वारा निमदति निनिगढानन्दहिन्दोलि

चेत । सुदति वदनि पुण्यै कस्य धन्यैर्मनोजप्रसरमसदृदेतच्चापल लोचनस्य ॥ ३२ ॥ भवत्यास्खलान्त कृतकपटकण्डूतिपिहितस्मित याते गेहाद्बहिरवहितालीपरिजने । प्रियास्य पश्यन्त्या स्मरशरसमाकूतसुभग सलज्जाया लज्जा व्यगमदिव दूर मृगदृश ॥ ३३ ॥ दुकूल दोर्मूलव्यपायिनि परीरम्भरभिके हरत्यम्भोजाक्षी निभृतनिभृत नम्रवदना । प्रियाश्लेषद्वेषिण्यपसरतु लज्जा स्फुटमिति स्मितक्षीरेणेव स्तनकलशयुग्मं क्षपयति ॥ ३४ ॥ चिरविरहिणो रत्युत्कण्ठाकृशीकृतगात्रयोर्नवमिव जगज्जात भूयश्चिरादभिनन्दतो । कथमपि दिने दीर्घे याते निशामधिरूढयो प्रसरति कथा [illegible]ी यूनोर्यथा न तथा रति ॥ ३५ ॥ दृशा सपदि मीलित दशनरोचिषा निर्गत करेण परिवेपित पर्यर्कपार्श्वदितम् । प्रिये समदयोषिता ननु निरुणध्यमानज्वरे पलायनकातरा निमिव कुर्वता साधव ॥ ३६ ॥ नैषा वेग मृदुतरतनुस्तानरीन विसोढु शक्ता नेना चपल नितरा खेदयेन्दीवराक्षीम् । रत्यभ्यास विदधत इति प्राणनाथस्य गत्वा कर्णोपान्ते निभृतनिभृत नूपुरं शशंसीव ॥ ३७ ॥ आयाते दयिते मनोरथशतैर्नीते कथंचिद्दिन वैदग्ध्यापगमाज्जडे परिजने दीर्घां कथां कुर्वति । दष्टास्मीत्यभिधाय सत्वरपद व्याधूय चीनांशुक तन्वङ्ग्या रतिकातरेण मनसा नीत प्रदीप शमम् ॥ ३८ ॥ गाढालिङ्गनवामनीकृतकुचप्रोद्भूतरोमोद्गमा सान्द्रस्नेहरसातिरेकविगलच्छ्रीमन्नितम्बाम्बरा । मा मा मानद माति मामलमिति क्षामाक्षरोल्लापिनी सुप्ता किं नु मृता नु किं मनसि मे लीना विलीना नु किम् ॥ ३९ ॥ दोर्भ्यां संयमित पयोधरभरेणापीडित पाणिजैराविद्धो दशनै क्षताधरपुट श्रोणीतलेनाहत । हस्तेनानमित प्रधरसुधास्यन्देन संमोहित कान्त कामपि तृप्तिमाप तदहो कामस्य वामा गति ॥ ४० ॥ ईषन्मीलितदृष्टिमुग्धहसितं सीत्कारधारावशादव्यक्ताकुलकेलिकाकुविकसद्दन्तांशुधौताधरम् । श्वासोत्कम्पिपयोधरोपरिपरिष्वङ्गस्फुरद्दृष्टो हर्षोत्कर्षविमुक्तनि सहतनोर्धन्यो धयत्याननम् ॥ ४१ ॥ स्मिन्मण्डलमेतदथ विगलित सम्भाव्यमिद तम प्रागेव प्रथमान केतककलिकागौराधिरूढ च स्थितम् । शान्त कुण्डलताण्डव कुवलयद्वन्द्व तिरो मीलित वीत विद्रुमकान्तिभि नहि ततो जाने किमासीदिति ॥ ४२ ॥ गाढाश्लेषविपीडनाधिजनितामालोक्य हारावली म्लातुं हन्त भिया दृशा निबिडया नीव्यापि न व्यापृतम् । विस्तारव्यवधानखेदगहनया काठिन्य पीनामना कापि मानिनयो समागमसुख यूनोर्मनोमन्मथा ॥ ४३ ॥ हास्यस्फुटानि कङ्कण निरवनि सङ्गुरी स्मरदनि ध्यान्त धावति सीत्करोति रजनीजानियदी मन्यते ।

१ वेतालविभट्ट-

काञ्ची क्षुभ्यति काञ्चनक्षितिधरे किं च क्षतं चञ्चति प्रारम्भे मदनाहवस्य विजयी देवो मनोभूरभूत् ॥ ४४ ॥ सिन्दूरं रविमिन्दुमाननमसौ धम्मिल्लराहुस्त्वयं यद्गाढं ग्रसतीव तत्प्रियतमे निर्णीतमौत्पातिकम् । चोले चञ्चलता भविष्यति मुहुः स्रात्कुन्तले कृपण नीवी श्लथति न स्थिरा समुदयेदङ्गे महान्सगरः ॥ ४५ ॥ पश्यन्तीं परिणामकेलिषु मुहुर्निःशङ्कमालिङ्ग्य तां प्रोत्कूजत्कलमप्यहीषमधरं सर्धावती साप्यभूत् । नाहं वेद्मि न वेत्ति सा च दयिता तत्रावयोर्वेष्टितं शय्या वेत्ति न वेत्ति वा स तु कुतः सङ्ग्रामलोलः स्वरः ॥ ४६ ॥ प्रत्यूहः पुलकाङ्कुरेण निविडाश्लेषे निमेषेण च क्रीडाकूतविलोकितेऽधरसुधापाने कथाकेलिभिः । आनन्दाधिगमेन मन्मथकलायुद्धेऽपि यस्मिन्नभूदुद्भूतः स तयोर्बभूव सुरतारम्भः प्रियम्भावुकः ॥ ४७ ॥ ईषत्कम्पपयोधरं गुरुकटिप्रौढप्रहाराद्भुतं खिद्यद्बालमनेकहासरसं सरम्भमन्दव्यथम् । धारासारसुरप्रहारसुभगं सदश्यमानाधरं किंचिद्वृत्तनितम्बदेशनखरं धन्यो रतं सेवते ॥ ४८ ॥ त्वं मुग्धाक्षि विनैव कञ्चुलिकया धत्से मनोहारिणीं लक्ष्मीमित्यभिधायिनि प्रियतमे तद्वीटिकासंस्पृशि । शय्योपान्तनिविष्टसस्मितसखीनेत्रोत्सवानन्दितो निर्यातः शनकैरलीकवचनोपन्यासमालीजनः ॥ ४९ ॥ कोकः स्तोकविमुक्तमौक्तिकभरो निःस्पन्दनिन्दीवरं चापं चापलवर्जितं हिमकरक्रोडे तमः क्रीडति । वातः कातरयत्यपाकृतरसं बन्धूकमेतावती वार्ता क्वापि कदापि पाणिपिहिता कस्यापि वा तिष्ठति ॥ ५० ॥ धम्मिल्लो भङ्गमेतु प्रविशतु तिलकं केशपाशान्धकारं पत्राली गण्डपालीं त्यजतु च विवरं कर्णयोर्गन्तुकामा । यायायाः कान्तदन्तक्षततततिसहने एक एवाधरोऽसौ वीरं वामाहवेऽस्मिन्निति वदति मुहुर्नूपुरं क्वाणभङ्ग्या ॥ ५१ ॥

---

## विपरीतरतक्रिया

प्रशान्ते नूपुरध्वाने श्रूयते मेखलाध्वनिः । कान्ते नूनं रतश्रान्ते कामिनी पुरुषायते ॥ १ ॥ पततु तवोरसि सततं दयिताधम्मिल्लमल्लिकानिकरः । रतरसरभसवशप्रह्वहुलिता लकलहरीगलितः ॥ २ ॥ विपरीतमविपरीतं यद्गतमन्यत्तदेव विपरीतम् । तरुमारोहति लतिका नारोहति च लतिकां तरुः क्वापि ॥ ३ ॥ साक्षादभूत्स्वयमूरय शुक्तास्तिमिरनिकरभरा । भगनाम शीतरोचिस्तनपाठं मेखला विदधे ॥ ४ ॥ वियति विलोलति जलदः स्खलति विधुः श्रवलति कूजति कपोतः । निष्पतति तारकाततिरा दोलति वीचिरमरवाहिन्या ॥ ५ ॥ स्थगयति तमः शशाङ्कं चलति गिरिः स्रवति तारकापटलम् । कथयति मन्ये काञ्चीपुरसीमनि किमपि संक्षोभम् ॥ ६ ॥ मुक्ता पतन्ति भूमौ बाला कलयति केवलं मुक्तिम् । चुम्बत्यम्बरमवनिं विपरीते किं न विपरीतम् ॥७॥ वल्गत्कुचं व्याकुलकेशपाशं स्विद्यन्मुखं स्वीकृतमन्दहासम् । पुण्यातिरेकात्पुरुषा लभन्ते पुमांसमम्भोरुहलोचनानाम् ॥ ८ ॥ वक्त्रस्यन्दिस्वेदबिन्दुप्रबन्धैर्दृष्ट्वा भिन्नं कुङ्कुमं कापि कण्ठे । पुंस्त्वं तन्व्या व्यञ्जयन्ती वयस्या स्मित्वा पाणौ खड्गरेखां लिलेख ॥ ९ ॥ मधुरानम्रमुखसप्रवालचलद्धेमाचलकान्तिभिर्जटालम् । विधुनि पतदन्धकारजालं शुभकालं क्व पुनर्विलोकयाम ॥ १० ॥ अभिमुखपतयालुभिर्ललाटश्रमसलिलैरपनीतपत्त्रलेखः । कथयति पुरुषायितं वधूनां मृदितहिमद्युतिनिर्मलः कपोलः ॥ ११ ॥ तन्नास्ति कारयति यन्न मनोभवस्य सा शक्तिरप्रतिहता भुवने तथा हि । उद्वाह्य पीवरपयोधरमण्डलाग्रं वल्गन्ति यत्पुरुषवत्प्रमदा अपीह ॥ १२ ॥ मुग्धे तवास्ति दयिता पुरुषो भव त्वमित्युक्तया नहि नहीति शिरो विधूय । स्वस्यास्करात्प्रियकरे वलयं क्षिपन्त्या वाचं विनाभ्युपगमः कथितो मृगाक्ष्या ॥१३॥ चीरायितेषु मृगशावविलोचनानां कण्ठोदितान्यचरमं कलकूजितानि । आम्रेडयद्भिरथ सौधगतैः कपोतैः शङ्के गृहीत इति संप्रति शिष्यभावः ॥ १४ ॥ तमःस्तोमं सोमं गिलति वमतीवोडुनिकरं रथाङ्गद्वन्द्वेऽस्मिन्नमरतटिनी खेलति मुहुः । लतायामुत्कम्पो मदनवसतीकाञ्चनगिरिर्निपर्येति प्रायो रतिपतिमते सर्वमधुना ॥ १५ ॥ विहायसि विहारिणी भवतु नाम सौदामिनी सुमेरुशिखरपदं पततु नाम मन्दाकिनी । परं तदिदमद्भुतं यदयमेत्य भूमीतलं नमन्नमृतदीधितिः कमलसारमाकर्षति ॥ १६ ॥ प्रारब्धे रतिकेलिसंकुलरणारम्भे तया साहसप्रायं कान्तजयाय किंचिदुपरि प्रारम्भि तत्संभ्रमात् । खिन्ना येन कटीतटी शिथिलिता दोर्वल्लिरुत्कम्पितं वक्षो मीलितमक्षि पौरुषरसः स्त्रीणां कुतः सिध्यति ॥ १७ ॥ आलोलामलकावलीं सकुसुमां बिभ्रच्चलत्कुण्डलं किंचिन्मृष्टविशेषकं तनुतरैः स्वेदाम्भसः शीकरैः । तन्व्या यत्सुरतान्ततान्तनयनं वक्त्रं रतव्यत्यये तत्त्वां पातु चिराय किं हरिहरब्रह्मादिभिर्दैवतैः ॥ १८ ॥ प्रारब्धे विपरीतनामनि रते सर्वे तदाभूत्क्षणात्क्षामाङ्ग्या विपरीतमेव कुटिला मुक्ताः सुवृत्ता अपि । मुक्ता निपतिता भवन्ति तरलास्तौ चाचलौ चेत्स्तनौ सीदन्ति श्रुतिपारगाः सुमनसः कान्ता नु कान्तायते ॥ १९ ॥ निःशेषं व्यपनीय नीविवसनं मञ्जुक्वणन्मेखलं क्रीडादोलनखिन्नमध्यगतिकं किंचित्प्रकम्पस्तनम् । उपलुण्ड

---

१ केशकलापरूपः २ मुखरूपः ३ कण्ठरूपः ४ मुक्ताकलापरूपाः ५ त्रिवलिरूपाः

१ धाराभि

लताण्डन च रुचिर विक्रम्य कान्तोपरि क्लान्ता वक्षसि कामिना मुकुलितप्रान्ताक्षिक शेरते ॥ २० ॥ प्रागलभ्य पुरुषायिते मम पुर पश्येति सनद्धया तन्व्या ताम्यदुरोजयापि सुचिरं विक्रम्य रम्य तया । श्रान्ता वक्षसि मे निपत्य च पुन सापत्रप सस्मित साकूत च समीक्षित मृगदृशा यच रकथ कथ्यते ॥ २१ ॥

---

## सुरतनिवृत्तिः

सन्यासमकृत कार्यो जह्रौ कलत्र दुकूलमबलाया । तल्पाज रागमधरो मुक्तिमुरीचक्रिरे चिकुरा ॥ १ ॥ सुतनु श्रुतिसेवनतो मन्ये नयन निरञ्जन जातम् । मुग्धा स्नेहास्फुरी मुक्ता मुक्ति कथ प्राप ॥ २ ॥ स्त्रिमालसनयनान्त स्त्रिमालिकलसत्कुन्तलस्तबकम् । वदनमनलसतिलक मदन नेदयति दययति धृतिं मे ॥ ३ ॥ पपात मेरो सुरसिन्धु धारा ववर्ष तारागणमन्धकार । बभूव भृङ्गावलिरप्यकम्पा शशाम शम्पालतिकाविलास ॥ ४ ॥ पपात गङ्गा हरमौलिसङ्गादन्ध तमोभूतमपेतबन्धम् । तडिल्लता चपलताम हासीदसन्दमासीदरविन्दयुग्मम् ॥ ५ ॥ कामसगरविधौ मृगीदृश प्रौढपौरुषधरे पयोधरे । स्वेदराजिरुदियाय सर्वत पुष्पवृष्टिरिव पुष्पधन्वन ॥ ६ ॥ सगतामिहचितैश्चलितापि प्रागमुच्यत चिरेण सखीव । भूय एव समगस्त रतान्ते दीर्घभूमिरसहा विरहस्त ॥ ७ ॥ प्रेक्षणीयकमिव क्षणमास ह्रीविभङ्गुरविलोचनपाता । सम्भ्रमद्रुतगृहीतदुकूलच्छाय माननपुष सुरतान्ता ॥ ८ ॥ अप्रभूतमतनीयसि तन्वी काचिपाणि पिहितैकतरोरु । क्षौममाकुलकरा विचकर्ष कान्तपाणमभीष्टतमेव ॥ ९ ॥ मृष्टचन्दनविशेषकभक्तिभ्रष्टभूषणङ्कर्षितमाल्य । सापराध इव मण्डनमासीदात्मनैव सुदृशामुपभोग ॥ १० ॥ योषित पतितकाञ्चनकाञ्ची मोहनातिरभसेन नितम्बे । मेखलेव परित स्म विचित्रा राजते नवनखक्षतलक्ष्मी ॥ ११ ॥ भातु नाम सुदृशां दशनाङ्क पाटलो धवलगण्डतलेषु । दन्तवाससि समानगुणश्री सम्मुखोऽपि परभागमवाप ॥ १२ ॥ सुभ्रुवामधिपयोधरपीठ पीडनैस्त्रुटितयत्नपि पत्यु । मुक्तमौक्तिकलघुर्गुणशेषा हारयष्टिरभवद्गुरुरेव ॥ १३ ॥ विभ्रमार्थमुपगूढमजस्र यत्प्रिये प्रथमरत्नवसानो । योषितामुचितमप्रममादो तद्द्वितीयसुरतस्य बभूव ॥ १४ ॥ आस्तृतेऽभिनवपल्लवपुष्पैरप्यनारततराभिरताभ्य । दीयते स्म शयितु शयनीये न क्षण क्षणदयापि वधूभ्य ॥ १५ ॥ उपबर्हमम्बुजदृशो निज भुज विरचय्य वक्षसि गण्डमण्डले । निजसीव सन्निधिनिधाय सादरं स्वपिति सर्वाङ्गनिकराम्बुजो दुग ॥ १६ ॥



करकिसलय धूत्वा धूत्वा विमार्गति वाससी क्षिपति सुमनोमालाशेषं प्रदीपशिखा प्रति । स्थगयति मुहु पत्युर्नेत्रे विहस्य समाकुला सुरतविरतौ रम्या तन्वी मुहुर्मुहुरीक्षते ॥ १७ ॥ सुरतविरतक्रीडावेशश्रमस्पृहस्तया रहसि गलित तन्व्या प्रातु न पारितमंशुकम् । रतिरसजडैरङ्गैरङ्गे पिधातु मशक्तया प्रियतमतनौ सर्वाङ्गीण प्रविष्टमधृष्टया ॥ १८ ॥ प्रियकृतपटस्तेयव्रीडाविलम्बनविह्वला किमपि कृपणालापा बाला विलोक्य ससम्भ्रम । अपि विचलिते स्कन्धावारे गते सुरताहवे त्रिभुवनमहाधन्वी स्थाने न्यवर्तत मन्मथ ॥ १९ ॥ शयानसोत्तान हृदि निहितवक्षोरुहभरा तिरश्चीने वक्त्रे निबिडकलितास्मीयवदना । समाकम्प्योरुभ्यामतिदृढतर मर्स्थियुगल सपिलम्भोजाक्षी शिथिलभुजबन्धेयमधुना ॥ २० ॥ मुख जृम्भारम्भि भ्रमरति मदामोदलहरी दृशोलन्द्रामार स्फुरति विगलत्यङ्गलतिका । त्वमेताहक्कान्ति कमलमुखि धन्यैव नितरामसौ धन्यो यस्ते सकलरजनीं जागरयिता ॥ २१ ॥ प्रियाया प्रत्यूषे गलितकबरीबन्धन विधावुदञ्चद्दोर्वल्लीदरदलितचेलाञ्चलमुर । धनाकूते पश्यत्यथ मयि समन्दाक्षिवलित नमन्त्या यद्रूप नहि लिखितुमीशो मनसिज ॥ २२ ॥ रतान्ते प्राणेशे वसनमददाने क्षणमपि स्मिताया याचन्त्या वितर मम चेल गुणनिधे । सरोष पश्यन्त्या किमपि च हसन्त्या परिचलन्नमन्त्यास्तद्रूप न हि लिखितुमीशो मनसिज ॥ २३ ॥ शान्ते मन्मथ सगरे रणभृता सत्कारमातन्वती वासोऽदाज्जघनस्य पीन कुचयोर्हारं भुज कुण्डलम् । बिम्बोष्ठस्य च वीटिका सुनयना पाण्यो रणत्कङ्कणे पञ्चालम्बिनि केशपाशनिचये मुक्तो हि बन्धक्रम ॥ २४ ॥ नेपथ्यादपि राजते हि नितरां व्यालुप्तभूषा तनु सम्भोगश्रममीलित विजयते चक्षु कटाक्षादपि । गाढालिङ्गनकौतुकादपि नव दोयतिविसंसन प्रीत्यालापरसादपि प्रियतम मौन कुरङ्गीदृश ॥ २५ ॥ निर्वृत्ते सुरतोत्सवे बहुविधे जातेऽधिकेऽङ्गक्लमे तल्पे स्वेदजलार्द्रचन्दनमये सिंचिन्हृतिसम्बरे । सान्द्रस्नेहवशाद्विरोधविषयव्यासङ्गजिज्ञालनोदंपत्यो स्मरपक्षरातुरतया भूयोऽपि जाता स्पृहा ॥ २६ ॥ मुक्ताभूरानिर्दुबिम्बमधरी व्यालीन तारै नम स्मारं चापमपेतचापल्मभूदिन्दीवरं मुद्रित । व्यालीन कम्बकण्ठकण्ठीनिर्दमन्दारिमन्दित निष्कम्प सावकारि चमत्कृता मामृत जातेऽत्र किम् ॥ २७ ॥ नीवी सदमन कचे नियमन श्रोणीतले पातन नि श्वासाम्यमन मुखे ममभरनत्याहतिभूषणे । ध्यान प्रेमणि धारणा स्तनतटे तन्व्या समाधि प्रिये निर्वेदादिव किं रतान्तसुषमा सर्वाङ्गयोगोत्सव ॥ २८ ॥ निर्लेनै कुचकुड्मलै कच

मरस्तत्याज बन्धं ययौ काञ्ची निर्गुणता निरञ्जनदशा दृग्भ्यां समासादिता । नीरागोऽधरपल्लवश्च गुरुणा केनापि गौराङ्गि ते शङ्के शम्बरशासनोपनिषदा तत्त्वावबोधः कृतः ॥ २९ ॥ तन्द्रातुन्दिलशोणलोचनयुगं दत्ताङ्कदन्तच्छदं पर्यस्तालकवल्लि घर्मपटलप्रोद्भिन्नपत्रावलि । जृम्भोज्जृम्भितसीधुसौरभमिलद्भृङ्गीभिरङ्गीकृतस्तोत्रं शसति वृत्तमेन रजनीवृत्तान्तमेणीदृशः ॥ ३० ॥ स्वामिन्भङ्गुरयालकं सतिलकं भालं विलासिन्कुरु प्राणेश त्रुटितं पयोधरतटे हारं पुनर्योजय । इत्युक्त्वा सुरतावसानसमये सपूर्णचन्द्रानना स्पृष्टा तेन तथैव जातपुलका प्राप्ता पुनर्मोहनम् ॥ ३१ ॥ व्यालोलः केशपाशस्तरलितमलकैः स्वेदलोलौ कपोलौ क्लिष्टा बिम्बाधरश्रीः कुचकलशरुचा हारिता हारयष्टिः । काञ्ची काचिद्गताशां स्तनजघनपदं पाणिना छादयन्ती भूषाहीनापि काचित्प्रियहृदयमहो प्रीणयत्येव मुग्धा ॥३२॥ सव्यासव्योरबाहुव्यतिकरमधुरं कूर्परन्यस्तशीर्षं ससक्तास्याब्जयुग्मश्वसितहृतचलच्चारुनासाविभूषम् । भूयो निद्रातिरेकात्क्रमशिथिलभुजाश्लेषदत्तावकाशोच्छ्वासोदश्चत्कुचाग्रप्रतिहतहृदयं शेरतेऽमी रतान्ते ॥ ३३ ॥ व्यामिश्रैकैकबाहु प्रगलितपृथुलैकैकचारूरुकाण्डं दृष्ट्वा दष्टाधरोष्ठं दरशिथिलतनुश्लेषमालिङ्ग्य कान्ताम् । श्वश्वच्छ्वासवेगस्फुरितगुरुकुचद्वन्द्वसंघृष्टवक्षाः श्रान्तः शेते रतान्ते सुखमिह सुकृती लीलया कामिलोकः ॥ ३४ ॥

## चन्द्रास्तसमयवर्णनम्

कलङ्कदाशो गगनाम्बुराशौ प्रसार्य चन्द्रातपतन्तुजालम् । तमोऽम्बुमीनाँल्लघु सन्निगृह्य चन्द्रप्लवस्तच्चरमाब्धिमेति ॥ १ ॥ असौ हि दत्त्वा तिमिरावकाशमस्तं व्रजत्युन्नतकोटिरिन्दुः । जलावगाढस्य वनद्विपस्य तीक्ष्णं विषाणाग्रमिवावशिष्टम् ॥ २ ॥ धूर्तेन तारावलितण्डुलानामङ्केन च श्रीफलपल्लवेन । अभ्यर्च्य जामेश्वरमिन्दुबिम्बं निसर्जयत्येष नभोमुनीन्द्रः ॥ ३ ॥ मन्दमग्निर्मधुरर्यमोपलाः दर्शितश्वयथु यामवत्तमः । दृष्टयस्तिमिरजं सिषेविरे दोषमोषधिपतेरसंनिधौ ॥ ४ ॥ अरुणकिरणजालैरन्तरिक्षे गतर्क्षे चलति शिशिरवाते मन्दमन्दं प्रभाते । युवतिजनकदम्बे नाथमुक्तौष्ठबिम्बे चरमगिरिनितम्बे चन्द्रबिम्बं ललम्बे ॥ ५ ॥ जरठ इव मरालो जर्जरामैर्मयूखैः स्खलति शिशिरभानुः पश्चिमाम्भोधिपारे । क्षयगरत इवाभूत्तत्र तत्रान्तरिक्षे विरलविरलभासः किं च तारा लुठन्ति ॥ ६ ॥ चरमगिरिखुरलीचङ्क्रमकण्डूयनेन स्वपिति सुखमिदानीमन्तरिन्दोः कुरङ्गः । परिणतरविगर्भव्याकुला पौरुहूती दिगपि घनकपोतीहुंकृतैः कुप्यतीव ॥ ७ ॥ उदयमुदितदीप्तिर्याति यः संगतौ मे पतति न वरमिन्दुः सोऽपरामेष गत्वा । स्मितरुचिरिव सद्यः साभ्यसूयं प्रभेति स्फुरति विशदमेषा पूर्वकाष्ठाङ्गनायाः ॥ ८ ॥ नवकुमुदवनश्रीहासकेलिप्रसङ्गादधिकरुचिरशेषामप्युषां जागरित्वा । अयमपरदिशोऽङ्के मुञ्चति स्रस्तहस्तः शिशयिषुरिव पाण्डुम्लानमात्मानमिन्दुः ॥ ९ ॥ सपदि कुमुदिनीभिर्मीलितं हा क्षपापि क्षयमगमदपेतास्तारकास्ताः समस्ताः । इति दयितकलत्रश्चिन्तयन्नङ्गमिन्दुर्वहति कृशमशेषं भ्रष्टशोभं शुचेव ॥ १० ॥ प्रकटमलिनलक्ष्मा मृष्टपत्रावलीकैरधिगतरतिशोभैः प्रत्युषःप्रोषितश्रीः । उपहसित इवासौ चन्द्रमाः कामिनीनां परिणतशरकाण्डापाण्डुभिर्गण्डभागैः ॥ ११ ॥ विकसितमुखीं रागासङ्गाद्गलत्तिमिरावृतिं दिनकरकरस्पृष्टामैन्द्रीं निरीक्ष्य दिशं पुरः । जरठलवलीपाण्डुच्छायो भृशं कलुषान्तरः श्रयति हरितं हन्त प्राचेतसीं तुहिनद्युतिः ॥ १२ ॥ नक्षत्रक्षितिनायकोऽयमधुना रुद्धः प्रभातागमे ससाध्वेन बलीयसातिमहसा रोषारुणज्योतिषा । भ्रश्यद्ध्वान्तशिरोरुहा प्रविगलत्तारालिहारावलीमादाय क्षणदा प्रिया क्षितिधरं पाश्चात्यमारोहति ॥ १३ ॥ सख्युः सानुरागं स्वकरपरिचयप्राप्तभूरिप्रसादा या पूर्वा भुक्तपूर्वा रविकरकलिता तामुदीक्ष्यामृतांशुः । निस्तेजाः पश्चिमाब्धौ प्रविशति हि सतां दुःसहो मानभङ्गः किं वक्तव्यं सितांशोः स तु सकलसतां मण्डलस्यापि नेता ॥ १४ ॥

## मध्यरात्रक्रीडावर्णनम्

शमितनिखिलदीपे सुप्तनिद्रालुलोके रतपरवशचित्ता मध्यरात्रे विबुद्धाः । प्रथमसुरतखिन्ना मुग्धिका बोधयन्तो बहुदृढपरिरम्भैः कामुकाः खेदयन्ति ॥ १ ॥ अनुनयमगृहीत्वा व्याजसुप्ता पराची रुतमथ कृकवाकोस्तारमाकर्ण्य कल्ये । कथमपि परिवृत्ता निद्रयान्धा किलैषा मुकुलितनयनैवाश्लिष्यति प्राणनाथम् ॥ २ ॥ चिररतिपरिखेदप्राप्तनिद्रासुखानां चरममपि शयित्वा पूर्वमेव प्रबुद्धाः । अपरिचलितगात्राः कुर्वते न प्रियाणामशिथिलभुजचक्राश्लेषभेदं तरुण्यः ॥ ३ ॥ वदनशशिनि स्पर्शे शीतादिवागतवेपथुः स्तनयुगलके भ्रान्त्वा तुङ्गे निविष्ट इव भ्रमात् । ज्वलितमदनाङ्गारे तन्व्यास्ततो जघनस्थले सपुलकजलः पत्युः पाणिर्विलीन इवाभवत् ॥ ४ ॥ रतिकृति गते मायानिद्रां

१ शिवम् २ मन्दीभूतमग्निम्, पक्षे,-रोगविशेष ३ धूमकन्ध ४ शूककान्ता ५ पुष्टवम्, पक्षे-रोगविशेष- ६ आध्मानम्, पक्षे,-रोगविशेष ७ मन्दत्वम्; पक्षे-चेषत्व ८ हस्त

१ सशशलाञ्छनम् २ चन्द्र- ३ नक्षत्राणाम्, पक्षे,-द्विजानाम् ४ नायक ५ निमेषमुद्री ६ प्रभाते

दिन्दुपादान्हवींषि । अरुणकिरणवह्नौ कन्यका पौरुहूती हरिदपि विमकार्षीत्तारकालाजहोमम् ॥ ३१ ॥ कुमुदवनमपश्रि श्रीमदम्भोजखण्डं त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः । उदयमहिमरश्मिर्याति शीतांशुरस्तं हतविधिलसितानां ही विचित्रो विपाकः ॥ ३२ ॥ लुलितनयनताराः क्षामवक्त्रेन्दुबिम्बा रजनय इव निद्राक्लान्तनीलोत्पलाक्ष्यः । तिमिरमिव दधानाः स्रंसिनः केशपाशानवनिपतिगृहेभ्यो यान्त्यमूर्वारवध्वः ॥ ३३ ॥ शिथिलयति सरागो यावदर्को नलिन्याः कमलमुकुलनीवीग्रन्थिमुद्रां करेण । प्रविकसदलिमाला गुञ्जितैर्मञ्जुशब्दा जनयति मुदमुच्चैः कामिना कामिनीव ॥ ३४ ॥ नमसि विरलतारा मौक्तिकानीव भान्ति स्फुटतरमयमस्तक्ष्माधरं चुम्बतीन्दुः । रविरुदयधरित्रीधारिमूर्धानमेतु हृदयमनु नितान्तोल्लासमङ्गीकरोति ॥ ३५ ॥ अभूत्प्राची पिङ्गा रसपतिरिव प्राश्य कनकं गतच्छायश्चन्द्रो बुधजन इव ग्राम्यसदसि । क्षणात्क्षीणास्तारा नृपतय इवानुद्यमपरा न दीपा राजन्ते द्रविणरहितानामिव गुणाः ॥ ३६ ॥ इतः शुक्ला चन्द्रद्युतिभिरिह रक्तारुणकरैस्तमिस्त्रैरप्यन्तः स्खलितगतिभिर्मेचकरुचिः । प्रभातश्रीरेषा विलसति पुरस्ता सुकृतिना मिमङ्क्षूणां जह्नुघुमणिविधिजासगम इव ॥ ३७ ॥ तमोभिः पीयन्ते गतनयति पीयूषवपुषि ज्वलिष्यन्मार्तण्डोपलपटलधूमैरिव दिशः । सरोजानां कर्षन्नलिमयमयस्कान्तमणिवत्क्षणादन्तःशल्यं तपति पतिरधामि न रुचाम् ॥ ३८ ॥ इतः पौरस्त्यायां ककुभि विवृणोति क्रमदलत्तमिस्रामर्माणं किरणकलिकामम्बरमणिः । इतो निष्क्रामन्ती नवरतिगुरोः प्रोञ्छति वधूः स्वकस्तूरीपत्राङ्कुरमकरिकामुद्रितमुरः ॥ ३९ ॥ द्रुमाः पाण्डुप्राया धृतनिबिडगर्भाः स्त्रिय इव प्रफुल्लास्ते कुन्दा नृपतिकृतमाना इव जनाः । पिको मन्दं मन्दं हृदि मदननामानि जपति प्रमोरम्भे पूर्वापरिचितसमाः कविरिव ॥ ४० ॥ विरलविरलीभूतास्तारा कलौ सुजना इव व्यपसरति च ध्वान्तं चित्तात्सतामिव दुर्जनः । मन इव मुनेः सर्वत्रापि प्रसन्नमभून्नभो विगलति निशा क्षिप्रं लक्ष्मीरनुद्यमिनामिव ॥ ४१ ॥ व्रजत्यपरवारिधिं रजतपिण्डपाण्डुः शशी न भान्ति जलबुद्बुदद्युतिसपत्निकास्तारकाः । कुरण्टकविपाण्डुरं दधति धाम दीपाङ्कुराश्चकोरनयनारुणा भवति दिक्च सौत्रामणी ॥४२॥ अथ मृदुमृणालिनीननविलासनैहामिकस्त्विषां विततये पतिं सपदि दृश्यमाना निजा । स्तनौ पुलकयन्ति चोत्पलदृशां प्रियोरःस्थले विपर्ययितवृत्तयो घुसृणपङ्कपत्राङ्कुराः ॥ ४३ ॥ जृम्भारम्भप्रविततदलोपान्तजालप्रविष्टैर्हस्तैर्भानोर्नृपतय इव स्पृश्यमाना विबुद्धाः । स्त्रीभिः सार्धं घनपरिमलस्तोकलक्ष्याङ्गरागा मुञ्चन्त्येते विकचनलिनीगर्भशय्यां द्विरेफाः ॥ ४४ ॥ य सैन्ये स्मरपार्थिवस्य विरहिमर्त्यार्थिनामग्रणीज्योत्स्नानिर्झरमुज्झति स्म जगतां यस्तापनिर्वापणम् । सोऽयं तारकनायकः विमपरं शृङ्गारसञ्जीवनं जातः प्रष्ठपरागपाण्डुरजरत्कूष्माण्डपिण्डाकृतिः ॥ ४५ ॥ ये कुण्ठीकृतवल्लभप्रणतयः शर्वैरनङ्गस्य ये न प्रापाश्च निशीथिनीपतिकरैः शैथिल्यवीथीमपि । ते नि शङ्कविटङ्कतालुतुमुलप्रोतप्लुतप्लावितैश्छिन्नाः कुक्कुटकूजितैर्मृगदृशां मानमहग्रन्थयः ॥४६॥ कान्ते जग्मुषि ताम्रचूडरटितं श्रुत्वा प्रबुद्धा जैवात्किंचिद्विलसवदिष्टमुख प्रविकसदृष्ट्या गवाक्षाध्वना । सत्रासेन समीरिता प्रियतमप्रेम्णावरुद्धा शनैरुत्थानोपनिवेशनानि कुरुते तल्पे मुहुः पांसुला ॥ ४७ ॥ निर्यान्त्या रतिवेश्मनः परिणतप्रायां विलोक्य क्षपां गाढालिङ्गनचुम्बनानि बहुशः कृत्वाप्यसंतुष्टया । एकं भूमितले निधाय चरणं तल्पे प्रेङ्खल्यापरं तन्वङ्ग्या परिवर्तिताङ्गलतया प्रेयाञ्शिरं चुम्बितः ॥ ४८ ॥ पद्मिन्याः सकलां विधाय विकलां ताराधिपः सपदं तत्प्रेयस्युदयोन्मुखे सति स्वबुद्धिमतामाश्रितः । ताराः स्वस्य कैरविकृष्य सहसा गच्छन्नितोऽस्ताचलं लग्ना काश्चन तां प्रभाकरकरे पश्यन्परिम्लायति ॥ ४९ ॥ एते केतकधूलिधूसररुचः शीतद्युतेरंशवः प्राप्ताः संप्रति पश्चिमस्य जलधेस्तीरं जराजर्जराः । अप्येते विकसत्सरोरुहवनीहक्पातसंभाविता प्राचीरागमुदीरयन्ति तरणेस्तारुण्यभाजः कराः ॥ ५० ॥ सद्यः सघटमानकोकमिथुनव्याजेन पीनस्तनद्वन्द्वव्यञ्जितयौवनोज्ज्वलरुचो निर्माय दिक्कन्यकाः । दुर्दैवाक्षरमालिकामिव झटित्याकृष्य भृङ्गावलीं लक्ष्मीमम्बुजिनीजनस्य तनुते देवस्त्विषामीश्वरः ॥ ५१ ॥ उन्मीलति निशानिशाचरवधूप्रोच्चाटनामान्त्रिकायं सालससुप्तपङ्कजवनप्रोद्बोधवैतालिका । फुल्लत्पङ्कजकोशगर्भकुहरप्रोद्भूतभृङ्गावलीझङ्कारप्रणवोपदेशगुरवस्तीव्रद्युतेः रश्मयः ॥ ५२ ॥ एतत्तर्क्य चक्रवाकसुदृशामाश्वासनादायिनः प्रौढध्वान्तपयोधिमग्नजगतीदत्तावलम्बोत्सवाः । दीप्तांशोर्विकसन्ति दिङ्मृगदृशां काश्मीरपङ्कोदकर्व्योमसुक्षीचतुपः

१ गगनहोमम् २ घूकः ३ पक्ष्मलनयनकनीनिका ४ क्षाम इन्दोः पक्षेन्दुमण्डलं यासां ताः ५ शिथिलान् ६ राजगृहेभ्यः ७ वाराङ्गनाः ८ पारदः ९ वचोगरहिता १० रौप्यगोलकवत्पाण्डुरः ११ ऐन्द्री प्राचीत्यर्थः.

१ चान्द्रमसाम् २ श्रेष्ठः अग्रेसर इत्यर्थः ३ ज्योत्स्नाप्रवाहम् ४ शृङ्गारस्य जीवनौषधम् ५ जीर्णः ६ कुक्कुटारावम् ७ संभ्रमेण ८ प्राचीमुखम् ९ स्वैरिणी १० निर्गच्छन्त्या ११ केलिमन्दिरात् १२ प्रभातप्रायाम् १३ रात्रिम् १४ निधाय १५ वलिताङ्गवल्लिर्यया सा १६ प्रियतम: १७ हीनाम् १८ शोभाम् १९ शिलस्तम २० किरणैः २१ अक्षेन परस्पराभ्युक्षणरूपा क्रीडा

सरोरुहवनश्रीकेलिकारा करा ॥ ५३ ॥ द्विजैर्व्योम्नि पुराणमौक्तिकमिव च्छायैर्न्यित तारकव्योम्याशानमराळेन वपुषा मत्ताश्चकोराङ्गना । यान्तोऽस्ताचलचूर्णसुद्गसमधुच्छत्रच्छविश्चन्द्रमा प्राची बालबिडालोचनरुचा जाता च पान कदुर ॥ ५४ ॥ जाता पक्वपलाण्डुपाण्डुमधुरच्छायाकिरस्तारका प्राचीमङ्कुरयन्ति किंचन रुचो राजीवजीवातव । लूतानतुवितानतुल्यमितो बिम्ब दधत्सम्प्रति प्रातः प्रोषितरोचिरम्बरतलादस्ताचलं चन्द्रमा ॥ ५५ ॥ प्राची विभ्रमदर्पणेकाकमलिनीसनर्तिका सप्रति द्वे निशो रमणीय मम्बरमणेर्धाम्नुश्चरन्ते रुच । सूक्ष्मोच्छ्वासमपीडमुत्सुकतया समूय कोपाद्बहिर्निष्क्रामद्भ्रमराघसभ्रममरादम्भोजमुन्मुम्भते ॥५६॥ एकद्विप्रभृतिक्रमेण गणनामेषामिवास्त यना धुर्याणा समकोचयद्दशशतान्यम्भोनसनर्तिका । भूयोऽपि क्रमश प्रसारयति ता सम्यमनुघता सख्यातु सकुतूहलेन नलिनी मानो सहस्र करान् ॥ ५७ ॥ प्रत्यासन्नमुरन्द्रसिन्धुरशिरसिन्दूरसान्द्रारुणा यत्तेजस्तसरेणनो नियदित प्राचीनमाचिन्वते । शङ्के सप्रति यावदभ्युदयते तत्तुङ्गदङ्घ्रोन्मजारज्यद्बिम्बरजश्छटानळयितो देवस्त्विषामीश्वर ॥ ५८ ॥ प्रत्यग्रज्वलितैः पतङ्गमणिभिर्नीराजिता मानव साविना कुरुविन्दकन्दलरुच प्राचीमलङ्कुर्वते । प्रौढध्वान्तकपालितस्य वपुष च्छायाञ्चलेन क्षणादप्रक्षालितनिर्मल जगदहो निर्मोक्रमुन्मुञ्चति ॥ ५९ ॥ लोकोनिद्रनिदाघदीधितिमहस्सन्द्रायुचन्द्रातपास्ताय ते कुमो रथाङ्गगृहिणीगार्हस्थ्यगर्हाभिद । अद्यापि स्वकुलायशाखिशिरसि म्निन्धा रुवन्तो मुहुस्तूष्णी प्रत्यभिजानते बलिभुजो भीता स्वपूष्यम्बरान् ॥६०॥ प्राची यासकसज्जिकामुपगते भानौ दिशा वल्लभे पश्यैता रुचय पतङ्गरूपदामभिवनाडिपमा । लोकन्य क्षणदानिरङ्कुशरसा सभोगनिद्रागमा कोकद्वन्द्वमुमुद्वतीविपिनयोर्विश्लेषमातन्वते ॥ ६१ ॥ मालिन्य परिदृश्यते हिमरुचौ मन्दश्रियस्तारका शीता केचन सचरन्ति कमलामोदस्पृशो मारुता । आसीदन्ति च चक्रवाकमिथुनान्यन्योन्यमुत्कण्ठया पादैस्ताडितकैरवा मधुलिहो गच्छन्ति पद्माटवीम् ॥ ६२ ॥ किंचिद्विस्रस्तकेशा तनुसुमा श्रीढाविलोलांशुका हृष्टालसशरीरचदनया लोकैकनेत्रोत्सवा । सभोगश्रमनिद्रितैरयनैः सकेतनाल्गृहाद्भिस्नैरक्षायिताधनयना निर्यान्ति वाराङ्गना ॥ ६३ ॥ सौरभ्ये चलिते रसे विगलिते चाभाग्निर्गते म्लानानीय कुमुद्वतीमधुना मूर्च्छा परामृच्छति । तासु व्रीडस्य तमालिपी कमलिनी जाता प्रहासोन्मुखी इतीहीस्य विपत्तेरियनितो का वा न सतुष्यति ॥६४॥ आलोलैरतिपाटलैरथरमा विस्तारयद्भिर्दिनं नक्षत्रदुतिमालिकाद्विरचिपदा शङ्कन सूर्योदयम् । पुञ्जीभूय मयादिना घनमत्र मन्ये द्विरेफच्छला नीलश्रीन्नरोम्होदरकुर्यकोणान्तरे लीयते ॥ ६५ ॥ भिन्दानो मानिनीनां घनिषु रुषमयं हर्म्यवातायनेभ्यो वाचालत्वं ददान कविकुलु कवितासारविम सदधान । प्रातस्त्वन्दुर्यनाद स्थगयति गगन मासल पांसुलत्वादम्बलादुत्थिताना नवरकरिणा राङ्गुलानिश्रितेन ॥६६॥ कुर्वन्नामुमपृष्ठो मुखनिकटकटीस्कन्धरोमा तिरश्ची लोलेनाहन्यमानस्तुहिनकणमुचा चञ्चता केसरेण । निद्राकण्डूकषाय कपति निविडितश्रोत्रशुक्तिस्तुरङ्ग स्त्वङ्गत्पक्ष्माप्रलग्नप्रतनुतुषकणं कोणमक्ष्णो खुरेण ॥ ६७ ॥ श्वेकानुद्गीवयन्त पथि पथि कुल्टामानसं कम्पयन्त प्रस्थातार प्रभाते प्रियतनमबला गाढमालिङ्गयन्त । उच्चात्तु चाङ्गभङ्गी पुलकमलहशा कारयन्तो निशान्ते कूजाप कुक्कुटाना मधुमधुरसमारम्भगम्भीरधीरा ॥ ६८ ॥

---

## प्रभातवायुवर्णनम्

लता पुष्पवती स्पृष्ट्वा स्नातो विमलवारिणा । पुन सपर्कशङ्कीव मन्द चरति मारुत ॥ १ ॥ व्यङ्गलतिकामङ्गदयालुर्दक्षिणानिल । कथमुन्मूलयत्येष मानिनीमानवर्तान् ॥ २ ॥ सुरतमरश्रमरतगविलासिनीपानकेलिनर्जरित । पुनरपि विरहश्वासैर्मल्यमरुमातरीक्रियते ॥ ३ ॥ दरफुल्लकमलकाननसौरभसभारमन्थर पवन । दयितोरसि शयितामपि दयिता सनारयाचक्रे ॥ ४ ॥ मिश्रितकमलकुटुम्बा शिशिरितगगनगामिनीगनय । हरिनाहिमगिरिपादा प्रातरमी मातरिश्वान ॥ ५ ॥ आदाय बकुलगन्धानन्धी कुर्वन्पदे पदे भ्रमरान् । अयमेति मन्दमन्द कावेरीवारिपावन पवन ॥ ६ ॥ आहाय शनै पटीरपाटीरिह लाटीजनमानलुण्ठनाय । समुदेति मनोजराजधाटीपरिपाटीरनुरेष गन्धवाह ॥ ७ ॥ वासो विधूय स्तनयोरुष्या कल्लोलितां कबरीमुदस्य । अपारित प्रोञ्छति वारिधारा मुखे मृगाक्ष्या मुखती समीर ॥ ८ ॥ अरविन्दवृन्दमकरन्दतुन्दिलो मरुदेति मन्दमिह मन्दराचलात् । मुग्धा तनात मुद्दतीमतल्लिकाकबरीपरीमलझरीपरीवृत ॥ ९ ॥ उल्लासं कुन्तलानाम्य दुकूलमुदाम्य बाहुर्लताकम्पाम्बरस्य । मेदाम्बुसिक्तनना स्पृहयति यस्मै तस्मै नम सुरभिलोम मरुद्यानिलाय ॥ १० ॥ चोळाङ्गनाकुचनिचोलमनुर्गतो द्राविडीविरलकुन्तलकम्पनोढ । लाटीललाटतलयोरथ नानमोऽन्य कुन्दारविन्दवनबन्धुरुपैति वायु ॥ ११ ॥ वैमानिको नवदुकूलधमानचाटवीपरिणिलन्दमगनुमेय । आयाति सोऽयमस्सोदितमारमासीन्मायवलपुनरुपवनमुपसार ॥ १२ ॥ मन्दानिलोऽसि मुखतः तनिता तमाल्यसल्लाभुखानयनपर्ने

मपाकरोति । भूयोऽभिलाषजननी पुनरन्यथैव खेदापनोदनकला मलयानिलस्य ॥ १३ ॥ विकचकमलगन्धैरन्धयन्भृङ्गमाला सुरभितमकरन्द मन्दमावाति वात । प्रमदमदनमाद्यद्यौवनोद्दामरामारमणरभसखेदस्वेदविच्छेददक्ष ॥ १४ ॥ स्तनपरिसरभागे दूरमावर्तमाना स्फुटतनिमनि मध्ये किंचिदेव स्खलन्त । वपुरलघुनितम्बाभोगरुद्धा वधूना निधुवनरसखेदच्छेदिन प्राहुवाता ॥ १५ ॥ दरविगलितमल्लीवल्लिचञ्चत्परागप्रकटितपटवासैर्वासयन्काननानि । इह हि दहति चेत केतकीगन्धबन्धु प्रसरदसमबाणप्राणवद्गन्धवाह ॥ १६ ॥ सललितमल्कानां वल्लरीर्नर्तयन्तो मधुसुरभिमुखाम्भोजोच्छ्वासगन्धानुबन्धा । नवतररतभाजा योषिता स्वेदबिन्दून्सतृष इव पिबन्तो वान्ति मन्द समीरा ॥ १७ ॥ उषसि मलयवासी जालमार्गप्रविष्टो विकचकमलरेणु व्याकिरन्मोहचूर्णम् । सपदि शमितदीपो वायुचोरो वधूना हरति सुरतखेदस्वेदमुक्ताफलानि ॥ १८ ॥ कुसुमपरिमलेनामोदितालिर्लतानां वलितकिसलयाना लास्यलीलोपदेष्टा । लुलितकमलवृन्द शीकरासारवोढा मृदुमलयसमीरो वाति वैमातिकोऽयम् ॥ १९ ॥ विलुलितकमलौघ कीर्णवल्लीवितान प्रतिवनमवधूताशेषशाखिप्रसून । क्वचिदयमनवस्थ स्थास्नुतामेति वायुर्वनकुसुमविमर्दोद्गन्धिवेश्मान्तरेषु ॥ २० ॥ पुरातनपरीमलप्रकरमेदुरा मारुता न वान्ति मुकुलीभवत्कुसुमगर्भलीना इव । चरन्ति नवसौरभा पुनरमी समीराङ्कुरा सजृम्भणसरोजिनीसरसिजात्समुत्का इव ॥ २१ ॥ अमी तटसमीपनिर्झरतरङ्गरिङ्गत्पयोजडीकृतपटीरभूरुहकुटीरसचारिण । मनो विधुरयन्ति मे मलयमेखलामेदुराद्भुरसदवनप्रियप्रियतमारुता मारुता ॥ २२ ॥ लताकुञ्जे गुञ्जन्मदवदलिपुञ्ज चपलयन्समालिङ्गन्नङ्ग द्रुततरमनङ्ग प्रबलयन् । मरु मन्द मन्द दलितमरविन्द तरलयन्रजोवृन्द विन्दन्किरति मकरन्द दिशि दिशि ॥ २३ ॥ अनन्यक्षुण्णश्रीर्मलयवनजन्मायमनिलो निपीय स्वेदाम्बु स्मरमकरसमुत्काविभ्रमम् । विदर्भाणा भूरि प्रियतमपरीरम्भरभसप्रसङ्गादङ्गानि द्विगुणपुलकासङ्गि तनुते ॥ २४ ॥ वृथा धूलीधारा परिकिरसि वाला प्रययसे नवावेग कोऽयं पवन तव हा नन्वसमये । रतान्तश्रान्ताभि स्तिमितनयनान्ताभिरनिशं स्मृतो यत्कान्ताभिर्न सुलभनर क्वापि च भवान् ॥ २५ ॥ वारंवार धुनतु सुमितारण्यरेवातटे वा सेनापुण्यपरिणतमिद तावक तर्कयामि । यत्त्वा मत्वान्तिकमुपगतं कामयानाभिरामा रामा स्वैरं कुचकलशानो वक्षमुत्सारयति ॥ २६ ॥ चूतश्रेणीररिमल्लमुपश्रमरीभिरनुयाता भूयो भूय कुवलयकुटीकोटरे लीयमाना । मन्द मन्द सुरतविरतौ वान्ति सीमन्तिनीना गण्डाभोगश्रमजललवग्राहिणो गन्धवाहा ॥ २७ ॥ रामाणा रमणीयवक्त्रशशिन स्वेदोदबिन्दुप्लुतो व्यालोलालकमञ्जरी प्रचलयन्धुन्वन्नितम्बाम्बरम् । प्रातर्वाति मधौ प्रकामविकसद्राजीवराजीरजःपुञ्जामोदमनोहरो रतिरसग्लानिं हरन्मारुत ॥ २८ ॥ उल्लिख्य कुसुमासवै कुमुदिनीं राजप्रिया पुष्पिणीमालिङ्गन्निशि निर्भयं परिचय कुर्वन्पुन पैङ्कजै । यावत्पङ्कजसौरभसनखिल गृहंल्लघु प्रस्थितस्तावत्कल्य उपस्थिते मरुदय विभ्यन्मयाद्धावति ॥ २९ ॥ अथोत्सङ्गवसद्भुजगकवलक्लेशादिवेशाचलप्रालेयप्लवनेच्छयानुसरति श्रीखण्डशैलानिल । किं च स्निग्धरसालमौलिमुकुलान्यालोक्य हर्षोदयादुन्मीलन्ति कुहू कुहूरिति कलोत्तालाः पिकाना गिर ॥ ३० ॥ नारीणा मृगनाभिकुङ्कुमरसप्रक्षालनश्यामलान्सभोगश्रमशीकरान्परिहरन्नाकम्पयन्कुन्तलान् । पुष्पामोदमनोरमान्विगलितानम्भोजगन्ध वहन्प्रातस्त्य पवनो वहत्ययमल स्रान्तमनोदमद ॥ ३१ ॥ प्रात सीमन्तिनीना निधुवनलुलितान्ससमन्केशपाशानुन्मीलत्पङ्कजान्त परिमलसुरभि स्मारयन्कामलीला । स्वच्छावश्यायबिन्दून्दिशि दिशि विकिरन्स्थूलमुक्ताफलाभान्धूलीभि केतकीना धवलितभुवनो वाति मन्दं नभस्वान् ॥३२॥ धुन्वानाश्चन्दनालीं बकुलमुकुलजा धूलिमुद्धूलयन्तश्चुम्बन्तश्चूतयष्टी परिमलबहलाश्चम्पकान्कम्पयन्त । आपदायमसीमातटघटितघटीयन्त्रनिर्मुक्तवारा धारामाधारयन्त प्रमशमपटवो वान्त्यमी गन्धवाहा ॥ ३३ ॥ कुप्यच्छङ्करबाहुप्रकरनियमिताशेषलेखाम्बुजाक्षीशापक्षीणा क्षरन्त क्षणपरिकलिता केकिना कामिनीभि । कार्णाटीनामकाण्डे मृगमदमसृण केशपाश स्पृशन्त पम्पासपातलम्पा मलयजमरुतो जातकम्पा पतन्ति ॥ ३४ ॥ कृत्वा कार्णाटकान्ता कुचकनकगिरिप्रान्तसचारलीला सम्पामासाद्य पम्पावपनि वनभुवि क्षिप्तमल्लीरजस्का । आकर्षन्त पुरस्तान्निगडमिव कल्पयानपुष्पधयालीं धावन्त्येते मदान्धा मदननरपते सिन्धुरा गन्धवाहा ॥ ३५ ॥ एते पाटीरवाटीनवविटपनटीनाट्यशिक्षातिदक्षा दोलाखेलत्पुरन्ध्रीघनजघनकणिकाजालपातिप्रनादा । सौरभ्यादापतद्भिर्मधुकरपटलै पृष्ठतोऽनुप्रयाता कामाप्ते स्वार्थलाभ्या पथिककुलवधूबद्धवैरा समीरा ॥ ३६ ॥ एष क्रीडान्तताम्यत्कुसुमपुरवधूवक्त्रसौरभ्यलुब्धनिद्राजडाना रसितमनुसरो द्राघयन्षट्पदानाम् । आबाल

१ मत्त- पक्षे,-सेचक- २ चन्द्रमिथान् पक्षे-चन्द्रमिथाम् ३ पुष्पगुल्मम् पक्षे,-रजसन्नान् ४ विमन्दै, पक्षे,-विटै- ५ पक्ष- समीरस कल्मोऽस्त्येव स वनन् ६ सम्वरम् ७ प्रभाते ८ अक्षिमल्लनकक् ९ प्रमरदन्

ज्ञानुकूलस्खलितविचलिद्वेणिभागानुधावद्दोर्दण्डोद्धूयमान मरजयविरदाडम्बरो मातरिश्वा ॥ ३७ ॥ कावेरीवारिवेल्लल्लहरिपरिकरक्रीडनक्लान्तशान्तस्फीतश्रीखण्डखण्डभ्रमणभरभवद्भूरिसौरभ्यगर्भाः । चोलस्त्रीचीनचेलाञ्चलचलनकलाक्रान्तकान्ताकुचान्ता यान्ति प्रेमाधिकेलीकलितरवधूवक्त्रपद्मसमीराः ॥ ३८ ॥ चञ्चत्कर्पूरचौरा मलयगिरिगुहाभावहानाद्दयाता मदानन्दैर्मिलिन्दैरहमहमिकयानुद्रवद्भिर्घ्रायमाणाः । कावेरीवारिसेका निरवधितरलत्तीरवानीरसिक्ता मुक्तार्द्राः स्वेदनिद्रालव इव पवनास्तालरम्या विशन्ति ॥ ३९ ॥ लीलादोलाधिखेलारसरभसरलन्मन्द्रालचेलाञ्चलाना चोलीनामापिबन्तो मृगमदसुरभिस्वेदबिन्दून्मन्दान् । लोलन्तः केरलीना कुचकलशलसत्कुङ्कुमालेपनेषु क्षिप्यन्तो मालवीना मलयजमधुरा कञ्चुकीर्यान्ति वाताः ॥ ४० ॥ भृङ्गाली कण्ठमालाः स्फुटितकमलिनीधूलिभिर्धूसराङ्गाः श्वश्वन्तश्चन्दनस्थालघुतरलहरीशीकरासारलोलाः । अङ्गादङ्गं व्रजन्तो विकरितनिलमस्केतकीमालतीना मोदन्ते मन्दमन्दं मलयगिरिदरीगर्भतो वातपोताः ॥ ४१ ॥

---

## सूर्योदयवर्णनम्

ततः कोकनदच्छाया बन्धूककुसुमप्रभः । उदयाद्रिशिरोरत्नमुदियौ तेजसां निधिः ॥ १ ॥ निजानुरागवृता प्राचीं चुम्बत्यर्केऽतिरागिणीम् । लज्जयेव ययौ क्वापि श्यामा मीलितलोचना ॥ २ ॥ निसर्गसौरभोद्भ्रान्तभृङ्गसंगीतशालिनी । उदिते वासराधीशे स्मेराजनि सरोजिनी ॥ ३ ॥ पुरुहूतदिगङ्गनाप्रसूता रविमुद्दाममसूत चिराद्रुपेतम् । अलिनो नलिनोदराद्विमुक्ताः प्रियबाहुद्वयबन्धनात्स्रगोढाः ॥ ४ ॥ उदयति विततोर्ध्वरश्मिरज्जावहिमरुचौ हिमधाम्नि याति चास्तम् । वहति गिरिरयं विलम्बिघण्टाद्वयपरिवारितवारणेन्द्रलीलाम् ॥ ५ ॥ घटमानकोकयुगमाभृशं कैरविणीतयोजनयनानिन्दितं । परिचुम्बतीदमरुणप्रभाधरं रविरेष वासवनितामुखं मुहुः ॥ ६ ॥ आगत्य संप्रति वियोगविसंस्थुलाङ्गीमम्भोजिनीं क्वचिदपि क्षपितत्रियामाम् । एतां प्रसादयति पश्य शनैः प्रभाते तन्वङ्गि पादपतनेन सहस्ररश्मिः ॥ ७ ॥ उद्भिद्कोकनदरेणुपिशङ्गिताङ्गा गायन्ति मत्तमधुपा गृहदीर्घिकासु । एतच्चकास्ति च रवेर्नवबन्धुजीवपुष्पच्छदाभमुदयाचलचुम्बि बिम्बम् ॥ ८ ॥ भूयो निपीय लवणाम्बुधिमाप्रभातं पुञ्जीभवत्युदयतस्तपनच्छलेन । और्वाग्निरम्बरपयोनिधिमप्यपातुं लीनोद्बुदुदकदम्बमिति प्रतीमः ॥ ९ ॥ अयमुदयति मुद्राभञ्जनः पद्मिनीनामुदयगिरिवनालीबालमन्दारपुष्पम् । विरहविधुरकोकद्वन्द्वबन्धुर्बिभिन्दन्कुपितकपिकपोलक्रोडताम्रस्तमांसि ॥ १० ॥ कनन्मरविदीर्णध्वान्तकुम्भीन्द्रकुम्भात्तुहिनकणमिषेण क्षिप्तमुक्ताप्ररोहः । अयमुदयधरित्रीधारिमूर्धाधिरूढो नयनपथमुपैति भानुमत्केसरीन्द्रः ॥ ११ ॥ नवकनकपिशङ्गं वासराणां विधातुः ककुभि कुलिशपाणेर्भाति भासां वितानम् । जनितभुवनदाहारम्भमम्भांसि दग्ध्वा ज्वलितमिव महाब्धेरूर्ध्वमौर्वानलार्चिः ॥ १२ ॥ विततपृथुवरत्रातुल्यरूपैर्मयूखैः कलश इव गरीयान्दिग्भिराकृष्यमाणः । कृतचपलविहङ्गालापकोलाहलाभिर्जलनिधिजलमध्यादेष उत्तार्यतेऽर्कः ॥ १३ ॥ पयसि सलिलराशेर्नक्तमन्तर्निमग्नः स्फुटमनिशमनापि ज्वालया वाडवाग्नेः । यदयमिदमिदानीमङ्गमुद्यद्दधाति ज्वलितखदिरकाष्ठाङ्गारगौरं विवस्वान् ॥ १४ ॥ अनुहिनरुचिनासौ केवलं नोदयाद्रिः क्षणमुपरिगतेन क्ष्माभृतः सर्व एव । नवकरनिकरेण स्पष्टबन्धूकसूनस्तबकरचितमेते शेखरं बिभ्रतीव ॥ १५ ॥ उदयशिखरिशृङ्गप्राङ्गणेष्वेव रिङ्गन्सकमलमुखहासं वीक्षितः पद्मिनीभिः । विततमृदुकराग्रः शब्दयन्त्या वयोभिः परिपतति दिवोऽङ्के हेलया बालसूर्यः ॥ १६ ॥ क्षणमयमुपविष्टः क्ष्मातलन्यस्तपादः प्रणतिपरमवेक्ष्य प्रीतमह्नाय लोकम् । भुवनतलमशेषं प्रत्यवेक्षिष्यमाणः क्षितिधरतटपीठादुत्थितः सप्तसप्तिः ॥ १७ ॥ उदयमयते दिङ्मालिन्यं निराकुरुतेतरां नयति निधनं निद्रामुद्रां प्रवर्तयति क्रियाः । रचयतितरां स्वैराचारप्रवर्तनकर्तनं बत बत लसत्तेजःपुञ्जो विभाति विभाकरः ॥ १८ ॥ अयं गन्तुं मृणालिनीनवविलासवैहासिकः स्थिरा चितपते पति सपदि दृश्यमानाकृतिः । स्तनौ पुलकयन्ति चोलवधूवरा प्रियोरःस्थले निपर्यमितवृत्तयो घुसृणपङ्कपङ्काङ्कुराः ॥ १९ ॥ आयान्त्या दिवसश्रियः पदतलस्पर्शानुमानादिव व्योमाशोकतरोर्नवीनकलिकागुच्छः समुज्जृम्भते । आतन्वन्भुवनत्रयीभ्रमभवा याशाकुरङ्गीदृशां मौलिं तरुणप्रभारक्तकरम्भो उज्जृम्भते ॥ २० ॥ एतत्तर्कय चक्रवाकहृदयाश्वासाय तारागणग्रासाय स्फुरदिन्दुमण्डलपरीहासाय भासां निधिः । दिक्कान्ताकुचकुम्भकुङ्कुमरसन्यासाय पङ्केरुहोल्लासाय स्फुटवैरवनत्रासाय विधोन्नते ॥ २१ ॥ मौल्यं कौस्तुभलोचनाप्रविगलत्तारान्धकारालकी म्लायच्चन्द्रमुखी विचित्रमुक्तमवेणी सन्ध्याम्बरान् । प्राप्तमन्यरविरोचिषिव पङ्कजकुसुमरागं करिकम्बिभिर यामिनीमनुगतप्रमोदिनीवत्सम ॥ २२ ॥ यास्यामि रजनी प्रमाणमनयं प्रोद्धृत्य लोकत्रयीमाविश्य रविबिम्बमम्बरतले गीर्वाणसे बान्धवाः । तारावलीनिवसन मूल्यं मुचिन पताकेन मम दर्शनीयमनिशासहजबान्धव

पुर स्थाप्यते ॥ २३ ॥ मञ्जिष्ठारुणदीधितिर्मधुकरैर्मङ्गल्यगीतिस्तत कोकाह्लादपटु सरोरुहवन प्रीत्या समुज्जृम्भयन् । लोकालोककर करैश्च तमसा स्तोम समुत्सारयन्नारोहत्युदयाचल रविरय बन्धूकगुच्छच्छवि ॥२४॥ कीलाले कुङ्कुमाना सकलमपि जगज्जालमेतन्निषिक्त मुक्ताश्रो मत्तभृङ्गा विघटितकमलक्रोडकारागृहेभ्य । उत्सृष्ट गोसहस्र किमुत कलकल श्रूयते च द्विजाना मार्यैर्द्वारकाणा हरिद्वयहरिता सूयते पुनरवम् ॥ २५ ॥

## नायिकानिर्गमनम्

निद्रानिवृत्तावुदिते द्युरत्ने सखीजने द्वारपद पराप्ते । श्लथीकृताश्लेषरसे भुजङ्गे चचाल नालिङ्गनतोऽङ्गना सा ॥ १ ॥ गुरुत्रासादासादितमनदुपालम्भवचसा मुहु स्मार स्मार कथमपि निशीथे समगमम् । इदानीं मुञ्च त्व दयित पुनरेष्यामि समभूदुव कालीनोऽय चटुलचटकालीकलकल ॥ २ ॥ मृद्वाया प्रातर्लसदलसदोर्वल्लिवलय गलन्मल्लीदाम्न शिथिलकबरीबन्धसमये । प्रियालोके घूर्णन्नयनमसृणस्मेरमधुरो मुखे जृम्भारम्भी जयति कृशमिन्दीवरदृश ॥ ३ ॥ प्राणेशेन प्रहितनखरेष्वङ्गकेषु क्षपान्ते जातातङ्का रचयति चिर चन्दनालेपनानि । धत्ते लाक्षामसकृदधरे दन्तदन्तावघाते क्षामाङ्गीय चकितमभितश्चक्षुषी विक्षिपन्ती ॥ ४ ॥ धम्मिल्ल परिबध्नती नखमुखै सीमन्तमातन्वती पश्यन्ती नखरोल्लसन् कुचयुगे सव्यापसव्य मुहु । नाभीसीमनि कुञ्चिताङ्गुलिदल नीवीभर रुन्धती शय्यागारविनिर्गतापि हृदयाद्यापि निष्क्रामति ॥५॥ एषा का भुक्तमुक्ता विलुलितवसना खेदलम्भान्तवक्त्रा प्रत्यूषे याति बाला मृग इव चकिता सर्वत शङ्कयन्ती । केनेद वक्त्रपद्म ह्यधरमधुरस खण्डित केन पीत स्वर्ग केनाद्य भुक्तो हरनयनहतो मन्मथ कस्य तुष्ट ॥६॥

## सभोगाविष्करणम्

रतखिन्नतनु प्रातर्लज्जानम्रमुखीं वधूम् । स्मरन्तीं रात्रिचरित दृष्ट्वाप्नोति न को मुदम् ॥ १ ॥ राजते राजरामाया एष बिम्बाधरव्रण । सुधा पीतेव कान्तेन तच्छेषोऽय स मुद्रित ॥ २ ॥ आच्छादयसि किं मुग्धे वस्त्रेणाधरपल्लवम् । खण्डिता एव शोभन्ते वीराधरपयोधरा ॥ ३ ॥ सखि दशनक्षतमधरे किं गोपयसे प्रयत्नेन । सप्रति रजनिरहस्य नयनालस्य निवेदयति ॥ ४ ॥ संवरणाय वधूटी बहुपरिपाटी करोतु किं तेन । सप्रति रजनिरहस्य नयनालस्य निवेदयति ॥ ५ ॥ उपसि परिवर्तयन्त्या मुक्तादामोपनीतना नीतम् । पुरुषायितवैदग्ध्य लज्जावति केन कलित

१ पयोभि- २ देवतानाम् ३ आनशरीरविकृति

ते ॥ ६ ॥ चन्दन स्तनतटेऽधरबिम्बे यावक घनतर च सपत्न्या । प्रातरीक्ष्य कुपितापि मृगाक्षी सागसि प्रियतमे परितुष्टा ॥ ७ ॥ दर्पणेषु परिभोगदर्शिनी पृष्ठत प्रणयिनो निषेदुष । प्रेक्ष्य बिम्बमनुबिम्बमात्मन कानि कानि न चकार लज्जया ॥ ८ ॥ किमपि कान्तभुजान्तरवर्तिनी कृतवती यदिय कलभाषिणी । तदनुकृत्य गिरा गुरुसनिधौ ह्रियमनीयत सारिकया वधू ॥ ९ ॥ धन्यासि या कथयसि प्रियसगमेऽपि नर्मोक्तिचाटुकशतानि रतान्तरेषु । नीवीं प्रति प्रणिहिते तु करे प्रियेण सख्य शपामि यदि किंचिदपि स्मरामि ॥ १० ॥ बहु जगद पुरस्तात्तस्य मत्ता किलाह चकर च किल चाटु प्रौढयोषिद्वदस्य । विदितमिति सखिभ्यो रात्रिवृत्त विचिन्त्य व्यपगतमदयाह्नि व्रीडित मुग्धवध्वा ॥ ११ ॥ शशिपदमणिमाल चन्द्ररेखाभिराम ललितपुलकजाल लक्ष्यबिन्दुप्रवालम् । वपुरनवममुष्या वक्ति कस्यापि यून सुरतकलहलीलासूक्ष्ममार्गाभियोगम् ॥ १२ ॥ प्रभाते पृच्छन्तीरलुरहस्यवृत्त सहचरीर्न वोढा न व्रीडामुकुलितमुखीय मुखयति । लिखन्तीना पत्राङ्कुरमनिशमस्यास्तु कुचयोश्चमत्कारो गूढ करजपदमासा कथयति ॥ १३ ॥ क्वचित्ताम्बूलाक्त क्वचिदगुरुपङ्काङ्कमलिन क्वचिच्चूर्णोद्गारी क्वचिदपि च सालक्तकपद । वलीभङ्गाभोगैरलकपतितै शीर्णकुसुमै स्त्रिय सर्वावस्थ कथयति रत प्रच्छदपट ॥ १४ ॥ नखक्षतमुर स्थले ऽधरदले रदस्य व्रण च्युता बकुलमालिका विमलिता च मुक्तावली । रतान्तसमये मया सकलमेतदालोकित स्मृति क्व च रति क्व च क्व च तवालि शिक्षाविधि ॥ १५ ॥ वक्षस्ते दृढलग्नकङ्कणचङ्कणमध्यान्तर कण्ठ कङ्कण रत्नकोटिस्खलनासुव्यक्तमुद्राङ्कित । व्यत्यासव्यतिषञ्जितश्च तिलक फाले तवाय सखे कस्याश्चित्प्रकटीकरोति सुरत प्रौढिं परा सुभ्रुव ॥ १६ ॥ तस्या पाटलपाणिजाङ्कितमुरो निद्राकषाये दृशौ निर्धूताधरशोणिमा विलुलितस्रस्तस्रजो मूर्धजा । काञ्चीदाम दरश्लथाञ्चलमिति प्रातर्निरातैर्दृशो रेभि कामशरैस्तदद्भुतमहो पत्युर्मन कीलितम् ॥ १७ ॥ यद्रात्रौ रहसि व्यपेतविनय वृत्त रमात्मामिनोरन्योन्य शयनीयमीहितरसासिप्रवृत्तस्पृहम् । तस्यानन्दमिलद्दृशो कथमपि स्मृत्वा गुरूणा पुरो हासोद्भेदनिरोधमन्थरमिलत्तारं कथचित्स्थितम् ॥ १८ ॥ दम्पत्योर्निशि जल्पतोर्गृहशुकेना कर्णित यद्वचस्तत्प्रातर्गुरुसंनिधौ निगदतस्तस्यातिमात्र वधू । कर्णालम्बितपद्मरागशकल विन्यस्य चञ्च्वा पुटे व्रीडार्ता प्रकरोति दाडिमफलव्याजेन वाग्बन्धनम् ॥१९॥ धन्यास्ता सखि योषित प्रियतमे सर्वाङ्गलग्नेऽपि या प्रागल्भ्य रचयति

पादानत प्रत्याख्यानपराङ्मुख प्रियतमो गन्तु प्रवृत्तो ऽधुना। सव्रीडैरलसैर्निरन्तरलुठद्बाष्पाकुलैर्लोचनै श्वासोत्कम्प कुच निरीक्ष्य सुचिर जीवाशया वारित ॥ २३ ॥ कान्तो यास्यति दूरदेशमिति मे चिन्ता परं जायते लोका नन्दकरो हि चन्द्रवदने वैरायते चन्द्रमा । किं चाय वितनोति कोकिलकलालापो विलापोदय प्राणानेव हरन्ति हन्त नितरामारामन्दानिला ॥ २४ ॥

## सखीं प्रति नायिकावाक्यम्

वयो नव्य स्वान्त विषयतरल हन्त सतत प्रियो दूरे देशे जनकनगर दुर्लभतरम् । जनश्चाय दुष्टो भृशमिदमनर्थाय सतत कथकार पार कथय सखि यामोऽस्य वयस ॥ १ ॥ आयाता जलदावली सरभस विद्युत्समालिङ्गिता शैलाना परित सशब्दमहिमुक्श्रेणी नरीनृत्यति । एव सत्यपि हन्त सप्रति पतिर्देशान्तर प्रस्थितस्तद्गु ख विनिवेदयता सखि कथ कल्याधुनाम्रे मया ॥ २ ॥

## नायकं प्रति नायिकोक्तयः

गच्छ गच्छसि चेत्कान्त पन्थान सन्तु ते शिवा । ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान् ॥ १ ॥ न चिरं मम तापाय तव यात्रा भविष्यति । यदि यास्यसि यातव्य- मलमाशङ्कयापि ते ॥ २ ॥ सहिष्ये विरह नाथ देहदृश्या- ञ्जन मम । यदक्तनेत्रा कन्दर्प प्रहर्तु मा न शक्ष्यति ॥ ३ ॥ प्राणेश विज्ञप्तिरिय मदीया तत्रैव नेया दिवसा कियन्त । सम्प्रत्ययोग्यस्थितिरेष देश करा हिमांशोरपि तापयन्ति ॥ ४ ॥ एतस्मिन्सहसा वसन्तसमये प्राणेश देशान्तर गन्तु त्व यतसे तथापि न भय तापात्प्रपद्येऽधुना । यस्मा त्कैरवसारसौरभमुच साक सरोवायुना चान्द्री दिक्षु विजृ- म्भते रजनिषु स्वच्छा मयूखच्छटा ॥ ५ ॥ लोलैर्लोचन वारिभिश्च शपथै पादप्रणामै परैरन्यास्ता विनिवारयन्ति कृपणा प्राणेश्वर प्रस्थितम् । पुण्याह व्रज मङ्गल सुदिवस प्रात प्रयातस्य यत्स्नेहोचितमीहित प्रिय मया त्व निर्गत श्रोष्यसि ॥ ६ ॥ मास्त्राश्रुततरुर्गुरुर्मनसिज न्कोऽप्येष भृङ्ग- स्समो मन्दो गन्धवह सितो मलयजो दोषाकरो माधव । अङ्गारो नवपल्लव परभृतो विज्ञो गुरोपाज्ञया निर्यातोऽसि विचारिता कथममी क्रूरा मह्ला न त्वया ॥ ७ ॥ मा याहीत्यपमङ्गल व्रज किल स्नेहेन शून्य वचस्तिष्ठेति प्रभुता यथारुचि कुरुष्वैपाप्युदासीनता । नो जीवामि विना त्वयेति वचन संभाव्यते वा न वा तन्मां शिक्षय नाथ यत्समु चित वक्तु त्वयि प्रस्थिते ॥ ८ ॥

## नायकं प्रति सखीवाक्यम्

किमिति सखे परदेशे गमयसि दिवसान्धनाशया लुब्ध । वर्षति मौक्तिकनिकर तव भवनद्वारि काञ्चनी वल्ली ॥ १ ॥ या बिम्बौष्ठरुचि क्व विद्रुममणि स्वप्नेऽपि ता लब्धवान् हासश्रीसदृशैस्तपोभिरपि किं मुक्ताफलैर्भूयते । तत्कान्ति शतशोऽपि वह्निपतनैर्हेम्न कुत सेत्स्यति त्यक्त्वा रत्नमयीं प्रयासि दयिता कस्मै धनायाध्वग ॥ २ ॥ उग्रदर्हिषि दुर्द रारवपुषि प्रक्षीणपान्थायुषि श्च्योतद्विपुषि चन्द्ररुड्मुषि सखे हसद्विषि प्रावृषि । मा मुञ्चोरुकुचान्तसततगलद्बाष्पाकुला बालिका काले कालकरालनीलजलदध्यालुप्तभास्वत्त्विषि ॥ ३ ॥ मा गच्छ प्रमदाप्रिय प्रियशतैरभ्यर्थितस्त्व मया बाला प्राङ्गणमागतेन भवता प्राप्नोत्यवस्था पराम् । किं चास्या कुचभारनि सहतरैरङ्गैरनङ्गाकुलैस्त्रुट्यत्कञ्चुकजालकै रनुदिन नि सूनमसद्ग्रहम् ॥ ४ ॥

## सखायं प्रति नायकोक्तिः

शेते शीतकरोऽम्बुजे कुवलयद्वन्द्वाद्विनिर्गच्छति स्वच्छा मौक्तिकसहतिर्धवलिमा हैमीं लतामञ्चति । स्पर्शोत्पङ्कज कोशयोरभिनवा यान्ति स्रज क्लान्ततामेषोत्पातपरम्परा मम सखे यात्रास्पृहा हन्तति ॥ १ ॥

## नायिकां प्रति सखीवाक्यम्

वारंवारमुदश्रु लोचनयुग पर्याकुल जायते नि श्वासा विरमन्ति न क्षणममी व्याश्लिष्टदन्तच्छदा । प्रस्थानश्रवणा दपि प्रियतमस्याहो तवेय स्थितिर्नो जाने निलय गते तु दयिते कीदृग्दशामाप्स्यसि ॥ १ ॥

## देशान्तरोपगतो नायकः

विद्वक्षमाण क्षणमायताक्ष्या मुखाम्बुज मञ्जुलमम्ब नीन । मुहूर्तमात्र सुमुहूर्तकाले सर्वकाल कल्याधकार ॥ १ ॥ निशम्य केलीभवनोपकण्ठे मञ्जीरमञ्जुध्वनिमम्ब नीन । यथा तथा बद्धकथावशेष समापयामास सभ सुहृद्भि ॥ २ ॥ मुख प्रियाया समुदीक्षमाण कान्तो दिनस्या- न्तमपेक्षमाण । मुहुर्मुहुर्व्योमनि तिग्मभानौ निवेशयामास विलोचने स्वे ॥ ३ ॥

## वसन्तवर्णनम्

मधुपराजिपराजितमानिनीजनमन सुमन सुरभिश्रियम् । अभृत वारितवारिजविप्लव स्फुटितताम्रतताम्रवन जगत्

१ मयूरपङ्क्ति– २ स्मरणसंभूतनेन गमननिषेधो गर्भीकृत

१ विस्तीर्णम्

